# अथर्व्ववेदीयमुण्डकोपनिषत् ।






परमहंसपरिव्राजकाचार्य्यश्रीमच्छङ्करभगवत्कृत-

भाष्यसहिता

श्रीमच्छुद्धानन्दभगवत्पूज्यपादशिष्यभगवदानन्द-

ज्ञानकृतभाष्यटीका

विभूषिता ।

श्रीयुक्त नवचन्द्रशिरोमणिना परिशोधिता ।

श्रीभुवनचन्द्रवसाकेन प्रकाशिता

( ८ नं० निमतलाघाट ष्ट्रीट् )

( द्वितीयसंस्कृता )


कलिकातानगरे

१६ नं० नूतन पगयापटी

नारायणयन्त्रे

मुद्रिता ।

इराजी १८८० सन १२८६ साल ।

# अथर्ववेदीयमुण्डकोपनिषद्भाष्यम् ।

ओं ब्रह्मणे नमः ॥ ओं ब्रह्मा देवानामित्याद्याथर्वणोपनिषत् । अस्याश्च विद्यासम्प्रदायकर्त्तृत्वपारम्पर्यलक्षणसम्बन्धमादावेवाह स्वयमेव श्रुत्यर्थम् । एवं हि महद्भिः परमपुरुषार्थसाधनत्वेन गुरुणाऽऽयासेन लब्धा विद्येति श्रोतृबुद्धिप्ररोचनाय विद्यां महीकरोति । स्तुत्या प्ररोचितायां हि विद्यायां सादराः प्रवर्त्तेयुरिति । प्रयोजनेन तु विद्यायाः

---

अथर्ववेदीयमुण्डकोपनिषद्भाष्यटीका ।

ओं ब्रह्मणे नमः ।

यदक्षरं परं ब्रह्म विद्यागम्यमितीरितम् ।
यस्मिन् ज्ञाते भवेज्ज्ञातं सर्वं तत् स्यामसंशयम् ॥

ब्रह्मोपनिषद्गर्भोपनिषद्राद्या आथर्वणवेदस्य बह्व्य उपनिषदः सन्ति । तासां शरीरकेऽनुपयोगित्वेनाव्याचिख्यासितत्वाददृश्यत्वादि गुणकः धर्मोक्तेरित्याद्यधिकरणोपयोगितया मुण्डकस्य व्याचिख्यासितस्य प्रतीकमादत्ते । ब्रह्मा देवानामित्याद्याथर्वणोपनिषदिति । व्याचिख्यासितेति शेषः । ननु इयमुपनिषन्मन्त्ररूपा मन्त्राणाञ्चेषेत्वेत्यादीनां कर्म्मसम्बन्धेनैव प्रयोजनवत्त्वम् । एतेषाञ्च मन्त्राणां विनियोजकप्रमाणानुपलम्भेन तत्सम्बन्धासम्भवान्निष्प्रयोजनत्वाद् व्याचिख्यासितत्वं न सम्भवतीति शङ्कमानस्योत्तरम् । सत्यं कर्म्मसम्बन्धाभावेऽपि ब्रह्मविद्याप्रकाशनसामर्थ्याद्विद्यया सम्बन्धो भविष्यति । ननु

साधनसाध्यलक्षणसम्बन्धमुत्तरत्र वक्ष्यति भिद्यते हृदयग्रन्थि-रित्यादिना। अत्र चापरशब्दवाच्यायामृग्वेदादिलक्षणायां विधिप्रतिषेधमात्रपरायां विद्यायां संसारकारणाविद्यादि-दोषनिवर्त्तकत्वं नास्तीति स्वयमेवोक्ता परापरेति विद्याभेद-करणपूर्वकमविद्यायामन्तरे वर्त्तमाना इत्यादिना। तथा परप्राप्तिसाधनं सर्वसाधनसाध्यविषयवैराग्यपूर्वकं गुरुप्रसाद-

---

विद्यायाः पुरुषकर्तृत्वात् तत्प्रकाशकत्वेऽस्या उपनिषदोऽपि पौरुषेयत्वप्रसङ्गात् पाक्षिकपुरुषदोषजत्वशङ्कयाऽप्रामाण्याद् व्याचिख्यासितत्वं नोपपद्यत इत्याह। अस्यायेति। विद्यायाः सम्प्रदायप्रवर्त्तका एव पुरुषा न तूत्प्रेक्षया निर्मातारः सम्प्र-दायकर्तृत्वमपि नाधुनातनं येनानाश्वासः स्यात् किन्त्वनादि-पारम्पर्यागतम्। ततोऽनादिप्रसिद्धब्रह्मविद्याप्रकाशनसमर्थोप-निषदः पुरुषसम्बन्धः सम्प्रदायकर्तृत्वपारम्पर्यलक्षण एव तमा-दायेत्याहेत्यर्थः। विद्यासम्प्रदायकर्तृत्वमेव पुरुषाणाम्। यथा विद्यायाः पुरुषसम्बन्धस्तथैवोपनिषदोऽपि। यदि पुरुषसम्बन्धो विवक्षितः पौरुषेयत्वपरिहाराय तर्हि तथाभूतसम्बन्धाभिधाय-केनान्येन भवितव्यं स्वयमेव स्वसम्बन्धाभिप्रायकत्वे आत्माश्रय-प्रसङ्गादित्याशङ्क्याह स्वयमेव स्तुत्यर्थमिति। विद्यास्तुतौ तात्-पर्यान्न स्ववृत्तिदोष इत्यर्थः। स्तुतिर्वा किमर्थेत्यत आह श्रोतृबुद्धीति। प्रवर्त्तयेदिति पाठो युक्तः। वृतधातोरात्मनेपद-त्वाद्विद्याया यत् प्रयोजनं तदेवास्या उपनिषदोऽपि प्रयोजनं भविष्यतीत्यभिप्रेत्य विद्यायाः प्रयोजनसम्बन्धमाह एव प्रयोजनेन इतीति। .सम्बन्धं करणाद्वितिनिर्वचनविशेषपात्त्विरेतामपरार्थत्वे तदिवृत्तेः सम्भवात् तदर्थं ब्रह्मविद्याप्रकाशकोपनिषद्व्याख्या-

म्यां ब्रह्मविद्यामाह परीक्ष्य लोकानित्यादिना। प्रयोजनञ्चासकृद् ब्रवीति ब्रह्मविद् ब्रह्मैव भवतीति। परामृतात् परिमुच्यन्ति सर्व इति च। ज्ञानमात्रे यद्यपि सर्वाश्रमिणामधिकारस्तथापि सन्न्यासनिष्ठैव ब्रह्मविद्या मोक्षसाधनं न कर्मसहितेति भैक्षचर्य्याञ्चरत: सन्न्यासयोगादिति च ब्रुवन्

---

तच्छेत्याशङ्क्याह। अत्र चेति। संसारकारणमविद्यादिदोषस्तन्निवर्त्तकत्वमपरविद्याया: कर्म्मात्मिकाया न सम्भवत्यविरोधात्। न हि शतशोऽपि प्राणायामं कुर्वत: शुक्तिदर्शनं विना तदविद्यानिवृत्तिर्दृश्यते। ततोऽपरविद्याया: संसारकारणाविद्यानिवर्त्तकत्वं नास्तीति स्वयमेवोक्तां ब्रह्मविद्यामाहेति सम्बन्ध:। किञ्च परमपुरुषार्थसाधनत्वेन ब्रह्मविद्याया: परविद्यात्वं निकृष्टसंसारफलत्वेन च कर्म्मविद्याया अपरविद्यात्वम्। तत: समाख्याबलादपरविद्याया मोक्षसाधनत्वाभावोऽवगम्यत इत्यभिप्रेत्याह। परापरेति। यत्त्वाहु: कर्म्मजड़ा: केवलब्रह्मविद्याया: कर्त्तृसंस्कारत्वेन कर्म्माङ्गत्वात् स्वातन्त्र्येण पुरुषार्थसाधनत्वं नास्तीति तदनन्तरश्रुत्यैव निराकृतमित्याह। तथा परप्राप्तिसाधनमिति। ब्रह्मविद्याया: कर्म्माङ्गत्वे कर्म्मणो निन्दा न स्यात् न खल्वङ्गविधानाय प्रधानं विनिन्द्यते। अत्र तु सर्वसाध्यसाधननिन्दया तद्विषयवैराग्याभिधानपूर्वकं परप्राप्तिसाधनं ब्रह्मविद्यामाह। विषयवैराग्यपूर्वकमिति। अतो ब्रह्मविद्याया: स्वप्रधानत्वात् प्रकाशकोपनिषदां न कर्त्तृस्तावकत्वमित्यर्थ:। यद्युपनिषदां स्वतन्त्रब्रह्मविद्याप्रकाशकत्वं स्यात्तर्हि तदध्येतृणां सर्वेषामेव किमिति ब्रह्मविद्या न स्यादित्याशङ्क्याह। गुरुप्रसादलभ्यामिति। गुर्वनुग्रहादिसंस्काराभवान्

दर्शयति। विद्याकर्म्मविरोधाच्च। न हि ब्रह्मात्मैकत्व-दर्शनेन सह कर्म्म स्वप्नेऽपि सम्पादयितुं शक्यम्। विद्यायाः कालविशेषाभावानियतनिमित्तत्वात् कालकर्म्म सङ्कोचानुपपत्तिः।* यत्तु गृहस्थेषु ब्रह्मविद्यासम्प्रदायकर्तृत्वादिलिङ्गं न तत्स्थितन्यायं बाधितुमुत्सहते। न हि विधिशतेनापि तमःप्रकाशयोरेकत्र सम्भवः शक्यते कर्तुं किमुत लिङ्गैः

---

सर्वेषा यद्यपि न भविष्यति तथापि विशिष्टाधिकारिणां भविष्यतीति भावः। ननु स्वतन्त्रा चेद् ब्रह्मविद्या तर्हि प्रयोजनसाधनं न स्यात्। सुखदुःखप्राप्तिपरिहारयोः प्रवृत्तिनिवृत्तिसाध्यतावगमात् तत्राह। प्रयोजनश्चेति। स्मरणमात्रेण विस्मृतसुवर्णलाभे सुखप्राप्तिप्रसिद्धेः रज्जुतत्त्वज्ञानमात्राच्च सर्पजन्यभयकम्पादिदुःखनिवृत्तिप्रसिद्धेश्च न प्रवृत्तिनिवृत्तिसाध्यत्वं प्रयोजनस्यैकान्तिकम् अतो विद्यश्च श्रुतिः प्रयोजनसम्बन्धं विद्याया असकृद् ब्रवीति। तस्मात् तत्प्रकाशकोपनिषदो व्याख्येयत्वं सम्भवतीत्यर्थः। यत्त्वाहुरेकदेशिनः स्वाध्यायाध्ययनविधेरर्थावबोधफलस्य त्रैवर्णिकाधिकारत्वादधीतोपनिषज्जन्यब्रह्मज्ञानेऽस्यैव सर्वेषामधिकारः। ततः सर्वाश्रमकर्म्मसमुच्चितैव ब्रह्मविद्या मोक्षसाधनमिति तत्राह। ज्ञानमात्र इति। सर्वस्वत्यागात्मकसन्यासनिष्ठैव परब्रह्मविद्या मोक्षसाधनमिति वेदो दर्शयति। तादृशसन्यासिनां च कर्म्मसाधनस्याभावाच्च कर्म्मासम्भवः। आश्रमधर्मोऽपि शमदमाद्युपबृंहितविद्यामिश्रितत्वमेव। तेषां शौचाचमनादिरपि तत्त्वतो नाश्रमधर्मो लोकसंग्रहार्थत्वात्। ज्ञानाभ्यासेनैवाऽपावनत्वनिवृत्तेः। न हि

केवलैरिति। एवमुक्तसम्बन्धप्रयोजनाया उपनिषदोऽल्पग्रन्थविवरणमारभ्यते। य इमां ब्रह्मविद्यामुपयन्त्यात्मभावेन श्रद्धाभक्तिपुरःसराः सन्तस्तेषां गर्भजन्मजरारोगाद्यनर्थपूगं निशातयति परं वा ब्रह्म गमयत्यविद्यादिसंसारकारणञ्चात्यन्तमवसादयति विनाशयतीत्युपनिषत्। उप-नि-पूर्वस्य सदेरेवमर्थस्मरणात्।

---

ज्ञानेन सदृशं पवित्रमिह विद्यते इति स्मरणात्। त्रिषवणस्नानविध्यादेरज्ञसन्न्यासिविषयत्वात्। अतः कर्मनिष्ठत्वेन साहित्यञ्ज्ञानस्य न कर्मणा इत्यर्थः। इतश्च न कर्मसमुचिता विद्या मोक्षसाधनमित्याह। विद्याकर्मविरोधाच्चेति। अकर्त्तृ ब्रह्म चास्मि करोमि चेति स्फुटो व्याघात इत्यर्थः। यदा ब्रह्मात्मैकत्वं विस्मरति तदोत्पन्नविद्योऽपि किं करिष्यति ततः समुच्चयः सम्भाव्य इति न वाच्यमित्याह। विद्याया इति। ननु गृहस्थानामङ्गिरःप्रभृतीनां विद्यासम्प्रदायप्रकर्त्तृत्वदर्शनाद् गृहस्थाश्रमकर्मभिः समुच्चयो लिङ्गादवगम्यत इत्याशङ्क्याह। यद्यपीति। लिङ्गस्य न्यायोपबृंहितस्यैव गमकत्वाङ्गीकारात् समुच्चये च न्यायाभावात् प्रत्युत विरोधदर्शनाच्च लिङ्गेन समुच्चयसिद्धिः। सम्प्रदायप्रवर्त्तकानाञ्च गार्हस्थ्यामासमात्रत्वानुसन्धानेन मुहुर्मुहुर्बाधात्।' यस्य मे नास्ति सर्वञ्च यस्य मे नास्ति किञ्च न। मिथिलायां प्रदीप्तायां न मे किञ्च न दह्यते इत्युद्गारदर्शनात् कर्माभासेन न समुच्चयः स्यात्तत्र च विधिर्न दृश्यते इति भावः। साधितं व्याख्येयत्वमुपसंहरति। एवमिति।

## अथर्ववेदीयमुण्डकोपनिषदारम्भः ।

॥ ओँ ॥ ब्रह्मा देवानां प्रथमः सम्बभूव विश्वस्य कर्त्ता भुवनस्य गोप्ता । स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह ॥ १ ॥

---

ब्रह्मा परिवृढो महान् धर्म्मज्ञानवैराग्यैश्वर्य्यैः सर्वानन्यानतिशयेनेति । देवानां द्योतनवतामिन्द्रादीनां प्रथमो गुणैः प्रधानः सन् प्रथमोऽग्रे वा सम्बभूवाभिव्यक्तः सम्यक् स्वातन्त्र्येणेत्यभिप्रायः । न तथा यथा धर्म्माधर्म्मवशात् संसारिणोऽन्ये जायन्ते । योऽसावतीन्द्रियोऽग्राह्य इत्यादि स्मृते । विश्वस्य सर्वस्य जगतः कर्त्तोत्पादयिता । भुवनस्योत्पन्नस्य गोप्ता पालयितेति विशेषणं ब्रह्मणो विद्यास्तुतये । स एवं प्रख्यातमहत्त्वो ब्रह्मविद्यां ब्रह्मणः परमात्मनो विद्यां ब्रह्मविद्यां येनाक्षरं पुरुषं वेद सत्यमिति विशेषणात् । परमात्मविषया हि सा । ब्रह्मणा वाऽग्रजेनोक्तेति ब्रह्मविद्या । तां सर्वविद्याप्रतिष्ठां सर्वविद्याभिव्यक्तिहेतुत्वात्

---

ननु कथमुपनिषच्छब्दप्रयोग इति शङ्कायामुपनिषच्छब्दवाच्यविद्यार्थत्वाल्लाक्षणिक इति दर्शयितु विद्याया उपनिषच्छब्दार्थत्वमाह । य इमामिति । आत्मभावेनेति प्रेमास्पदतयेत्यर्थः । अनर्थपूगं क्लेशसमूहं निशातयति शिथिलीकरोति अपरिपक्वज्ञानादि हितैर्जन्माभिर्मोक्षसम्भवादित्यर्थः । ज्ञानमप्रतिघं यस्य वैराग्यञ्च जगत्पते । ऐश्वर्य्यञ्चैव धर्म्मश्च सह सिद्ध

अथर्वणे यां प्रवदेत ब्रह्माथर्वा तां पुरोवाचाङ्गिरे ब्रह्मविद्याम्। स भारद्वाजाय सत्यवाहाय प्राह भारद्वाजोऽङ्गिरसे परावराम्॥ २॥

---

सर्वविद्याश्रयामित्यर्थः। सर्वविद्यावेद्यं वा वस्त्वनयैव विज्ञायत इति। येनाश्रुतं श्रुतं भवति अमतं मतमविज्ञातं विज्ञातमिति श्रुतेः। सर्वविद्याप्रतिष्ठामिति च स्तौति। विद्यामयाय ज्येष्ठपुत्राय प्राह। ज्येष्ठश्चासौ पुत्रश्चानेकेषु ब्रह्मणः सृष्टिप्रकारेष्वन्यतमस्य सृष्टिप्रकारस्य प्रमुखे पूर्वमथर्वा सृष्ट इति ज्येष्ठस्तस्मै ज्येष्ठपुत्राय प्राह॥ १॥

यामेतामथर्वणे प्रवदेत अवदत् ब्रह्मविद्यां ब्रह्मा तामेव ब्रह्मणः प्राप्तामथर्वा पुरा पूर्वमुवाचोक्तवानङ्गिरे अङ्गिर्नाम्ने ब्रह्मविद्याम्। स चाङ्गीर्भारद्वाजाय भारद्वाजगोत्राय सत्यवाहाय सत्यवाहनाम्ने प्राह प्रोक्तवान्। भारद्वाजोऽङ्गिरसे स्वशिष्याय पुत्राय वा परावरां परस्मात् परस्मादवरेण प्राप्तेति परावरा परावरसर्वविद्याविषयव्याप्तेर्वा तां परावरामङ्गिरसे प्राहेत्यनुषङ्गः॥ २॥

---

चतुष्टयमिति स्मरणाद्धर्मज्ञानवैराग्यैश्वर्यैः सर्वानन्यानतिक्रम्य वर्त्तत इति परिवृढत्वं सिद्धमित्यर्थः। योऽसावतीन्द्रियग्राह्यः सूक्ष्मोऽव्यक्तः सनातनः। सर्वभूतमयोऽचिन्त्यः स एष स्वयमुद्बभौ। स्वयमुद्भूतः शुक्रशोणितसंयोगमन्तरेणाविर्भूत इति स्मृतेः स्वातन्त्र्यं गम्यत इत्यर्थः। वाक्योत्थबुद्धिवृत्त्यभिव्यक्तं ब्रह्मैव ब्रह्मविद्या। तच्च ब्रह्म सर्वाभिव्यञ्जकम्। ततः सर्व-

शौनको ह वै महाशालोऽङ्गिरसं विधिवदुपसन्नः पप्रच्छ। कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति ॥ ३ ॥

---

शौनकः शुनकस्यापत्यं महाशालो महागृहस्थोऽङ्गिरसं भारद्वाजशिष्यमाचार्यं विधिवद्यथाशास्त्रमित्येतत्। उपसन्नः उपगतः सन् पप्रच्छ। शौनकाङ्गिरसोः सम्बन्धादर्वाग्विधिवद्विशेषणादुपसदनविधेः पूर्वेषामनियम इति गम्यते। मर्यादाकरणार्थं मध्यदीपकन्यायार्थं वा विशेषणम्। अस्मदादिष्वप्युपसदनविधेरिष्टत्वात् किमित्याह। कस्मिन्नु भगवो विज्ञाते नु इति वितर्के भगवो हे भगवन्! सर्वं यदिदं विज्ञेयम्। विज्ञातं विशेषेण ज्ञातमवगतं भवतीत्येकस्मिन् ज्ञाते सर्ववित् भवतीति शिष्टप्रवादं श्रुतवान् शौनकः तद्विशेषं विज्ञातुकामः सन् कस्मिन्निति वितर्कयन् पप्रच्छ। अथवा लोकसामान्यदृष्ट्या ज्ञात्वैव पप्रच्छ। सन्ति लोके सुवर्णादिसकलभेदाः सुवर्णत्वाद्येकत्वविज्ञानेन विज्ञायमाना लौकिकैः। तथा

---

विद्याश्रयत्वकतयाऽऽस्योयत इति सर्वविद्याश्रया अथर्वविद्याश्रया। अथवा सर्वविद्यानां प्रतिष्ठा परिसमाप्तिर्भवति यस्यामुख्यायां ज्ञातव्याभावात् सर्वविद्याप्रतिष्ठेत्याह। सर्वविद्यावेद्यं वेति ॥ १ ॥ २ ॥

प्रश्नबीजमाह। कस्मिन्निति। उपादानात् कार्यस्य पृथक्सत्त्वाभावादुपादाने ज्ञाते तत् कार्यं ततः पृथङ्नास्तीति ज्ञातं भवतीति सामान्यव्याप्तिमुद्दलादा पप्रच्छेत्याह अथ·

तस्मै स होवाच। द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति परा चैवापरा च॥४॥

---

किन्त्वस्ति सर्वस्य जगद्भेदस्यैककारणम्। यदेकस्मिन् विज्ञाते सर्वं विज्ञातं भवतीति। नन्वविदिते हि कस्मिन्निति प्रश्नोऽनुपपन्नः। किमस्ति तदिति तदा प्रश्नो युक्तः। सिद्धे ह्यस्तित्वे कस्मिन्निति स्यात्। यथा कस्मिन्निधेयमिति। नाचरबाहुल्यादायासभीरुत्वात् प्रश्नः सम्भवत्येव। किन्त्वस्ति तद्यस्मिन्नेकस्मिन् विज्ञाते सर्ववित् स्यादिति॥३॥

तस्मै शौनकायाङ्गिरा आह किलोवाच। किमित्युच्यते। द्वे विद्ये वेदितव्ये इति। एवं ह स्म किल यद्ब्रह्मविदो वेदार्थाभिज्ञाः परमार्थदर्शिनो वदन्ति। के ते इत्याह। परा च परमात्मविद्या। अपरा च धर्माधर्मसाधनतत्फलविषया। ननु कस्मिन् विदिते सर्ववित् भवतीति शौनकेन पृष्टं तस्मिन् वक्तव्येऽपृष्टमाह अङ्गिरा द्वे विद्ये इत्यादिना। एष दोषः क्रमापेक्षत्वात् प्रतिवचनस्य। अपरा हि विद्याऽविद्या सा निराकर्त्तव्या। तद्विषये हि विदिते न किञ्चित्तत्त्वं तो विदितं स्यादिति निराकृत्य हि पूर्वपक्षं पश्चात् सिद्धान्तो वक्तव्यो भवतीति न्यायात्॥४॥

---

वेति। प्रश्नाक्षरां यस्यामाक्षिप्य समाधत्ते। नन्वविदिते हीत्यादिना। किमस्ति तदिति प्रयोगेऽक्षरबाहुल्ये नायासः स्यात् तद्भीरुतया कस्मिन्नित्यक्षरसामञ्जस्य लाघवात् प्रश्न इत्यर्थः॥३॥४॥

तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो

---

तत्र का अपरेत्युच्यते। ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेद इत्येते चत्वारो वेदाः। शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमित्यङ्गानि षडेषाऽपरा विद्या। अथेदानीमियं परा विद्योच्यते यया तद्वक्ष्यमाणविशेषणमक्षरमधिगम्यते प्राप्यते। अधिपूर्वस्य गमेः प्रायशः प्राप्त्यर्थत्वात्। न च परप्राप्तेरवगमार्थस्य भेदोऽस्ति। अविद्याया अपाय एव हि परप्राप्तिर्नार्थान्तरम्। ननु ऋग्वेदादिबाह्या तर्हि सा कथं परा विद्या स्यान्मोक्षसाधनञ्च। या वेदबाह्याः स्मृतय इति हि स्मरन्ति। कुदृष्टित्वान्निष्फलत्वादनादेया स्यात्। उपनिषदाञ्च ऋग्वेदादिबाह्यत्वं स्यात्। ऋग्वेदादित्वे तु पृथक्करणमनर्थकम्। अथ परेति न वेद्यविषयविज्ञानस्य विवक्षितत्वात् उपनिषत्। वेद्याक्षरविषयं हि विज्ञानमिह परा विद्येति प्राधान्येन विव-

---

कल्पः सूत्रग्रन्थ। अनुष्ठेयक्रमः कल्प इत्यर्थः। अविद्याया अपगम एव परप्राप्तिरुपचर्यते। अविद्यापगमश्च ब्रह्मावगतिरेवेति व्याख्यातमस्माभि.। ज्ञातोऽर्थस्तज्ज्ञप्तिर्वा अविद्यानिवृत्तिरित्येतद्व्याख्यानावसरेऽधिगमशब्दोऽत्र प्राप्तिपर्याय एवेत्याह। न च परप्राप्तेरिति। साङ्गानां वेदानामपरविद्यात्वेनोपन्यासात्ततः पृथक्करणाद्वेदबाह्यतया ब्रह्मविद्याया. परत्वं न सम्भवतीत्याक्षिपति। नन्विति। या वेदबाह्याः स्मृतयो

ज्योतिषमिति। अथ परा यया तदक्षरमधि-
गम्यते ॥ ५ ॥

यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तद-

---

क्षितं नोपनिषच्छब्दराशिः। वेदशब्देन तु सर्वत्र शब्द-राशिर्विवक्षितः। शब्दराश्यधिगम्येऽपि यत्नान्तरमन्तरेण गुर्वधिगमनादिलक्षणं वैराग्यञ्च नाक्षराधिगमः सम्भवतीति पृथक्करणं ब्रह्मविद्यायाः परा विद्येति कथनञ्चेति ॥ ५ ॥

यथा विधिविषये कर्त्राद्यनेककारकोपसंहारद्वारेण वाक्यार्थज्ञानकालादन्यत्रानुष्ठेयोऽर्थोऽस्त्यग्निहोत्रादि-लक्षणो नथेह परविद्याविषये वाक्यार्थज्ञानसमकाल एव तु पर्यवसितो भवति। केवलशब्दप्रकाशितार्थज्ञानमात्रनिष्ठाव्यतिरिक्ताभावात्। तस्मादिह परां विद्यां सविशेषणेनाक्षरेण विशिनष्टि यत्तदद्रेश्यमित्यादिना। वक्ष्यमाणं बुद्धौ संहृत्य सिद्धवत्परामृश्यते। यत्तदिति। अद्रेश्यमदृश्यं सर्वेषां बुद्धीन्द्रियाणामगम्यमित्येतत्। दृशिर्बहिःप्रवृत्तस्य पञ्चेन्द्रिय-

---

याश्च काश्च कुदृष्टयः। सर्वास्ता निष्फलाः प्रेत्य तमो निष्ठा हि ताः स्मृता इति स्मृतेः। कुदृष्टित्वादनुपादेया स्यादित्यर्थः। विद्याया वेदवाह्यत्वे तदर्थानामुपनिषदामप्यृग्वेदादिबाह्यत्वं प्रसज्येतेत्यर्थः। वेदवाह्यत्वेन पृथक्करणं न सम्भवति। किन्तु वैदिकस्यापि ज्ञानस्य वस्तुविषयस्य शब्दराश्यतिरेकाभिप्रायेणेत्याह। न वेद्यविषयेति। वैराग्यञ्चेत्यत्र यत्नान्तरमिति शेषो द्रष्टव्यः ॥ ५ ॥

पाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं
यद्भूतयोनिं परिपश्यन्ति धीराः ॥ ६ ॥

द्वारत्वात्। अग्राह्यं कर्मेन्द्रियाविषयमित्येतत्। अगोत्रं गोत्रमन्वयो मूलमित्यनर्थान्तरम्। अगोत्रमनन्वयमित्यर्थः। न हि तस्य मूलमस्ति येनान्वितं स्यात्। वर्ण्यन्त इति वर्णा द्रव्यधर्माः स्थूलत्वादयः शुक्लत्वादयो वा। अविद्यमाना वर्णा यस्य तदवर्णमक्षरम्। अचक्षुः श्रोत्रं चक्षुश्च श्रोत्रञ्च नामरूपविषये करणे सर्वजन्तुना तेऽविद्यमाने यस्य तदचक्षुःश्रोत्रम्। यः सर्वज्ञः सर्वविदित्यादि चेतनावत्त्वविशेषणात् प्राप्तं संसारिणामिव चक्षुःश्रोत्रादिभिः करणैरर्थसाधकत्वं तदिहाचक्षुःश्रोत्रमिति वार्य्यते। पश्यत्यचक्षुः स शृणोत्यकर्ण इत्यादिदर्शनात्। किञ्च तदपाणिपादं कर्मेन्द्रियरहितमित्येतत्। यत एवमग्राह्यमग्राहकञ्च अतो नित्यमविनाशि। विभुं विविधं ब्रह्मादिस्थावरान्तप्राणिभेदैर्भवतीति विभुम्। सर्वगतं व्यापकमाकाशवत् सुसूक्ष्मं शब्दादिस्थूलत्वकारणरहितत्वात्। शब्दादयो ह्याकाशवाय्वा-

---

कर्मज्ञानादिलक्षणत्वाभिप्रायेण च पृथक्करणमित्याह। यथा विधिविषय इति। अप्राप्तप्रतिषेधप्रसङ्गाच्च प्रधानपरत्वमपि शङ्कनीयमिति मत्वाह। यः सर्वज्ञ इति। अगुणत्वादिति उपसर्जनरहितत्वादित्यर्थः। सर्वात्मकत्वाच्चेति हेतोरन्यातिरिक्तस्याभावाच्चेत्यर्थः। ब्रह्म न कारणं सहायशून्यत्वात् कुलालमात्रवदित्यस्यानैकान्तिकमुत्वर्णनाभिदृष्टान्तेन। ब्रह्म जगतो

यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति। यथा सतः पुरुषात् केशलोमानि तथाऽक्षरात् सम्भवतीह विश्वम् ॥७॥

दीनामुत्तरोत्तरं स्थूलत्वकारणानि तदभावात् सुसूक्ष्मम्। किञ्च तदव्ययम्। उक्तधर्मत्वादेव न व्येतीत्यव्ययम्। न ह्यनङ्गस्य स्वाङ्गापचयलक्षणो व्ययः सम्भवति शरीरस्येव। नापि कोशापचयलक्षणो व्ययः सम्भवति राज्ञ इव। नापि गुणद्वारको व्ययः सम्भवत्यगुणत्वात् सर्वात्मकत्वाच्च। यदेवं लक्षणं भूतयोनिं भूतानां कारणं पृथिवीव स्थावरजङ्गमानां परि सर्वत आत्मभूतं सर्वस्याक्षरं पश्यन्ति धीराः धीमन्तो विवेकिनः। ईदृगमक्षरं यया विद्ययाऽधिगम्यते सा परा विद्येति समुदायार्थः ॥ ६ ॥

भूतयोन्यक्षरमित्युक्तम्। तत्कथं भूतयोनित्वमित्युच्यते प्रसिद्धदृष्टान्तैः। यथा लोके प्रसिद्ध ऊर्णनाभिर्लूताकीटः किञ्चित्कारणान्तरमनपेक्ष्य स्वयमेव सृजते स्वशरीराव्यतिरिक्तान् तन्तून् बहिः प्रसारयति पुनस्तानेव गृह्णते च गृह्णाति स्वात्मभावमेवापादयति। यथा च पृथिव्यामोषधयो व्रीह्यादिस्थावरान्ताः स्वात्माव्यतिरिक्ता एव भवन्ति। यथा

नोपादानं तदभिन्नत्वात् स्वरूपस्येवेत्यनुमानान्तरस्यानैकान्तिकत्वमाह। यथा च पृथिव्यामिति। जगन्न ब्रह्मोपादानं तद्विलक्षणत्वात्। यद्यद्विलक्षणं तत्तदुपादानकं न भवति। यथा घटो न तन्तूपादानक इति। अस्य व्यभिचारमाह।

तपसा चीयते ब्रह्म ततोऽन्नमभिजायते।
अन्नात् प्राणो मनः सत्यं लोकाः कर्म्मसु चामृतम् ॥ ८ ॥.

---

सतो विद्यमानाज्जीवतः पुरुषात् केशलोमानि केशाश्च लोमानि च सम्भवन्ति विलक्षणानि। यथैतद्दृष्टान्तस्तथा, विलक्षणं सलक्षणञ्च निमित्तान्तरानपेक्षाद्यथोक्तलक्षणादक्षरात् सम्भवति समुत्पद्यत इह संसारमण्डले विश्वं समस्तं जगत्। अनेकदृष्टान्तो पादानान्तु सुखार्थप्रबोधनार्थम्। यद्ब्रह्मण उत्पद्यमानं विश्वं तदनेन क्रमेणोत्पद्यते न युगपद्बदरमुष्टिप्रक्षेपवदिति ॥ ७ ॥

क्रमनियमविवक्षार्थोऽयं मन्त्र आरभ्यते। तपसा ज्ञानेनोत्पत्तिविधिज्ञतया भूतयोन्यक्षरं ब्रह्म चीयते उपचीयते उत्पादयिषदिदं जगदङ्कुरमिव बीजमुच्छूनतां गच्छति पुत्रमिव पिता हर्षेण। एवं सर्व्वज्ञतया सृष्टिस्थितिसंहारशक्तिविज्ञानवत्तयोपचितात्ततो ब्रह्मणोऽन्नम्। अद्यते भुज्यत इत्यन्नमव्याकृतं साधारणं संसारिणां चिकीर्षितावस्थारूपे-

---

यथा च मत इति। एकस्मिन्नपि दृष्टान्तेऽनुमानानामनैकान्तिकत्वं योजयितुं शक्यमिति शङ्कमानं प्रत्याह। अनेकदृष्टान्तेति ॥ ६ ॥ ७ ॥

ईश्वरत्वोपाधिभूतं मायातत्त्वं महाभूतादिरूपेण सर्वजीवैरुपलभ्यत इति साधारणोऽपि कथं जायतेऽनादिसिद्धत्वादित्याशङ्क्याह। व्यचिकीर्षितेति। कर्मापूर्वसमवायिभूतसूक्ष्ममव्या-

यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः।
तस्मादेतद्ब्रह्म नाम रूपमन्नञ्च जायते ॥ ९ ॥
इति प्रथममुण्डके प्रथमः खण्डः ॥ १ ॥

---

णाभिजायते उत्पद्यते। ततश्चाव्याकृतादग्राचिकीर्षितावस्थातोऽन्नात् प्राणो हिरण्यगर्भो ब्रह्मणो ज्ञानक्रियाशक्त्यधिष्ठितजगत्साधारणोऽविद्याकामकर्म्मभूतसमुदायवीजाङ्कुरो जगदात्माभिजायत इत्यनुसङ्गः। तस्माच्च प्राणान्मनो मन आख्यं सङ्कल्पविकल्पसंशयनिर्णयाद्यात्मकमभिजायते। ततोऽपि सङ्कल्पाद्यात्मकत्वान्मनसः सत्यं सत्याख्यमाकाशादिभूतपञ्चकमभिजायते। तस्मात्सत्याख्यादभूतपञ्चकादण्डं क्रमेण सप्तलोका भूरादयः। तेषु मनुष्यादिप्राणिवर्णाश्रमक्रमेण कर्म्माणि। कर्म्मसु च निमित्तभूतेष्वमृतं कर्म्मजं फलम्। यावत्कर्म्माणि कल्पकोटिशतैरपि न विनश्यन्ति तावत् फलं न विनश्यतीत्यमृतम् ॥ ८ ॥

उक्तमेवार्थमुपजिहीर्षुर्मन्त्रो वक्ष्यमाणार्थमाह। य उक्तलक्षणोऽक्षराख्यः सर्वज्ञः सामान्येन सर्वं जानातीति सर्वज्ञः।

---

कृतमिति केचित्। न तस्य प्रति जीवं भिन्नत्वादीश्वरत्वोपाधित्वासम्भवात्। सामान्यरूपेण सम्भवेऽपि पृथिव्यादिसामान्यानां वहुत्वात्। प्रतातविकल्पश्रुतिव्याकोपापाताज्जाद्य-महामायारूपेणैव सम्भवेऽपि न कर्मापूर्वसमवायित्वम्। तस्याकारकत्वाद् बुद्ध्यादीनामिव कारकत्वाभिधानात्। कारकावयवेष्वेव क्रियासमवायाभ्युपगमात्। किञ्च न कार्य्यस्य स्वकारणप्रकृतित्व

विशेषेण सर्वं वेत्तीति सर्ववित्। यस्य ज्ञानमयं ज्ञानविकारमेव सर्वज्ञलक्षणं तपो नायासलक्षणं तस्माद्यथोक्तात् सर्वज्ञादेतदुक्तं कार्यलक्षणं ब्रह्म हिरण्यगर्भाख्यं जायते। किञ्च नामासौ देवदत्तो यज्ञदत्त इत्यादिलक्षणम्। रूपमिदं शुक्लं नीलमित्यादि। अन्नञ्च व्रीहियवादिलक्षणं जायते पूर्वमन्त्रोक्तक्रमेणेत्यविरोधो द्रष्टव्यः॥ ८॥

इति मुण्डके प्रथमखण्डभाष्यम्॥ १॥

---

पृष्टमिति भूतसूक्ष्मस्य पञ्चीकृतभूतपञ्चकप्रकृतित्वं न स्यात्। कृत्स्नाश्चद्वाभूरामर्गादिसंस्कारासदे गुणत्रयसाम्यं मायातत्त्वमव्याकृतादिशब्दवाच्यमिह्वाभ्युपगन्तव्यम्। पूर्वस्मिन् कल्पे हिरण्यगर्भप्राप्तिनिमित्तं प्रकृष्टं ज्ञानं कर्म च येनानुष्ठितं तदनुग्रहाय मायोपाधिकं ब्रह्म हिरण्यगर्भावस्थाकारेण विवर्त्तते। स च जीवस्तदवस्थाभिमानो हिरण्यगर्भ उच्यत इत्यभिप्रेत्याह। ब्रह्मेति। ज्ञानशक्तिभिः क्रियाशक्तिभिश्चाधिष्ठितं विशिष्टं जगद्व्यष्टिरूपं तस्य साधारणः समष्टिरूपः सूत्रसंज्ञक इत्यर्थः। समष्टिरूपं विवक्षितम्। व्यष्टिरूपस्य लोकसृष्टिरुत्तरकालत्वाद्वक्ष्यमाणस्याविद्यानिवरणस्यारम्भार्थमुक्तः परविद्यासूत्रार्थोपसंहार इत्यर्थः। सामान्येनेति। समष्टिरूपेण मायाख्येनोपाधिनेत्यर्थः। विशेषणेति व्यष्टिरूपेणाविद्याख्येनोपाधिनाऽनन्तजीवभावमापन्नः स एव सर्वस्योपाधिसत् सष्टत्व सर्वोत्यर्थिदंयमध्यात्मञ्च तत्त्वाभेदः सूचितः। स्रष्टृत्वं प्रजापतीनां तपसा प्रसिद्धम्। स्रष्टृत्वे तपोऽनुष्ठानं वक्तव्यम्। ततः संसारित्व प्रसज्येत इत्याशङ्क्याह। यस्य ज्ञानमयमिति। सत्त्वप्रधानमायाज्ञानाख्यो विकारस्तदुपाधिकं ज्ञानविकारं

तदेतत्सत्यं मन्त्रेषु कर्माणि कवयो यान्य-
पश्यंस्तानि त्रेतायां बहुधा सन्ततानि। तान्या-

माङ्गा वेदा अपरा विद्योक्ता ऋग्वेदो यजुर्वेद इत्या-
दिना यत्तदद्रेश्यमित्यादिना नामरूपमन्नञ्च जायत इत्यन्तेन
ग्रन्थेनोक्तलक्षणमक्षरं यया। विद्ययाऽधिगम्यते इति परा
विद्या सविशेषेणोक्ता। अतः परमनयोर्विद्ययोर्विषयौ विवे-
क्तव्यौ संसारमोक्षाविव्युत्तरो ग्रन्थ आरभ्यत। तत्रापरविद्या-
विषयः कर्त्रादिसाधनक्रियाफलभेदरूपः संसारोऽनादिरनन्तो
दुःखस्वरूपत्वाद्धातव्यः प्रत्येकं शरीरिभिः। सामस्त्येन नदी-
स्रोतोवदवच्छेदरूपसम्बन्धस्तदुपशमलक्षणो मोक्षः परविद्या-
विषयोऽनाद्यनन्तोऽजरोऽमरोऽमृतोऽभयः शुद्धः प्रसन्नः स्वात्म-
प्रतिष्ठालक्षणः परमानन्दोऽद्वय इति। पूर्वं तावदपरविद्याया
विषयप्रदर्शनार्थमारम्भः। तद्दर्शने हि तन्निर्वेदोपपत्तेः।
तथा च वक्ष्यति। परीक्ष्य लोकान् कर्मचितानित्यादिना।
न ह्यप्रदर्शितं परीक्ष्योपपद्यत इति तत्प्रदर्शयन्नाह तदेतत् सत्य-
मवितथम्। किन्तन्मन्त्रेष्वृग्वेदाद्याख्येषु कर्माण्यग्निहोत्रा-

सृज्यमानं सर्वपदार्थाभिन्नत्वलक्षणं तपो न तु क्लेशरूपं प्रजा-
पतीनामिवेत्यर्थः॥ ८॥ ८॥

इति प्रथममुण्डके प्रथमखण्डभाष्यटीका।

अनादिरित्यादानरूपेणानन्तो ब्रह्मज्ञानात् प्रागत्यन्ताभावाभ-
वात् प्रत्येकं शरीरिभिर्हातव्यो दुःखरूपत्वादित्यर्थेन। यदाहु-
रेकजीववादिनः एकस्यैवेतन्यमेवायमविद्यया बद्धं संसरति।

चरथ नियतं सत्यकामा एष: वः पन्था: सुकृतस्य लोके ॥ १ ॥

---

दीनि मन्त्रेषु प्रकाशितानि कवयो मेधाविनो वशिष्ठादयो यान्यपश्यन् दृष्टवन्तः। यत्तदेतत्सत्यमेकान्तपुरुषार्थसाधनत्वात् तानि च वेदविहितान्यृषिदृष्टानि कर्माणि त्रेतायां त्रयी संयोगलक्षणायां हौत्राध्वर्यवौद्गात्रप्रकारायामधिकरणभूतायां बहुधा बहुप्रकारं सन्ततानि प्रवृत्तानि कर्मिभिः क्रियमाणानि त्रेतायां वा युगे प्रायशः प्रवृत्तानि अतो यूयं तान्याचरथ निर्वर्त्तयथ नियतं नित्यं सत्यकामा यथाभूतकर्मफलकामाः सन्तः। एष वो युष्माकं यथा पन्था मार्गः सुकृतस्य स्वयं निर्वर्त्तितस्य कर्मणो लोके फले निमित्तं लोक्यते दृश्यते भुज्यते इति कर्मफलं लोक उच्यते। तदर्थं तत्प्राप्तये एष मार्ग इत्यर्थः। यानि यान्यग्निहोत्रादीनि त्रय्यविहितानि कर्माणि तान्येष पन्थाऽवश्यफलप्राप्तिसाधनमित्यर्थः ॥ १ ॥

---

तदेव कदाचिन्मुच्यते नाऽस्मदादीनां बन्धमोक्षौ स्त इति तदाभास भवति। श्रुतिवहिष्कृतत्वात्। सुषुप्तेऽपि क्रियाकारकफलभेदस्य प्रहाणं भवति। बुद्धिपूर्वकप्रहाणस्य ततो विशेषमाह। सामस्त्येनेति। सोपाधविद्याकार्य्यस्याविद्याप्रहाणेनात्यन्तिकप्रहाणं विद्याफलमित्यर्थः। अमरोऽपक्षयरहितः। अमृतो नाशरहित इत्यर्थः। अपरविद्यायाः परविद्यायाश्च विषयौ प्रदर्श्य पूर्वमपरविद्याया विषयदर्शने श्रुतेरभिप्राय-

यदा लेलायते ह्यर्चिः समिद्धे हव्यवाहने।
तदाज्यभागावन्तरेणाहुतीः प्रतिपादयेच्छ्रद्धया
हुतम्॥ २॥

---

तत्राग्निहोत्रमेव तावत् प्रथमं प्रदर्श्यते प्रदर्शनार्थमुच्यते। सर्वकर्मणां प्राथम्यात्। कथम्। यदैव धनैरभ्याहितैः सम्यगिद्धे समिद्धे हव्यवाहने लेलायते चलति अर्चिस्तदा तस्मिन् काले लेलायमाने चलत्यर्चिष्याज्यभागा वाऽऽज्यभागयोरन्तरेण मध्ये आवापस्थाने आहुतीः प्रतिपादयेत् प्रक्षिपेद्देवतामुद्दिश्य। अनेकाहःप्रयोगापेक्षयाऽऽहुतीरिति बहुवचनम्। एष सम्यगाहुतीप्रक्षेपादिलक्षणकर्ममार्गो लोकप्राप्तये पन्थाः। अश्रद्धयाहुतं तस्य च सम्यक्करणं दुष्करम्। विपत्तयस्त्वनेका भवन्ति॥ २॥

---

माह। पूर्वं तावदिति। यदीष्टसाधनतयाऽनिष्टसाधनतया वा वेदेन बोध्यते कर्म तस्यासति प्रतिबन्धे तत्साधनत्वाव्यभिचार। सत्यत्वं न स्वरूपाबाधत्वं प्लवा ह्येते इत्यादिना निन्दितत्वात् स्वरूपबाध्यत्वेऽपि चार्थक्रियासामर्थ्यं स्वप्नकामिन्यामिव घटत इत्यभिप्रेत्याह। तदेतत् सत्यमिति। ऋग्वेदविहित पदार्थो हौत्रम्। यजुर्वेदविहित आध्वर्यवम्। सामवेदविहित औद्गात्रम्। तद्रूपायां त्रेतायामित्यर्थ॥ १॥

सत्यकामा मोक्षकामा इति समुच्चयाभिप्रायेण व्याख्यानमयुक्तम्। एष व पन्थाः सुकृतस्य लोक इति स्वर्गफलसाधनत्वविषयशेषविरोधादित्याहवनीयस्य दक्षिणोत्तरपार्श्वयो राज्य-

यस्याग्निहोत्रमदर्शमपौर्णमासमचातुर्मास्य-
मनाग्रयणमतिथिवर्जितञ्च। अहुतमवैश्वदेवमवि-
धिना हुतमासप्तमांस्तस्य लोकान् हिनस्ति ॥३॥

---

कथम्। यस्याग्निहोत्रिणोऽग्निहोत्रमदर्शं दर्शाख्येन कर्मणा वर्जितम्। अग्निहोत्रिणोऽवश्यकर्त्तव्यत्वाद्दर्शस्य। अग्निहोत्रसम्बन्ध्यग्निहोत्रविशेषणमिव भवति। तदक्रियमाणमित्येतत्। तथाऽपौर्णमासमित्यादिष्वप्यग्निहोत्रविशेषणत्वं द्रष्टव्यम्। अग्निहोत्राङ्गत्वस्याविशिष्टत्वाद्पौर्णमासं पौर्णमासकर्मवर्ज्जितम्। अचातुर्मास्यश्चातुर्मास्यकर्मवर्ज्जितम्। अनाग्रयणं शरदादिकर्त्तव्यं तच न क्रियते यस्य। तथाऽतिथिवर्जितञ्चातिथिपूजनञ्चाहन्यहन्यक्रियमाणं यस्य स्वयं सम्यगग्निहोत्रकालेऽहुतम्। अदर्शादिवद्वैश्वदेवकर्मवर्जितं हूयमानमप्यविधिना हुतं न यथा हुतमित्येतत्। एवं दुःसम्पादितमग्निहोत्राद्युपलक्षितं कर्म किं करोतीत्युच्यते आसप्तमान् सप्तसहितांस्तस्य कर्त्तुर्लोकान् हिनस्तीवायासमात्रफलत्वात्। सम्यक्क्रियमाणेषु हि कर्मसु कर्मपरिणामरूपेण भूरादयः सत्यान्ताः सप्तलोकाः फलं प्राप्यते। ते

---

भागाविज्यते अग्नये स्वाहा सोमाय स्वाहेति दर्शपूर्णमासे। तयोर्मध्येऽन्ये यागा अनुष्ठीयन्ते। तन्मध्यमावापस्थानमुच्यते। अग्निहोत्राहुत्योर्द्वित्वं प्रसिद्धम्। सूर्याय स्वाहा प्रजापतये स्वाहेति प्रातः। अग्नये स्वाहा प्रजापतये स्वाहेति सायम्। तत्कथमग्निहोत्रं प्रकाश्याहुतीरिति बहुवचनं तत्राह। अनेकाह

काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा। स्फुलिङ्गिनी विश्वरूपी च देवी लेलायमाना इति सप्त जिह्वा ॥ ४ ॥

एतेषु यश्चरते भ्राजमानेषु यथाकालं चाहुतयो ह्याददायन्। तन्नयन्त्येताः सूर्यस्य रश्मयो यत्र देवानां पतिरेकोऽधिवासः ॥ ५ ॥

---

लोका एवम्भूतेनाग्निहोत्रादिकर्म्मणा अप्राप्यत्वाद्धिंसन्त इवायासमात्रत्वव्यभिचारीत्यतो हिनस्तीत्युच्यते। पिण्डदानाद्यनुग्रहेण वा मम्बध्यमानाः पितृपितामहप्रपितामहाः पुत्रपौत्रप्रपौत्राः स्वात्मोपकाराः सप्तलोका उक्तप्रकारेणाग्निहोत्रादिना न भवन्तीति हिंस्यन्त इत्युच्यते ॥ ३ ॥

काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा। स्फुलिङ्गिनी विश्वरूपी च देवी लेलायमाना दहनस्य जिह्वाः। अग्नेर्हविराहुतिग्रसनार्था एताः सप्त जिह्वा ॥ ४ ॥

एतेष्वग्निजिह्वाभेदेषु योऽग्निहोत्री चरत्यग्निहोत्रादि भ्राजमानेषु दीप्यमानेषु। यथाकालञ्च यस्य कर्म्मणो यः

---

इति। अनेकेष्वहःसु प्रयोगानुष्ठानानि तदपेक्षयेत्यर्थः। दर्शपूर्णमासस्याग्निहोत्राङ्गत्वे प्रमाणाभावात् कथं तदकरणमग्निहोत्रस्य विपत्तिरित्याशङ्क्य यावज्जीवचोदनावशाद्ग्निहोत्रवदवश्यकर्त्तव्यत्वात् तदकरणे भवेद्विपत्तिरित्यभिप्रेत्य विशेषणम्।

एह्येहीति तमाहुतयः सुवर्चसः सूर्य्यस्य रश्मिभिर्यजमानं वहन्ति। प्रियां वाचमभिवदन्त्योऽर्च्चयन्त्या एष वः पुण्यः सुकृतो ब्रह्मलोकः॥ ६॥

---

कालस्तत्कालं यथाकालं यजमानमाददायत्राददाना आहुतयो यजमानेन निर्वर्त्तिता अमूं नयन्ति प्रापयन्त्येता आहुतयो ये इमा अनेन निर्वर्त्तिताः सूर्य्यस्य रश्मयो भूत्वा रश्मिद्वारैरित्यर्थः। यत्र यस्मिन् स्वर्गे देवानां पतिरिन्द्र एकः सर्वानुपर्य्यधिवसतीत्यधिवासः॥ ५॥

कथं सूर्य्यस्य रश्मिभिर्यजमान वहन्तीत्युच्यते एह्येहीत्याह्वयन्त्यः। सुवर्चसो दीप्तिमत्यः। किञ्च प्रियामिष्टां वाच स्तुत्यादिलक्षणामभिवदन्त्य उच्चारयन्त्यः पूजयन्त्यश्चैष वो युष्माकं पुण्यः सुकृतो यथा ब्रह्मलोकः फलरूपः एवं प्रियां वाचमभिवदन्त्यो वहन्तीत्यर्थः। ब्रह्मलोकः स्वर्गः प्रकरणात्॥ ६॥

---

शरदादिषु नूतनान्नेन कर्त्तव्यमाग्रयणं कर्म। अदृष्ट वैश्वदेवमिति विशेषणम्। वैश्वदेवस्याग्निहोत्रानामहत्त्वेऽप्यवश्यकर्त्तव्यत्वादित्यर्थं पिण्डोदकदानेन पित्रादीनां त्रयाणामुपकरोति। यजमानपुत्रादीनाञ्च त्रयाणां ग्रासादिदानेन। ततो मध्यवर्त्तिना यजमानेन सम्बध्यमान. पूर्वे त्रय उत्तरे च त्रयो गृह्यन्त इत्याह। पिण्डदानादीति। आहुतयो यजमाने वहन्तीति सम्बन्ध.॥ २॥ ३॥ ४॥ ५॥

प्लवा ह्येते अदृढ़ा यज्ञरूपा अष्टादशोक्त-
मवरं येषु कर्म। एतच्छ्रेयो येऽभिनन्दन्ति मूढ़ा
जरामृत्युं ते पुनरेवापि यान्ति ॥ ७ ॥

अविद्यायामन्तरे वर्त्तमानाः स्वयं धीराः
पण्डितम्मन्यमानाः। जङ्घन्यमानाः परियन्ति
मूढ़ा अन्धेनैव नीयमाना यथान्धाः ॥ ८ ॥

---

एवञ्च ज्ञानरहितं कर्मेतावत्फलमविद्याकार्य्यकर्मकार्य्य-मतोऽसारं दुःखमूलमिति निन्द्यते। प्लवाविनाशिन इत्यर्थः। हि यस्मादेते अदृढ़ा अस्थिरा यज्ञरूपा यज्ञस्य रूपाणि यज्ञरूपा यज्ञनिर्वर्त्तका अष्टादशाष्टादशसंज्ञकाः। षोड़ष-र्त्विजः पत्नी यजमानश्चेत्यष्टादश एतदाश्रया उक्तं कथितं शास्त्रेण। येष्वष्टादशस्ववरं केवलं ज्ञानवर्जितं कर्म। अतस्तेषामवरकर्म्माश्रयाणामष्टादशानामदृढ़तया प्लवत्वात्. प्लवते सह फलेन तत्साध्यं कर्म। कुण्डविनाशादिवत् क्षीरदध्यादीनां तत्स्थाननाशः। यत एवमेतत्कर्म श्रेय इति येऽभिनन्दन्त्यभिहृष्यन्त्यविवेकिनो मूढ़ाः अतस्ते जरा मृत्युञ्च *जरामृत्युं किञ्चित् कालं स्वर्गे स्थित्वा पुनरेवापि यन्ति* भूयोऽपि गच्छन्ति ॥ ७ ॥

किञ्चाविद्यायामन्तरे मध्ये वर्त्तमाना अविवेकप्रायाः स्वयं वयमेव धीरा धीमन्तः पण्डिता विदितवेदितव्याश्चेति

---

रूप्यते निरूप्यते यदाश्रयतया यज्ञास्ते यज्ञरूपाः। वय-

अविद्यायां बहुधा वर्त्तमाना वयं कृतार्था इत्यभिमन्यन्ति बालाः। यत्कर्मिणो न प्रवेदयन्ति रागात्तेनातुराः क्षीणलोकाश्च्यवन्ते ॥ ९ ॥

इष्टापूर्त्तं मन्यमाना वरिष्टं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः। नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वेमं लोकं हीनतरञ्चाविशन्ति ॥ १० ॥

---

मन्यमाना आत्मानं सम्भावयन्तस्ते च जङ्घन्यमाना जरारोगाद्यनेकानर्थव्रातैर्हन्यमाना भृशं पीड्यमानाः परियन्ति विभ्रमन्ति मूढाः। दर्शनवर्जितत्वादन्धेनैवाचक्षुष्केणैव नीयमानाः प्रदृश्यमानमार्गा यथा लोकेऽन्धा अचिरदृष्टिता गर्त्तकण्टकादौ पतन्ति तद्वत् ॥ ८ ॥

किञ्चाविद्यायां बहुधा बहुप्रकारं वर्त्तमानाः वयमेव कृतार्थाः कृतप्रयोजना इत्येवमभिमन्यन्त्यभिमानं कुर्वन्ति बाला अज्ञानिनः। यद्यस्मादेवं कर्मिणो न प्रवेदयन्ति रागात् कर्मफलरागाभिभवनिमित्तं तेन कारणेनातुरा दुःखार्त्ताः सन्तः क्षीणलोकाः क्षीणकर्मफलाः स्वर्गलोकाच्च्यवन्ते ॥ ९ ॥

इष्टापूर्त्तम्। इष्टं यागादि श्रौतं कर्म। पूर्त्तं वापीकूपतडागादि स्मार्त्तं मन्यमाना एतदेवातिशयेन पुरुषार्थसाधनं वरिष्ठं प्रधानमिति चिन्तयन्तोऽन्यदात्मज्ञानाख्यं श्रेयः

---

मवेति तत्त्वदर्श्युपदेशानपेक्षतया स्वमनीषयैवेत्यर्थः ॥६॥७॥८॥

कं सुखं न भवतीत्यकं दुःखं तत्र विद्यते यस्मिन्नसौ नाकः।

तपःश्रद्धे ये ह्युपवसन्त्यरण्ये शान्ता विद्वांसो भैक्षचर्य्यां चरन्तः । सूर्य्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः स पुरुषो ह्यव्ययात्मा ॥ ११ ॥

---

साधनं न वेदयन्ति न जानन्ति प्रमूढ़ाः पुत्रपशुबन्ध्वादिषु प्रमत्ततया मूढ़ास्ते च नाकस्य स्वर्गस्य पृष्ठे उपरिस्थाने सुकृते भोगायतनेऽनुभूत्वाऽनुभूय कर्मफलं पुनरिमं लोकं मानुषमस्माद्धीनतरं वा तिर्य्यङ् नरकादिलक्षणं यथाकर्मशेषं विशन्ति ॥ १० ॥

ये पुनर्ज्ञानयुक्तास्तद्विपरीतवानप्रस्थाः सन्न्यासिनश्च तपःश्रद्धे हि तपः स्वाश्रमविहितं कर्म्म । श्रद्धा हिरण्यगर्भादिविषया विद्या ते तपःश्रद्धे उपवसन्ति सेवन्तेऽरण्ये वर्त्तमानाः सन्तः । शान्ता उपरतकरणग्रामाः । विद्वांसो गृहस्थाश्च ज्ञानप्रधाना इत्यर्थः । भैक्षचर्य्यां चरन्तः परिग्रहाभावादुपवसन्त्यरण्य इति सम्बन्धः । सूर्य्यद्वारेण सूर्य्योऽपि लक्षितेनोत्तरायणेन यथा ते विरजा विरजसः क्षीणपुण्यपापकर्म्माणः सन्त इत्यर्थः । प्रकर्षेण यान्ति यत्र यस्मिन् सत्यलोकादावमृतः स पुरुषः प्रथमजो हिरण्यगर्भो ह्यव्ययात्मा अव्ययस्वभावो यावत्संसारः स्थायी । एतदन्तास्तु संसारगतयोऽपरविद्यागम्याः । नन्वेतं मोक्षमिच्छन्ति केचिन्न हैव सर्वे प्रविलीयन्ते कामास्ते सर्वगं सर्वतः प्राप्य धीरा युक्तात्मानः सर्वमेवाविशन्तीति । श्रुतिभ्यः प्रकरणाच्च ।

परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन। तद्विज्ञानार्थं

---

अपरविद्याप्रकरणे हि प्रवृत्तेन ह्यकस्मान्मोक्षप्रसङ्गोऽस्ति विर्जस्त्वन्यापेक्षितं समस्तमपरविद्याकार्यं साध्यसाधनलक्षण क्रियाकारकफलभेदभिन्नं द्वैतम्। एतावद्धिरण्यगर्भप्राप्त्यवसानम्। तथाच स्थावराद्यां संसारगतिमनुक्रामताम्। ब्रह्मा विश्वसृजो धर्मो महानव्यक्तमेव च। उत्तमां सात्त्विकीमेतां गतिमाहुर्मनीषिण इति॥ ११॥

अथेदानीमस्मात् साध्यसाधनरूपात् सर्वस्मात् संसाराद् विरक्तस्य विद्यायामधिकारप्रदर्शनार्थमिदमुच्यते। परीक्ष्य यदेतदृग्वेदाद्यपरविद्याविषयं स्वाभाविकाविद्याकामकर्मदोषवत्पुरुषानुष्ठेयमविद्यादिदोषवन्त एव पुरुषं प्रतिविहितत्वात्तदनुष्ठानकार्यभूताश्च लोका ये दक्षिणोत्तरमार्गलक्षणाः फलभूता ये च विहिताकारणप्रतिषेधातिक्रमदोषसाध्या नरकतिर्यक्प्रेतलक्षणास्तानेतान् परीक्ष्य प्रत्यक्षानुमानोपमानागमैः सर्वतो याथात्म्येनावधार्य्य लोकान् संसारगतिभूतानव्यक्तादिस्थावरान्तान् व्याकृताव्याकृतलक्षणात् बीजाङ्कुरवदितरेतरोत्पत्ति-निमित्ताननेकानर्थशतसहस्रसङ्कुलान् कदलीगर्भवदसारान्मायामरीच्युदकगन्धर्वनगराकार-

---

केवलकर्मिणां फलमुक्त्वा सगुणब्रह्मज्ञानसहितायसकर्मिणां फलं संसारगोचरमेव दर्शयति। पुनस्तामयुक्ता इत्यादिना।

स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ॥ १२ ॥

---

स्वप्नजलबुद्बुदफेनसमान् प्रतिक्षणध्वंसमान् पृष्ठतः कृत्वाऽविद्याकामदोषप्रवर्त्तितकर्मचितान् धर्माधर्मनिर्वर्त्त्यानित्येतद् ब्राह्मणस्यैव विशेषतोऽधिकारः। सर्वत्यागेन ब्रह्मविद्यायामिति ब्राह्मणग्रहणम्। परीक्ष्य लोकान् किं कुर्य्यादित्युच्यते। निर्वेदं निःपूर्वो विदिरत्र वैराग्यार्थे। वैराग्यमायात् कुर्य्यादित्येतत्। स वैराग्यप्रकारः प्रदर्श्यते। इह संसारे नास्ति कश्चिदप्यकृतः पदार्थः। सर्व एव हि लोकाः कर्म्मचिताः कर्म्मचितत्वाच्चानित्याः। न नित्यं किञ्चिदस्तीत्यभिप्रायः। सर्वन्तु कर्म्मानित्यस्यैव साधनम्। यस्माच्चतुर्विधमेव हि सर्वं कर्म्म कार्य्यमुत्पाद्यमाप्यं संस्कार्य्यं विकार्य्यं वा नातःपरं कर्म्मणां विषयोऽस्ति। अहञ्च नित्येनामृतेनाभयेन कूटस्थेनाचलेन ध्रुवेणार्थी न तद्विपरीतेन। अतः किं कृतेन कर्म्मणाऽऽयासबाहुल्येनानर्थसाधनेनेत्येवं निर्विण्णोऽभयं शिवमकृतं नित्यं पदं यत्तद्विज्ञानार्थं विशेषेणाभिगमार्थं स निर्विण्णो ब्राह्मणो गुरुमेवाचार्य्यं शमदमदयासम्पन्नमधिगच्छेत्। शास्त्रज्ञोऽपि स्वातन्त्र्येण ब्रह्मज्ञानान्वेषणं न

---

चरस्थे स्त्रीजनाभक्षीर्णे देशे भुक्तानामिहैव सर्वकामप्रविलयं मर्य्यात्मभावञ्च दर्शयन्ति श्रुतयः। ब्रह्मलोकप्राप्तिस्तु देशपरिच्छिन्नफलं ततो न मोक्ष इत्याह। इहैवेति। ब्रह्मा चतुर्मुखः। विश्वसृजः प्रजापतयो मरीचिप्रभृतयः। धर्मो

तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय। येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् ॥ १३ ॥

इति प्रथममुण्डके द्वितीयः खण्डः।

इति प्रथममुण्डकं समाप्तम् ॥१॥

---

कुर्य्यादित्येतद्गुरुमेवेत्यवधारणफलम्। समित्पाणिः समिद्भारगृहीतहस्तः श्रोत्रियमध्ययनश्रुतार्थसम्पन्नं ब्रह्मनिष्ठं हित्वा सर्वकर्म्माणि केवलेऽद्वये ब्रह्मणि निष्ठा यस्य सोऽयं ब्रह्मनिष्ठस्तपोनिष्ठ इति यावत्। न हि कर्म्मिणो ब्रह्मनिष्ठा सम्भवति कर्म्मात्मज्ञानयोर्विरोधात्। स तं गुरुं विधिवदुपसन्नः प्रसाद्य पृच्छेदक्षरं पुरुषं सत्यम् ॥ १२ ॥

तस्मै स विद्वान् गुरुर्ब्रह्मविदुपसन्नायोपगताय। सम्यग्यथाशास्त्रमित्येतत्। प्रशान्तचित्तायोपरतदर्पादिदोषाय। शमान्विताय बाह्येन्द्रियोपरमेण च युक्ताय सर्वतो विरक्तायेत्येतत्। येन विज्ञानेन यया विद्यया च परयाऽक्षरमद्रेश्यादिविशेषणं तदेवाक्षरं पुरुषशब्दवाच्यं पूर्णत्वात् पुरिशयनाच्च सत्यं तदेव

---

यमः। महान् सूत्रात्मा। अव्यक्तं त्रिगुणात्मिका प्रकृतिः। सात्त्विकीं सत्त्वपरिणामज्ञानमहितकर्म्मफलभूतामित्यर्थः। ऐहिककर्म्मफलस्य पुत्रादेर्नाशविषयं प्रत्यक्षं विमतमनित्यं कृतकत्वाद्घटवदित्यनुमानमामुष्मिकनाशविषयम्। 'तद्यथेह कर्म्मजितो लोकः क्षीयते' इत्याद्यागमश्चैरनित्यत्वेन सर्वात्मनावधार्य्येत्यर्थः। नैतादृशं ब्राह्मणस्यास्ति वित्तम्। यथैकता समता

तदेतत्सत्यं यथा सुदीप्तात् पावकाद्वि-
स्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः। तथा-

परमार्थ-स्वाभाव्यादक्षरञ्चाचरणादक्षतत्वादक्षयत्वाच्च वेद
विजानाति तां ब्रह्मविद्यां तत्त्वतो यथावत्प्रोवाच प्रब्रूया-
दित्यर्थः। आचार्यस्याप्ययं नियमो यन्न्यायप्राप्तशिष्य-
निस्तारणमविद्यामहोदधेः ॥ १३ ॥

इति प्रथममुण्डके द्वितीयखण्डभाष्यम्।

इति प्रथममुण्डकभाष्यं पूर्णम् ॥ १ ॥

अपरविद्यायाः सर्वं कार्य्यमुक्तम्। स च संसारो यत्-
सारो यस्मान्मूलादक्षरात्सम्भवति यस्मिंश्च प्रलीयते तदक्षरं
पुरुषाख्यं सत्यम्। यस्मिन् विज्ञाते सर्वमिदं विज्ञातं
भवति तत्परस्या ब्रह्मविद्याया विषयः स वक्तव्य इत्युत्तरो
ग्रन्थ आरभ्यते। यदपरविद्याविषयं कर्मफललक्षणं सत्यं
तदापेक्षिकम्। इदन्तु परविद्याविषयं परमार्थतः सल्ल-
क्षणत्वात्। तदेतत् सत्यं यथाभूतं विद्याविषयम्। अविद्या-

इति स्मृतेः। ब्राह्मणस्यैवाधिकार इत्यर्थः। कूटस्थेन परिणाम-
रहितेनाचलेन स्पन्दरहितेन ध्रुवेण प्रयत्नरहितेनाक्षरमर्थी।
समित्पाणिरिति विनयोपलक्षणम्। अक्षरणादित्यवयवान्यथा-
भावलक्षणपरिणामशून्यत्वात् अक्षतत्वादित्ययवावेत्यशरीर-
त्वाद्विकारशून्यत्वादित्यर्थः ॥ ८ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥

इति प्रथममुण्डके द्वितीयखण्डभाष्यटीका ॥ २ ॥

इति प्रथममुण्डकभाष्यटीका ॥ १ ॥

क्षराद्विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापि यन्ति ॥ १ ॥

---

विषयत्वाच्चानृतमितरत् । अत्यन्तापरोक्षत्वात् । कथं नाम प्रत्यक्षवदक्षरं प्रतिपद्येरन्निति दृष्टान्तमाह । यथा सुदीप्तात् सुष्ठुदीप्तादिद्धात् पावकादग्नेर्विस्फुलिङ्गा अग्न्यवयवाः सहस्रशोऽनेकशः प्रभवन्ति निर्गच्छन्ति सरूपा अग्निसलक्षणा एवं तथोक्तलक्षणादक्षराद्विविधा नानादेहोपाधिभेदमनुविधीयमानत्वाद्विविधा हे सोम्य भावा जीवा आकाशादिवद्घटादिपरिच्छिन्नाः सुषिरभेदात् घटाद्युपाधिप्रभेदमनुभवन्ति । एवं नानानामरूपकृतदेहोपाधिप्रभेदमनुप्रजायन्ते तत्र चैव तस्मिन्नेवाक्षरेऽपि यन्ति देहोपाधिविलयमनुलीयन्ते घटादिविलयमन्विव सुषिरभेदाः । यथाऽऽकाशस्य सुषिरभेदोत्पत्तिप्रलयनिमित्तत्वं घटाद्युपाधिकृतमेव तद्वदक्षरस्यापि नामरूपकृतदेहोपाधिनिमित्तमेव जीवोत्पत्तिप्रलयनिमित्तत्वम् ॥ १ ॥

---

द्वे विद्ये वेदितव्ये इत्युपन्यस्यापरविद्यासाध्यमुण्डकेन प्रपञ्च्य परविद्यासतत्त्वा प्रपञ्चयितुं द्वितीयमुण्डकारम्भ इत्याह । अपरविद्याया इत्यादिना । कर्मणोऽपि प्रागसत्यत्वमुक्तं तद्वदिदं सत्यत्वं न मन्तव्यमित्याह । यदपरविद्याविषयमिति । विषीयते विशेष्यते विद्याऽनेनेति । व्युत्पत्त्या विषयशब्दस्य वस्तुपरत्वान्नपुंसकलिङ्गत्व परमार्थतः सल्लक्षणत्वादत्यन्ताबाध्यत्वादित्यर्थः । अत्यन्तपरोक्षत्वादिति शास्त्रैकगम्यत्वादपूर्ववद्-

दिव्यो ह्यमूर्त्तः पुरुषः स वाह्याभ्यन्तरो

---

नामरूपवीजभूतादव्याकृताख्यात् स्वविकारापेक्षया परादक्षरात् परं यत् सर्वोपाधिभेदवर्जितमक्षरस्यैव स्वरूपमाकाशस्येव सर्वमूर्त्तिवर्जितं नेति नेतीत्यादिविशेषणं विवक्षन्नाह। दिव्यो द्योतनवान् स्वयं ज्योतिष्ट्वात्। दिवि वा स्वात्मनि भवोऽलौकिको वा। हि यस्मादमूर्त्तः सर्वमूर्त्तिवर्जितः पुरुषः पूर्णः पुरि शयो वा। दिव्यो ह्यमूर्त्तः पुरुषः स वाह्याभ्यन्तरः सह वाह्याभ्यन्तरेण वर्त्तत इति। अजो न जायते कुतश्चित् स्वतोऽजस्य जन्मनिमित्तस्य चाभावात्। यथा जलबुद्बुदादेर्वाय्वादि। यथा नभःसुषिरभेदानां घटादिसर्वभावविकाराणां जनिमूलत्वात् तत्प्रतिषेधेन सर्वे प्रतिषिद्धा भवन्ति। स वाह्याभ्यन्तरो ह्यजोऽतोऽजरोऽमृतोऽक्षयो ध्रुवोऽभय इत्यर्थः। यद्यपि देहाद्युपाधिभेददृष्टीनामविद्यावशाद्देहभेदेषु स प्राणः समनाः सेन्द्रियः सविषय

---

ब्रह्मणप्रत्यक्षं न सम्भवति साक्षात्काराधीनञ्च कैवल्यं ततः कथं नाम सत्यमक्षरं प्रत्यक्षवत्प्रतिपद्येरन् मुमुक्षव इत्यभिप्रेत्य जीवब्रह्मणोरेकत्वे दृष्टान्तमाह। यथा सुदीप्तादिति। एकत्वे सति प्रत्यग्रूपस्यापरोक्षत्वाद्ब्रह्मणोऽपि प्रत्यक्षत्वं भविष्यति। घटैकदेशप्रत्यक्षवदित्यर्थः। यथा विभक्तदेशावच्छिन्नत्वेन विस्फुलिङ्गेष्ववयवत्वादिव्यवहारः स्वतः पुनरग्न्यात्मत्वमेवोष्णप्रकाशत्वाविशेषात् तथा चिद्रूपत्वाविशेषाज्जीवानां स्वतो ब्रह्मत्वमेवेत्यर्थः॥ १॥

ह्यजः । अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात् परतः परः ॥ २ ॥

---

इव प्रत्यवभासते तलमलादिमदिवाकाशं तथापि तु स्वतः परमार्थदृष्टो नाम प्राणो विद्यमानः क्रियाशक्तिभेदवाचलनात्मको वायुर्यस्मिन्न विद्यते असावप्राणः । तथाऽमना अनेकज्ञानशक्तिभेदवत्सङ्कल्पाद्यात्मकं मनोऽप्यविद्यमानं यस्मिन् सोऽयममना अप्राणो ह्यमनाश्चेति । प्राणादिवायुभेदाः कर्मेन्द्रियाणि तद्विषयाश्च तथा बुद्धिमनसी बुद्धीन्द्रियाणि तद्विषयाश्च प्रतिषिद्धा वेदितव्याः । यथा श्रुत्यन्तरे ध्यायतीव लेलायतीवेति । यस्माच्चैवं प्रतिषिद्धोपाधिरद्वयस्तस्माच्छुभ्रः शुद्धः । अतोऽक्षरान्नामरूपबीजोपाधिलक्षितस्वरूपात् सर्वकार्यकारणबीजत्वेनोपलक्ष्यमाणत्वात् परं तदुपाधिलक्षणमव्याकृताख्यमक्षरं सर्वविकारेभ्यस्तस्मात्

---

अक्षरस्यापि, जीवोत्पत्तिप्रलयनिमित्तत्वमौपाधिकमुक्तमेकत्वसिद्ध्यर्थम् । तत्त्वत स्तुतिनिमित्तनैमित्तिकाभावोऽपि नास्तीत्याह नामरूपबीजभूतादिति । देहापेक्षया यद्बाह्याभ्यन्तरञ्च प्रसिद्धं तेन सह तादात्म्येन तदधिष्ठानतया वा वर्त्तत इति सबाह्याभ्यन्तरः । अत एव सर्वात्मत्वात् तद्व्यतिरिक्तनिमित्ताभावादतोऽज इत्यर्थः । जायते अस्ति विपरिणमते वर्द्धते अपक्षीयते विनश्यतीत्येवमादिभावविकाराणां तात्पर्य्यमजशब्दस्याह । सर्वभावविकाराणामिति । जीवानां प्राणादिमत्त्वात् तदात्मत्वे ब्रह्मणोऽपि प्राणादिमत्त्व प्राप्त तन्निवर्त्तयति । यद्यपीत्यादिना । स्मृतिसंशयाद्यनेकभागेषु शक्ति-

एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।
खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥३॥

परतोऽक्षरात् परो निरुपाधिकः पुरुष इत्यर्थः । यस्मिंस्तदक्षराख्यमक्षरं सर्वव्यवहारविषयमोतञ्च प्रोतञ्च । कथं पुनरप्राणादिमत्त्वं तस्येत्युच्यते । यदि हि प्राणादयः प्रागुत्पत्तेः पुरुष इव स्वेनात्मना सन्ति तदा पुरुषस्य प्राणादिना विद्यमानेन प्राणादिमत्त्वं भवेन्न तु ते प्राणादयः प्रागुत्पत्तेः सन्ति । अतोऽप्राणादिमान् परः पुरुषः ॥ २ ॥

यथाऽनुत्पन्ने पुत्रे अपुत्रो देवदत्तः कथं ते न सन्ति प्राणादय इत्युच्यते । यस्मादेव पुरुषान्नामरूपबीजोपाधिलक्षिताज्जायते उत्पद्यतेऽविद्याविषयविकारभूतो नामधेयोऽनृतात्मकः प्राणः । वाचारम्भणं विकारो नामधेयमिति श्रुत्यन्तरात् । न हि तेनाविद्याविषये गुणानृतेन प्राणेन

विशेषोऽस्यास्तीति तयोक्तं नामरूपयोर्बीजं ब्रह्म तस्योपाधितया लक्षितं गुडस्य कारणत्वानुपपत्त्या गमितं स्वरूपमस्येति तयोक्तम् । तस्मादुपाधिरूपात् तद्विशिष्टरूपाच्च यतोऽक्षरात् पर इति सम्बन्धः । कथं मायातत्त्वस्याक्षरस्य वरत्वमित्याशङ्कायामाह । सर्वकार्येति । कार्यं ह्यपरं प्रसिद्धम् । तत् कारणत्वेन गम्यमानत्वान्मायातत्त्वं परम् । यौक्तिकबाधादनिर्वाच्यत्वेऽपि स्वरूपोच्छेदाभावादक्षरम् । तदुक्तं गीतायाम् । क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते । उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृत इति ॥ २ ॥

सम्राणत्वं परस्य स्यादपुत्रस्य स्वप्नदृष्टेनेव पुत्रेण पुत्रत्वम्। एव मनः सर्वाणि चेन्द्रियाणि विषयाश्चैतस्मादेव जायन्ते। तस्मात् मिथ्यैव निरूपचरतमप्राणादिमत्त्वमित्यर्थः। यथा च प्रागुत्पत्तेः परमार्थतोऽसन्तस्तथा प्रलीनाश्चेति द्रष्टव्या यथा करणानि मनश्चेन्द्रियाणि तथा शरीरविषयकारणानि भूतानि खमाकाशं वायुर्बाह्य आवहादिभेदः। ज्योतिरग्निः। आप उदकम्। पृथिवी धरित्री विश्वस्य सर्वस्य धारिणी। एतानि च शब्दस्पर्शरूपरसगन्धोत्तरोत्तरगुणानि पूर्वपूर्वगुणसहितान्येतस्मादेव जायन्ते। सङ्क्षेपतः परविद्याविषयमक्षरं

---

यदेव चैतन्यं निरुपाधिकं शुद्धमविकल्पं ब्रह्म तत्त्वज्ञानाज्जीवानां कैवल्यं तदेव मायाप्रतिबिम्बितरूपेण कारणं भवतीत्याह। यस्मादेवेति। प्राणोत्पत्तेरूर्द्ध्वं तर्हि सा प्राणत्वमात्मनो भविष्यतीति शङ्कानिवृत्त्यर्थं श्रुत्यन्तरप्रसिद्धं प्राणस्य विशेषणमाह। अविद्याविषय इति। नामधेयमिति वाङ्मात्रो न वस्तुसत इत्यर्थः। प्राणादीनां च उत्क्रमोपक्रमेण बाध्यते। गताः कलाः पञ्चदशप्रतिष्ठा इति। भूतेषु लयश्रवणेन प्राणानां भौतिकत्वावगमाद् भूतोत्पत्त्यनन्तरं प्राणोत्पत्तिर्द्रष्टव्येत्यभिमुखमागच्छन् वायुः प्रवहः पुरतो गच्छन् प्रवह इत्यादिभेदः शब्दस्पर्शरूपरसगन्धा उत्तरोत्तरगुणा येषां तानि तथोक्तानि। यथा शुक्लतन्त्ववस्थापन्नादन्वयिकारणाज्जायमानः पटः शुक्लगुणो जायते तथाकाशावस्थापन्नाद् ब्रह्मणो जायमानो वायुराकाशगुणेन शब्देनान्वितो जायते। तथैव वायुभावापन्नाद् ब्रह्मणोऽग्निस्तद्गुणेनान्वितो जायत इति द्रष्टव्यम्। ननु सूक्ष्माणि भूतानि प्रथममुत्पद्यन्ते अनन्तरं तासां त्रिवृतं त्रिवृतमेकैक-

अग्निर्मूर्द्धा चक्षुषी चन्द्रसूर्य्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः। वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा ॥४॥

---

निर्विशेषं पुरुषं सत्यं दिव्यो ह्यमूर्त्त इत्यादिना मन्त्रेणोक्ता पुनस्तदेव सविशेषं विस्तरेण वक्तव्यमिति प्रवृत्ते सङ्क्षेपविस्तरोक्तौ हि पदार्थः सुखादिगम्यो भवति सूत्रभाष्योक्तिवदिति ॥ २ ॥

योऽपि प्रथमजात् प्राणाद्धिरण्यगर्भाज्जायतेऽण्डस्यान्तर्विराट् स तत्त्वान्तरितत्त्वेन लक्ष्यमाणोऽप्येतस्मादेव पुरुषाज्जायत एव तन्मयश्चेत्येतदर्थमाह। तञ्च विशिनष्टि। अग्निर्द्युलोकः। असौ वाव लोको गौतमाग्निरिति श्रुतेः। मूर्द्धा यस्योत्तमाङ्गं शिरः। चक्षुषी चन्द्रश्च सूर्य्यश्चेति। चन्द्रसूर्य्यौ यस्येति

---

सकरोदिति। पञ्चीकरणोपलक्षणार्थं विहृत् कारणश्रुतेः पञ्चात्मकत्वमवगम्यते। तत एकैकस्य भूतस्य गुणवत्त्वं वर्णितमन्यत्र कथमिह पञ्चीकरणमनादृत्य प्रथमसर्गेण वाऽऽकाशस्यैकगुणत्वं वायोर्हि द्विगुणत्वं तेजसस्त्रिगुणत्वमित्याद्युच्यते। सत्यम्। भूतसर्गे तात्पर्य्याभावद्योतनाय प्रक्रियान्तरं न विरुध्यते। न ह्येतत् प्रतिबद्धं किञ्चित् फलं श्रूयते। अतएव गुणगुणीभावोऽपि न वैशेषिकपक्षवदिह विवक्षितः। किन्तु राशेः शिर इति तद्व्यपदेशमात्रम्। विस्तरेण त्वन्त्यकार्य्यपर्य्यन्तं तेन तेनाकारेण ब्रह्मैव विवर्त्तित इति प्रपञ्च्यते। ततोऽतिरिक्तस्याणुमात्रस्यासम्भवात्तस्मिन् विज्ञाते सर्वमिदं विज्ञातं भवतीति प्रदर्शितमित्यर्थः ॥ २ ॥

तस्मादग्निः समिधो यस्य सूर्य्यः सोमात् पर्जन्य ओषधयः पृथिव्याम्। पुमान् रेतः सिञ्चति योषितायां बह्वीः प्रजाः पुरुषात् सम्प्रसूताः ॥ ५ ॥

---

सर्वत्रानुषङ्गः कर्त्तव्यः। अस्येत्यस्य पदस्य वक्ष्यमाणस्य यस्येति विपरिणामं कृत्वा दिशः श्रोत्रे यस्य। वाग्विवृता उद्घाटिताः प्रसिद्धा वेदाः। यस्य वायुः प्राणो यस्य हृदयमन्तःकरणं विश्वं समस्तं जगदस्य यस्येत्येतत्। सर्वं ह्यन्तःकरणविकारमेव जगन्मनस्येव सुषुप्ते प्रलयदर्शनात्। जागरितेऽपि तत एवाग्निविस्फुलिङ्गवद्विप्रतिष्ठानात्। यस्य च पद्भ्यां जाता पृथिवी। एष देवो विष्णुरनन्तः प्रथमशरीरी त्रैलोक्यदेहोपाधिः सर्वेषां भूतानामन्तरात्मा। स हि सर्वभूतेषु द्रष्टा श्रोता मन्ता विज्ञाता सर्वकरणात्मा पञ्चाग्निद्वारेण च याः संसरन्ति प्रजास्ता अपि तस्मादेव पुरुषात् प्रजायन्त इत्युच्यते ॥ ४ ॥

तस्मात् परस्मात् पुरुषात् प्रजावस्थानविशेषरूपोऽग्निः। स विशेष्यते। यस्य सूर्य्यः समिध इव समिधः। सूर्य्येण हि द्युलोकः समिध्यते। ततो हि द्युलोकादग्निनिष्पन्नात् सोमात् पर्जन्यो द्वितीयोऽग्निः सम्भवति। तस्माच्च पर्जन्यादोषधयः पृथिव्यां भवन्ति। ओषधिभ्यः पुरुषाग्नौ हुताभ्यः

---

सर्वेषां भूतानामिति पञ्चमहाभूतानामन्तरात्मा स्थूलपञ्चभूतशरीरे हि विराडित्यर्थः। पञ्चाग्निद्वारेणेति द्युपर्जन्य-

तस्मादृचः साम यजूंषि दीक्षा यज्ञाश्च सर्वे क्रतवो दक्षिणाश्च। सम्वत्सरश्च यजमानश्च लोकाः सोमो यत्र पवते यत्र सूर्य्यः॥ ६॥

---

पुमानग्नीरेतः सिञ्चति योषितायां योषिति योषाग्नौ स्त्रियामिति। एवङ्क्रमेण बह्वीर्बह्वः प्रजाः ब्राह्मणाद्याः पुरुषात् परस्मात् सम्प्रसूताः समुत्पन्नाः। किञ्च कर्म्मसाधनानि फलानि च तस्मादेवेत्याह॥ ५॥

कथं तस्मात् पुरुषादृचो नियताक्षरपादावसानाः गायत्र्यादिच्छन्दो विशिष्टा मन्त्राः। साम पाञ्चभक्तिकं साप्तभक्तिकञ्च स्तोभादिगीतिविशिष्टम्। यजुंष्यनियताक्षरपदावसानानि वाक्यरूपाणि एवं त्रिविधा मन्त्राः। दीक्षा मौञ्ज्यादिलक्षणकर्तृनियमविशेषाः। यज्ञाश्च सर्वेऽग्निहोत्रादयः। क्रतवः सयूपाः। दक्षिणाश्चैकगवाद्यपरिमितसर्वस्वान्ताः। सम्वत्सरश्च कालकर्म्माङ्गं। यजमानश्च कर्त्ता। लोकास्तस्य कर्म्मफलभुतास्ते विशेष्यन्ते। सोमो यत्र येषु पवते पुनाति लोकान् यत्र येषु सूर्य्यस्तपति ते च दक्षिणायनोत्तरायणमार्गद्वयगम्या विद्वदविद्वत्कर्त्तृफलभूताः॥ ६॥

---

पृथिवीपुरुषयोषित्सु पञ्चस्वग्निदृष्टेः श्रुत्यन्तरप्रचोदितत्वात्तद्द्वारेणेत्यर्थः॥ ४॥ ५॥

पाञ्चभक्तिकमिति हिङ्कारप्रस्तावोद्गीथप्रतिहारनिधनाख्याः पञ्च भक्तयोऽवयवा यस्य तथोक्तम्। साप्तभक्तिकमिति हिङ्कारप्रस्तावाद्युद्गीथप्रतिहारोपद्रवनिधानाख्याः सप्त भक्तयो यस्य

तस्माच्च देवा बहुधा सम्प्रसूताः साध्या मनुष्याः पशवो वयांसि । प्राणापानौ व्रीहियवौ तपश्च श्रद्धा सत्यं ब्रह्मचर्य्यं विधिश्च ॥ ७ ॥

सप्त प्राणाः प्रभवन्ति तस्मात् सप्तार्च्चिषः समिधः सप्त होमाः । सप्त इमे लोका येषु चरन्ति प्राणा गुहाशया निहिताः सप्त सप्त ॥ ८ ॥

---

तस्माच्च पुरुषात् कर्म्माङ्गभूता देवा बहुधा वस्वादिगणभेदेन सम्यक्प्रसूताः । साध्या देवविशेषाः । मनुष्याः कर्म्माधिकृताः । पशवो ग्राम्यारण्याः । वयांसि पक्षिणः । जीवनञ्च मनुष्यादीनाम् । प्राणापानौ व्रीहियवौ हविर्थौ । तपश्च कर्म्माङ्गपुरुषसंस्कारलक्षणं स्वतन्त्रञ्च फलसाधनम् । श्रद्धा यत्पूर्वकः सर्वपुरुषार्थसाधनप्रयोगश्चित्तप्रसाद आस्तिक्यबुद्धिः । सत्यमनृतवर्जितं यथाभूतार्थं वचनञ्चापीडाकरम् । ब्रह्मचर्य्यं मैथुनासमाचारः । विधिश्चेतिकर्त्तव्यता ॥ ७ ॥

किञ्च सप्तशीर्षण्याः प्राणास्तस्मादेव पुरुषात् प्रभवन्ति । तेषाञ्च सप्तार्च्चिषो दीप्तयः स्वस्वविषयावद्योतनानि । तथा सप्त समिधः सप्त विषयाः । विषयैर्हि समिध्यन्ते प्राणाः ।

---

तयोक्तम् । स्तोभोऽर्थशून्या वर्णाः । विश्वजित् सर्वमेधयोः सर्वस्वदक्षिणा अत एकाहमारभ्य सर्वक्रतूनां दक्षिणा भवन्तीत्यर्थः ॥ ६ ॥ ७ ॥

**अतः समुद्रा गिरयश्च सर्वेऽस्मात् स्यन्दन्ते सिन्धवः सर्वरूपाः। अतश्च सर्वा ओषधयो रसश्च येनैष भूतैस्तिष्ठते ह्यन्तरात्मा॥ ९॥**

---

सप्तहोमास्तद्विषयविज्ञानानि। यदस्य विज्ञानं तज्जुहोतीति श्रुत्यन्तरात्। किञ्च सप्त इमे लोका इन्द्रियस्थानानि येषु चरन्ति प्राणाः। प्राणा इति विशेषणात् प्राणानां विशेषणमिदं प्राणापानादिनिवृत्त्यर्थम्। गुहायां शरीरे हृदये वा स्वापकाले शेरत इति गुहाशयाः। निहिताः स्थापिता धात्रा सप्त सप्त प्रति प्राणिभेदम्। यानि च आत्मयाजिनां विदुषां कर्माणि तत्साधनानि कर्मफलानि चाविदुषाञ्च कर्माणि तत्साधनानि कर्मफलानि च सर्वञ्चैतत्परस्मादेव पुरुषात् सर्वज्ञात्प्रसूतमिति प्रकरणार्थः॥ ८॥

अतः पुरुषात् समुद्राः सर्वे क्षाराद्याः। गिरयश्च हिमवदादयोऽस्मादेव पुरुषात् सर्वे। स्यन्दन्ते स्रवन्ति गङ्गाद्याः सिन्धवो नद्यः सर्वरूपाः बहुरूपाः। अस्मादेव पुरुषात् सर्वा ओषधयो व्रीहियवाद्याः। रसश्च मधुरादिः षड्विधो येन रसेन भूतैः पञ्चभिः स्थूलैः परिवेष्टितस्तिष्ठते तिष्ठति ह्यन्तरात्मा लिङ्गं सूक्ष्मं शरीरम्। तद्ध्यन्तराले शरीरस्यात्मनश्चात्मा वर्त्तत इत्यन्तरात्मा॥ ९॥

---

तपश्च कर्माङ्गमिति पयो ब्राह्मणस्य व्रतं यवागूराजन्यस्यामिक्षा वैश्यस्येत्यादि श्रुतिविहितं कृच्छ्रचान्द्रायणादीत्यर्थः। आत्मयाजिनामिति सकलमिदमहञ्च परमात्मैवेति भावना-

पुरुष एवेदं विश्वं कर्म्म तपो ब्रह्म परामृतम्।
एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं
विकिरतीह सोम्य ॥ १० ॥

इति द्वितीयमुण्डके प्रथमः खण्डः ॥१॥

---

एव पुरुषात्सर्वमिदं समुत्पन्नम्। अतो वाचारम्भणं विकारो नामधेयमनृत पुरुष इत्येव सत्यम्। अतः पुरुष एवेदं सर्वम्। न विश्वं नाम पुरुषादन्यत् किञ्चिदस्ति। अतो यदुक्तं तदेतदभिहित कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति। एतस्मिन् हि परस्मिन्नात्मनि सर्वकारणे पुरुष एवेद विश्वं नामैतदस्तीति विज्ञातं भवतीति किं पुनरिद विश्वमित्युच्यते। कर्म्माग्निहोत्रादिलक्षणम्। तपो ज्ञानं तत्कृतं फलमन्यदेव तावद्धीदं सर्वम्। तच्चैतद्ब्रह्मणः कार्य्यं तस्माद्ब्रह्म परममृतमहमेवेति यो वेद निहितं स्थितं गुहायां हृदि सर्वप्राणिनां स एव विज्ञानादविद्याग्रन्थिमिव दृढीभूतामविद्यावासना विकिरति विक्षिपति नाशयतीह जीवन्नेव न मृतः सन् हे सोम्य प्रियदर्शन ॥ १० ॥

इति द्वितीयमुण्डके प्रथमखण्डभाष्यम् ॥ १ ॥

---

पूर्वक परमेश्वराराधनबुद्ध्या ये यजन्ति तेषामित्यर्थः। यत् पृष्टं कस्मिन्नु भगवो विज्ञाते सर्वमिद विज्ञातं भवतीति तद्वि-रूपितम्। सर्वं परमात्मनो जायते। अतस्तावन्मात्रं सर्वं तस्मिन् विज्ञाते विज्ञातं भवतीत्यविद्याक्षयफलाभिधानेनोप-संहृतमिति ॥ ८ ॥ ९ ॥ १० ॥ इति प्रथम खण्ड ॥ १ ॥

आविः सन्निहितं गुहाचरन्नाम महत्पदमत्रैतत् समर्पितम्। एजत्प्राणन्निमिषच्च यदेतज्जानथ सदसद्वरेण्यं परविज्ञानाद्यद्वरिष्ठं प्रजानाम् ॥१॥

अरूपं सदक्षरं केन प्रकारेण विज्ञेयमित्युच्यते। आविः प्रकाशं सन्निहितं वागाद्युपाधिभिर्ज्वलति भ्राजतीति श्रुत्यन्तराच्छब्दादीनुपलभमानवदवभासते। दर्शनश्रवण-मननविज्ञानाद्युपाधिधर्मैराविर्भूतं सल्लक्ष्यते हृदि सर्व-प्राणिनाम्। यदेतदाविर्भूतं ब्रह्म सन्निहितं सम्यक्स्थितं हृदि तद्गुहाचरं नाम गुहायाञ्चरतीति दर्शनश्रवणादि-प्रकारैर्गुहाचरमिति प्रख्यातम्। महत्सर्वमहत्त्वात् पदं पद्यते सर्वेणेति सर्वपदार्थास्पदत्वात्। कथं तन्महत्पदमित्युच्यते। यतस्तस्मिन् ब्रह्मण्येतत्सर्वं समर्पितं प्रवेशितं रथनाभाविव। एतच्चलत्पक्ष्यादि। प्राणत्प्राणितीति प्राणापानादिमन्मनुष्य-पश्वादि। निमिषन्निमिषादिक्रियावत् यच्चानिमिषच्च शब्दात् समस्तमेतदत्रैव ब्रह्मणि समर्पितम्। एतद्यदास्पदं सर्वं जानथ हे शिष्या अवगच्छथ तदात्मभूतं भवतां सदसत्स्वरूपम्।

अधुना यस्य सकृदुपदेशमात्रेणाद्वितीयं ब्रह्मास्मीति वाक्यार्थ-ज्ञानमत्यन्तं न भवतीति तस्योपायानुष्ठानेन भवितव्य-मित्यभिप्रेत्याह। अरूपं सदक्षरमिति। वाक्यार्थस्यैव पुनः पुनर्भावना युक्त्यनुसन्धानञ्चोपाय इत्याह। उच्यत इति। आविःशब्दो निपातः प्रकाशवाची। ब्रह्म विश्वोपलब्ध्यात्मना प्रकाशमानमेव सदेति भावयेदित्यर्थः। अन्यैरप्युक्तं यदस्ति

यदर्चिमद्यदणुभ्योऽणु यस्मिन् लोका निहिता लोकिनश्च। तदेतदक्षरं ब्रह्म स प्राणस्तदु वाङ्मनः। तदेतत्सत्यं तदमृतं तद्वेद्धव्यं सोम्य विद्धि ॥ २ ॥

---

सदसतोर्मूर्त्तामूर्त्तयोः स्थूलसूक्ष्मयोस्तदव्यतिरेकेणाभावात् । वरेण्यं वरणीयं तदेव हि सर्वस्य नित्यत्वात् प्रार्थनीयं एवं व्यतिरिक्तं विज्ञानात् प्रजानामिति व्यवहितेन सम्बन्धो यल्लौकिकविज्ञानागोचरमित्यर्थः । यद्वरिष्ठं वरतमम् । सर्वपदार्थेषु वरेषु तद्ध्येकं ब्रह्मातिशयेन वरं सर्वदोषरहितत्वात् ॥१॥

किञ्च यदर्चिमद्दीप्तिमद्दीप्त्याऽऽदित्यादि दीप्यत इति दीप्तिमद्ब्रह्म। किञ्च यदणुभ्यः श्यामाकादिभ्योऽप्यणुसूक्ष्मम् । चशब्दात् स्थूलेभ्योऽप्यतिशयेन स्थूलं पृथिव्यादिभ्यः । यस्मिंल्लोका भूरादयो निहिताः स्थिता ये च लोकिनो लोकनिवासिनो मनुष्यादयश्चैतन्याश्रया हि सर्वे प्रसिद्धा-

---

तदात्मरूप नान्यत्ततो भाति न चान्यदस्ति। स्वभावसंवित् प्रतिभाति केवल ग्राह्यं ग्रहीतेति मृषैव कल्पनेति । सन्निहितमिति सर्वेषां प्राणानां हृदये स्थितवागाद्युपाधिभिः शब्दादीनुपलभमानवद्ब्रह्मैव जीवभावमापन्नमवभासते। ततस्ततोऽपरोक्षञ्चेति सदा स्मरेदित्यर्थः । सर्वमिदं कार्यं परिच्छिन्नञ्च सास्त्सदकार्यत्वात् परिच्छिन्नत्वाच्च घटादिवत् ततः सर्वास्पदं यत् तदेव मायास्पदमात्ममतमिति युक्त्यनुसन्धानमाह । महत् पदमिति ॥ १ ॥

घटादिवदादित्यादेर्जड़त्वेऽपि यद्दीप्तिमत्त्वे वैचित्र्य तदनुपपत्त्यापि तत् कारणं सम्भावनीयमित्याह। किञ्च यदर्चिं

धनुर्गृहीत्वौपनिषदं महास्त्रं शरं ह्युपासा निशितं सन्धीयत। आयस्य तद्भावगतेन चेतसा लक्ष्यं तदेवाक्षरं सौम्य विद्धि ॥ ३ ॥

---

स्तदेतत्सर्वाश्रयमक्षरं ब्रह्म स प्राणस्तदुवाङ्मनो वाक् च मनश्च सर्वाणि च करणानि अन्तर्यैतन्याः। अणो हि प्राणेन्द्रियादिसर्वसङ्घातः। प्राणस्य प्राणमिति श्रुत्यन्तरात्। यत्प्राणादीनामन्तश्चैतन्यमक्षरं तदेतत्सत्यमवितथमतोऽमृतमविनाशितद्वेद्धव्यं मनसा ताडयितव्यम्। तस्मिन् मनः समाधानं कर्त्तव्यमित्यर्थः। यस्मादेवं हे सौम्य विद्धि अक्षरे चेतः समाधत्स्व ॥ २ ॥

कथं वेद्धव्यमित्युच्यते। धनुरिष्वासनं गृहीत्वौपनिषदमुपनिषत्सु भवं प्रसिद्धं महास्त्रं महच्च तदस्त्रञ्च धनुस्तस्मिन् शरम्। किं विशिष्टमित्याह। उपासा निशित सन्तताभिध्यानेन तनूकृतं संस्कृतमित्येतत्। सन्धीयत सन्धानं

---

मदिति। अर्चिमत्त्वादादित्यादिवदिन्द्रियग्राह्यत्व प्राप्त निषेधति। यदणुभ्य इति। परमाणुपरिमाणत्वं तर्हि स्यादिति नाशङ्कनीयमित्याह। चशब्दादिति। स्थूलत्वात् तर्हि अन्याधारे स्यादिति नाशङ्कनीयमित्याह। यस्मिंल्लोका इति। प्राणादिप्रवृत्तिश्चेतनाधिष्ठानानिबन्धनाज्जड प्रवृत्तित्वाद्रथादिप्रवृत्तिवच्चिन्नेदे च प्रमाणाभावादद्व चैतन्यमात्रमस्तीति विचारयेदित्याह। तदेतत् सर्वाश्रयमिति। प्राणाद्यधिष्ठानत्वात् प्राणादिलक्ष्य आत्मा द्रष्टव्य. ॥ २ ॥

प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते ।
अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् ॥ ४ ॥

---

कुर्यात् । सन्धाय चायम्याकृष्य सेन्द्रियमन्तःकरणं स्वविषया-द्विनिवर्त्त्य लक्ष्य एवावर्जितं कृत्वेत्यर्थः । न हि हस्तेनैव धनुष आयतनमिह सम्भवति । तद्भावगतेन तस्मिन् ब्रह्मण्य-क्षरे लक्ष्ये भावना भावस्तद्गतेन च सालक्ष्यं तदेव यथोक्त-लक्षणमक्षरं सोम्य विद्धि । यदुक्तं धनुरादि तदुच्यते । प्रणव ओङ्कारो धनुः । यथेष्वासन लक्ष्ये शरस्य प्रवेशकारणं तथा-त्मशरस्याक्षरे लक्ष्ये प्रवेशकारणमोङ्कारः । प्रणवेन ह्यभ्यस्य-मानेन संस्क्रियमाणस्तदालम्बनोऽप्रतिबन्धेनाक्षरेऽवतिष्ठते । यथा धनुषास्त इषुर्लक्ष्ये । अतः प्रणवो धनुरिव धनुः । शरो ह्यात्मोपाधिलक्षणः पर एव जलसूर्य्यकादिवदिह प्रविष्टो देहे सर्व्वबौद्धप्रत्ययसाक्षितया सशर इव स्वात्मविषयो-पलब्धितृष्णाप्रमादवर्जितेन सर्वतो विरक्तेन जितेन्द्रियेणैकाग्र-चित्तेन वेद्धव्यं ब्रह्म लक्ष्यम् । ततस्तद्वेधनादूर्द्ध्वं शरवत्तन्मयो भवेत् । यथा शरस्य लक्ष्यैकात्मत्वं फलं भवति । तथा देहाद्यनात्मप्रत्ययतिरस्करणेनाक्षरैकात्मत्वं फलमापादयेदि-त्यर्थः ॥ २ ॥ ४ ॥

---

विचारासमर्थस्य प्रणवमवलम्ब्य ब्रह्मात्मैकत्वे चित्तसमान-क्रमसुक्तिफलं दर्शयितुमुपक्रमते । कायं वेद्धव्यमित्यादिना । प्रणवो ब्रह्मेत्यभिध्यायत उपसंहृतकरणग्रामस्य प्रणवोपरक्त यस्मिन्नन्यप्रतिबिम्ब स्फुरति स आत्मेत्यनुसन्धान प्रणवे शर-

अस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः
सह प्राणैश्च सर्वैः । तमेवैकं जनाथ आत्मान-
मन्या वाचो विमुञ्चथ अमृतस्यैष सेतुः ॥ ५ ॥

अरा इव रथनाभौ संहता यत्र नाड्यः स

---

अक्षरस्यैव दुर्लक्ष्यत्वात् पुनः पुनर्वचनं सुलक्षणार्थम् । यस्मिन्नक्षरपुरुषे द्यौः पृथिवी चान्तरिक्षञ्चोतं समर्पितं मनश्च सह प्राणैः करणैरन्यैः सर्वैस्तमेव सर्वाश्रयमेकमद्वितीयं जानथ जानीथ हे शिष्याः । आत्मानं प्रत्यक्स्वरूपं युष्माकं सर्वप्राणिनाञ्च ज्ञात्वा चान्या वाचोऽपरविद्यारूपा विमुञ्चत परित्यजत । तत्प्रकाश्यञ्च सर्वं कर्मससाधनम् । यथाऽमृत-स्यैष सेतुरेतदात्मज्ञानममृतस्यामृतत्वस्य मोक्षप्राप्तये सेतुः संसारमहोदधेरुत्तरणहेतुत्वात् यथा च श्रुत्यन्तरम् । तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनायेति ॥ ५ ॥

किञ्च । अरा इव । यथा रथनाभौ समर्पिता अरा एव संहताः सम्प्रविष्टा यत्र यस्मिन् हृदये सर्वतो देहव्या-

---

सन्धानम् । तस्य चित्प्रतिबिम्बसन्धानं लक्ष्यवेधः । उत्तर-ग्रन्थस्य पौनरुक्त्यं परिहरति । अक्षरस्यैव दुर्लक्ष्यत्वादिति ॥ ३ ॥ ४ ॥

ससाधनं सर्वं कर्म परित्यज्यात्मैव ज्ञातव्य इत्येव हेतुमाह । अमृतस्येति । धनुषाऽऽयुधेन लक्ष्यत इति तल्लक्षणं आत्मैकत्व-साक्षात्कार इत्यर्थः । कर्मसङ्गिजनसङ्गत्या कर्मश्रद्धा विषय-श्रद्धा च वाक्यार्थज्ञानस्यावगत्यन्ततायाः प्रतिबन्धको विघ्नः स

एषोऽन्तश्चरते बहुधा जायमानः । ओमित्येवं ध्यायथ आत्मानं स्वस्ति वः पाराय तमसः परस्तात् ॥ ६ ॥

---

पिण्डो नाम तस्मिन् हृदये बुद्धिप्रत्ययसाक्षिभूतः स एष प्रकृत आत्मा तन्मध्ये चरते चरति वर्त्तते । पश्यन् शृण्वन्, मन्वानो विजानन् बहुधाऽनेकधा क्रोधहर्षादिप्रत्ययैर्जायमान इव जायमानोऽन्तःकरणोपाध्यनुविधायित्वाद् वदन्ति लौकिका हृष्टो जातः क्रुद्धो जात इति तमात्मानमोमित्येवमोङ्कारालम्बनाः सन्तो यथोक्तकल्पनयाध्यायथ चिन्तयत । उक्तञ्च । वक्तव्यम् शिष्येभ्य आचार्य्येण जानता । शिष्याश्च ब्रह्मविद्या विविदिषवो निवृत्तः कर्म्मभ्यो मोक्षपथे प्रवृत्ताः । तेषां निर्विघ्नतया ब्रह्मप्राप्तिमाशास्त्याचार्य्यः । स्वस्ति निर्विघ्नमस्तु वो युष्माकं पराय परकालाय । कस्य । अविद्यातमसः परस्तात् । कस्मात् । अविद्यातमसोऽविद्यारहितब्रह्मात्मस्वरूपगमनायेत्यर्थः । योऽसौ तमसः परस्तात् संसारमहोदधिं तीर्त्वा गन्तव्यः परविद्याविषय इति ॥ ६ ॥

---

माभूदिति मगनम् । न तु वाक्यार्थावगतौ निष्पन्नायां फलप्राप्ते विघ्नशङ्काऽस्तीत्यभिप्रेत्याह । परस्तादिति । मदुपदेशाद्दूद्दिमित्यर्थ. । सर्वेश्वरत्वं मनोमयत्वादिगुणविशिष्टब्रह्मणो हृदयपुण्डरीके ध्यानञ्च क्रममुक्तिफलम् । शब्दब्रह्मविदो विधीयत इति दर्शयितुमाह । योऽसौ तमसः परस्तादित्यादिना ॥ ५ ॥ ६ ॥

यः सर्वज्ञः सर्वविद्यस्यैष महिमा भुवि दिव्ये ब्रह्मपुरे ह्येष व्योम्नात्मा प्रतिष्ठितः। मनोमयः प्राणशरीरनेता प्रतिष्ठितोऽन्ने हृदयं सन्निधाय

---

स कस्मिन् वर्त्तत इत्याह। यः सर्वज्ञः सर्ववित् व्याख्यातस्तं पुनर्विशिनष्टि। यस्यैष प्रसिद्धो महिमा विभूतिः। कोऽसौ महिमा। यस्येमे द्यावा पृथिवी शासने विधृते तिष्ठतः। सूर्य्यचन्द्रमसौ यस्य शासनेऽलातचक्रवद् जस्त्रं भ्रमतः। यस्य शासने सरितः सागराश्च स्वगोचरं नातिक्रामन्ति। तथा स्थावरं जङ्गमञ्च यस्य शासने नियतम्। तथा चर्त्तवोऽयनेऽब्दाश्च यस्य शासनं नातिक्रामन्ति। तथा कर्त्तारः कर्म्माणि फलञ्च यच्छासनात् स्वं स्वं कालं नातिवर्त्तते स एष महिमा। भुवि लोके यस्य स एष सर्वज्ञ एवं महिमा। दिव्ये द्योतनवति सर्वबौद्धप्रत्ययकृतद्योतने ब्रह्मपुरे मनसि। ब्रह्मणोऽत्र चैतन्यस्वरूपेण नित्याभिव्यक्तत्वाद् ब्रह्मणः पुरं हृदयपुण्डरीकं तस्मिन् यद्व्योम तस्मिन् व्योम्न्याकाशे हृत्पुण्डरीकमध्यस्थे प्रतिष्ठित इवोपलभ्यते।

---

यस्य परमात्मज्ञानस्येति। जीवन्मुक्तिफलस्याद्वैतवाक्यार्थावगमस्य चोपासनस्येत्यर्थः। अविद्यावासनाप्रचयो भिद्यत इति कोऽर्थः। किं बुद्धौ विद्यमानायामविद्यादिभेदे ज्ञानफलं किंवा तन्निवृत्तौ। नाद्य। सत्युपादाने कार्य्यस्यात्यन्तोच्छेदासम्भवात्। न द्वितीयः। ज्ञानस्याज्ञानेनेव साक्षाद्विरोधप्रसिद्धेः। किञ्च। बुद्धिरप्यनादिः सादिर्वा। नाद्यः। एतस्माज्जा-

तद्विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद्विभाति ॥ ७ ॥

न ह्याकाशवत् सर्वगतस्य गतिरागतिः प्रतिष्ठा वान्यथा सम्भवति। स ह्यात्मा तत्रस्थो मनोवृत्तिभिरेव विभाव्यत इति। मनोमयो मन उपाधित्वात् प्राणशरीरनेता। प्राणश्च शरीरञ्च प्राणशरीरं तस्यायं नेता स्थूलाच्छरीराच्छरीरान्तरं सूक्ष्मं प्रति प्रतिष्ठितोऽन्ने भुज्यमानान्न विपरिणामे प्रतिदिनमुपचीयमानेऽपचीयमाने च पिण्डरूपान्ने हृदयं बुद्धिं पुण्डरीकच्छिद्रे सन्निधाय समवस्थाप्य हृदयावस्थानमेव ह्यात्मनः स्थितिरन्ने तदात्मतत्त्वं विज्ञानेन विशिष्टेन शास्त्राचार्य्योपदेशजनितेन ज्ञानशमदमध्यानवैराग्योद्भूतेन परिपश्यन्ति सर्वतः पूर्णं पश्यन्ति उपलभन्ते धीरा विवेकिनः। आनन्दरूपं सर्वानर्थदुःखायासप्रहीणममृतं यद्विभाति विशेषेण स्वात्मन्येव भाति सर्वदा ॥ ७ ॥

---

यते प्राणो मनः सर्वेन्द्रियाणि चेति श्रुतिविरोधात्रान्त्यः प्रलये ब्रह्मज्ञाने विनैव बुद्धेर्नाशसम्भवात् तदानर्थक्यप्रसङ्गात्। सादित्वे च बुद्धेरुपादानं साक्षाद् ब्रह्म चेत् तन्नाशं विनाऽत्यन्तोच्छेदो न स्यात्। माया चेत् सा द्रष्टृगतज्ञानेन नोच्छेदमर्हति। लौकिकमाया विगतमायाया द्रष्टृगतज्ञानेनोच्छेदादर्शनात्। किञ्च। बुद्धेरुच्छेदो न तस्याः फलम्। स्वनाशस्याफलत्वात्। आत्मनः तस्य बुद्धिसङ्गाभावेन तदुच्छेदस्याफलत्वात्। किञ्चात्मनोऽविद्याभिधाने श्रुतिविरुद्धप्रसङ्गोऽविद्यायामन्तरे वर्त्तमाना

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्म्माणि तस्मिन् दृष्टे परावरे ॥८॥

---

अस्य परमात्मज्ञानफलमिदमभिधीयते। भिद्यते हृदयग्रन्थिरविद्या वासनामयः। बुद्ध्याश्रयास्तथा प्रोक्ताः कामा येऽस्य हृदि श्रिता इति श्रुत्यन्तरात्। हृदयाश्रयोऽसौ नात्माश्रयः। भिद्यते भेदं विनाशमायाति हृदयग्रन्थिः। छिद्यन्ते सर्वज्ञानविषयाः संशया लौकिकानामामरणात्तु गङ्गास्रोतोवत् प्रवृत्ता विच्छेदमायान्ति। अस्य विच्छिन्नसंशयस्य निवृत्ताविद्यस्य यानि विज्ञानोत्पत्तेः प्राक्तनानि जन्मान्तरे चाप्रवृत्तफलानि ज्ञानोत्पत्तिसहभावीनि च क्षीयन्ते कर्म्माणि। न त्वेतज्जन्मान्तरारम्भकानि प्रवृत्तफलत्वात् तस्मिन् सर्वज्ञेऽसंसारिणि दृष्टे परावरे परञ्च कारणात्मना अपरञ्च कार्य्यात्मना तस्मिन् परावरे साक्षादहमस्मीति दृष्टे संसरणोच्छेदान्मुच्यत इत्यर्थः ॥ ८ ॥

---

इति श्रवणादुपसंहारे च अनीशया शोचति मुह्यमान इति श्रवणाद् बुद्धिगतमेवाविद्याद्यात्मन्यध्यस्यत इति चेदध्यस्यत इति कोऽर्थो निक्षिप्यते भ्रान्त्या दृश्यते वा। नाद्यः। अन्यधर्म्मस्यान्यत्र निक्षेपासम्भवात्। भ्रान्त्या च केन दृश्यते। न तावदात्मना तस्या विद्याश्रयत्वानङ्गीकारात्। न बुद्ध्या। बुद्धेरात्मविषयत्वासम्भवेन तद्गतदर्शनासम्भवात्। भ्रान्तेश्च स्वाश्रयगतेन तत्त्वानुभवेन निवर्त्त्यत्वप्रसिद्धेर्बुद्धेरनुभवाश्रयत्वप्रसङ्गात्। तस्मान्नास्य भाष्यस्य सम्यगर्थं पश्याम इति चेदुच्यते। चित्त-

हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम् ।
तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः ॥ ९ ॥

---

उक्तस्यैवार्थस्य सङ्क्षेपाभिधायका उत्तरे मन्त्रास्त्रयोऽपि हिरण्मये ज्योतिर्म्मये बुद्धिविज्ञानप्रकाशे परे कोश इवाऽसेः । आत्मस्वरूपोपलब्धिस्थानत्वात् परं सर्वाभ्यन्तरत्वात् तस्मिन् विरजमविद्याद्यशेषदोषरजोमलवर्जितं ब्रह्म सर्वमहत्त्वात् सर्वात्मत्वाच्च निष्कलं निर्गताः कला यस्मात् तन्निष्कलं निरवयवमित्यर्थः । यस्माद्विरजं निष्कलञ्चातस्तच्छुभ्रं शुद्धं ज्योतिषां सर्वप्रकाशात्मनामग्न्यादीनामपि तज्ज्योतिरवभासकम् । अग्न्यादीनामपि ज्योतिष्ट्वमन्तर्गतब्रह्मात्मचैतन्यज्योतिर्निमित्तमित्यर्थः । तद्धि परं ज्योतिर्यदन्यानवभास्यमात्मज्योतिस्तद्यदात्मविद आत्मानं शब्दादिविषयबुद्धिप्रत्ययसाक्षिणं ये विवेकिनो विदुर्विजानन्ति ते आत्मविदस्तद्विदुरात्मप्रत्ययानुसारिणः । यस्मात् परं ज्योतिस्तस्मात्त एव तद्विदुर्नेतरे बाह्यार्थप्रत्ययानुसारिणः ॥ ९ ॥

---

तत्रादिरमनिर्वाच्या विद्या चैतन्यमवच्छिद्य स्वावच्छिन्नचैतन्यस्य शुद्धादितादात्म्यरूपेण विवर्त्तते । तस्याश्च ब्रह्मात्मतासाक्षात्कारनिवर्त्त्यरूपमङ्गीकारात् तन्निवृत्तौ तदुत्थ हृदयग्रन्थिभेदं श्रुत्योच्यते । भाष्यकारीयञ्च बुद्ध्याश्रयेणाभिधानमहङ्कारविशेषणत्वेनाविद्यादेर्व्यवहारिकाभिप्रायत्वमात्माश्रयत्वाभिधानञ्चात्मनो निर्विकारत्वाभिप्रायम् ॥ ७ ॥ ८ ॥

आधिकानुवृत्तिश्च प्रकटार्थं प्रदर्शितेति जीवन्मुक्तिर्न विरु-

न तत्र सूर्य्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति॥ १०॥

---

कथं तज्ज्योतिषां ज्योतिरित्युच्यते। न तत्र तस्मिन् स्वात्मभूते ब्रह्मणि सर्वावभासकोऽपि सूर्य्यो न भाति। तद्-ब्रह्म न प्रकाशयतीत्यर्थः। स हि तस्यैव भासा सर्वमन्यदनात्मजातं प्रकाशयतीत्यर्थः। न तु तस्य स्वतः प्रकाशनसामर्थ्यम्। तथा न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निरस्मद्गोचरः। किं बहुना। यदिदं जगद्भाति तत्तमेव परमेश्वरं स्वतो भारूपत्वाद्भान्तं दीप्यमानमनुभात्यनुदीप्यते। यथा जलोल्मुकादि अग्निसंयोगादग्निं दहन्तमनुदहति न स्वतस्तद्वत् तस्यैव भासा दीप्त्या सर्वमिदं सूर्य्यादिमज्जगद्विभाति। यत एवं तदेव ब्रह्म भाति च विभाति च कार्य्यगतेन विविधेन भासा अतस्तस्य ब्रह्मणो भारूपत्वं स्वतोऽवगम्यते। न हि स्वतो विद्यमानं भासनमन्यस्य कर्त्तुं शक्नोति। घटादीनामन्यावभासकत्वादर्शनाद्भारूपाणाञ्चादित्यादीनां तद्दर्शनात्॥ १०॥

---

ध्यते। भातीति णिजन्ताध्याहारेण व्याख्यातं तस्य भासा सर्वमिदं विभातीत्यस्य ब्रह्मणः स्वतो भारूपत्वे तात्पर्य्यं कथयति। यत एवमिति तदेव ब्रह्म भाति चेति। उपसंहारमन्त्रस्य तात्पर्य्यमाह। यत् तज्ज्योतिषां ज्योतिरिति। न ब्रह्मणा विविधं क्रियत इति तद्विकारं सर्वं जगत्सर्वं ब्रह्मैवेति

ब्रह्मैवेदममृतं पुरस्ताद् ब्रह्म पश्चाद् ब्रह्म दक्षिणतश्चोत्तरेण ॥ अधश्चोर्द्ध्वञ्च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम् ॥ ११ ॥

इति द्वितीयमुण्डके द्वितीयः खण्डः ॥ २ ॥

इति द्वितीयमुण्डकं समाप्तम् ॥ २ ॥

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं

---

यत्तज्ज्योतिषां ज्योतिर्ब्रह्म तदेव सत्यं सर्वं तद्विकारं वाचारम्भणं विकारो नामधेयमात्रमनृतमितरदित्येतमर्थं विस्तरेण हेतुतः प्रतिपादितं निगमनस्थानीयेन मन्त्रेण पुनरुपसंहरति । ब्रह्मैवोक्तलक्षणमिदं यत्पुरस्तादग्रे ब्रह्मैवाविद्यादृष्टीनां प्रत्यवभासमानं तथा पश्चाद्ब्रह्म तथा दक्षिणतश्च तथोत्तरेण तथैवाधस्तादूर्द्ध्वञ्च सर्वतोऽन्यदपि कार्य्याकारेण प्रसृतं प्रगतं नामरूपवदवभासमानम् । किं बहुना ब्रह्मैवेदं विश्वं समस्तमिदं जगद्वरिष्ठं वरतमम् । अब्रह्मप्रत्ययः सर्वोऽविद्यामात्रो रज्ज्वामिव सर्पप्रत्ययः । ब्रह्मैवैकं परमार्थसत्यमिति वेदानुशासनम् ॥ ११ ॥

इति द्वितीयमुण्डकभाष्यम् ॥ २ ॥

परा विद्योक्ता यया तदक्षरं पुरुषाख्यं सत्यमधिगम्यते । यदधिगमे हृदयग्रन्थ्यादेः संसारकारणस्यात्यन्तिकविनाशः

---

बाधायां सामानाधिकरण्यं योऽयं स्थाणुः पुमानसाविति तदन्वयव्यतिरेकाभावपरिहारेण तावन्मात्रत्वं बोध्यते ॥८॥१०॥११॥

इति द्वितीयमुण्डकभाष्यटीका ॥ २ ॥

परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति ॥ १ ॥

---

स्यात् । दर्शनोपायश्च योगो धनुराद्युपादानकल्पनयोक्तः । अथेदानीं तत्सहकारीणि सत्यादिसाधनानि वक्तव्यानीति तदर्थमुत्तरारम्भः । प्राधान्येन तत्त्वनिर्धारणञ्च प्रकारान्तरेण क्रियते । अत्यन्तदुरवगाह्यत्वात् कृतमपि तत्र सूत्रभूतो मन्त्रः परमार्थवस्त्ववधारणार्थमुपन्यस्यते । द्वा द्वौ सुपर्णा सुपर्णौ शोभनपतनौ सुपर्णौ पक्षिसामान्याद्वा सुपर्णौ सयुजा सयुजौ सहैव सर्वदा युक्तौ सखाया सखायौ समानाख्यातौ समानाभिव्यक्तिकारणौ एवम्भूतौ सन्तौ समानमविशेषमुपलब्ध्यधिष्ठानतया एकं वृक्षं वृक्षमिवोच्छेदसामान्यात् शरीरं वृक्षं परिषस्वजाते परिष्वक्तवन्तौ । सुपर्णाविवैकं वृक्षं फलोपभोगार्थम् । अयं हि वृक्ष ऊर्द्ध्वमूलोऽवाक्शाखोऽश्वत्थोऽव्यक्तमूलप्रभवः क्षेत्रसंज्ञकः सर्वप्राणिकर्मफलाश्रयस्तं परिष्वक्तवन्तौ सुपर्णाविवाविद्याकामकर्मवासनाश्रयलिङ्गोपाध्यात्मेश्वरौ । तयोः परिष्वक्तयोरन्य एकः क्षेत्रज्ञो लिङ्गोपाधिर्वृक्षमाश्रितः पिप्पलं कर्मनिष्पन्नं सुखदुःखलक्षणं फलं

---

प्राधान्येनेत्यपूर्वत्वेन तात्पर्यविषयतयेत्यर्थः । द्वा सुपर्णेत्यादौ द्विवचनस्याकारश्छान्दसः । जीवस्याणुत्वेन नियम्यत्वेन योग्यत्वादीश्वरस्य सर्वज्ञत्वेन नियामकत्वशक्तियोगाच्छोभनं पतनमुचितम् । नियम्यनियामकभावगमनं ययोस्तौ शोभनपतनौ । पक्षिसामान्याद्वेति वृक्षाश्रयणादिसामान्यादित्यर्थः ।

समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ॥ २ ॥

---

स्वाद्वनेकविचित्रवेदनास्वादुरूपं स्वादत्ति भक्षयत्युपभुङ्क्तेऽविवेकतः । अनश्नन्नन्य इतर ईश्वरो नित्यशुद्धबुद्धमुक्तस्वभावः सर्वज्ञः सत्त्वोपाधिरीश्वरो नाश्नाति । प्रेरयिता ह्यसावुभयोर्भोज्यभोक्त्रोर्नित्यसाक्षित्वसत्तामात्रेण । स त्वनश्नन्नन्योऽभिचाकशीति पश्यत्येव केवलम् । दर्शनमात्रेण हि तस्य प्रेरयितृत्वं राजवत् ॥ १ ॥

तत्रैवं सति समाने वृक्षे यथोक्ते शरीरे पुरुषो भोक्ता जीवोऽविद्याकामकर्मफलरागादिगुरुभाराक्रान्तोऽलाबुरिव सामुद्रे जले निमग्नो निश्चयेन देहात्मभावमापन्नोऽयमेवाहं अमुष्य पुत्रोऽस्य नप्ता कृशः स्थूलो गुणवान्निर्गुणः सुखी दुःखीत्येवं प्रत्ययो नास्त्यन्योऽस्मादिति जायते म्रियते संयुज्यते वियुज्यते च सम्बन्धिबान्धवैः । अतोऽनीशया न कस्यचित् समर्थोऽहं पुत्रो मम विनष्टो मृता मे भार्या किं मे जीवितेनेत्येवं दीनभावोऽनीशा तया शोचति सन्तप्यते मुह्यमानोऽनेकैरनर्थ-

---

ऊर्द्ध्वमुत्कृष्टं ब्रह्ममूलमधिष्ठानमस्येत्यूर्द्ध्वमूलोऽर्वाञ्चः प्राणादयः शाखा इवास्येत्यवाक्शाखः । स्वावस्थाने नियन्तुमस्य न शक्यमित्यश्वत्थः । अव्यक्तमव्याकृतं मूलमुपादानमप्यस्य तस्मात् प्रभवतीति तथोक्तो यावदज्ञानभावीत्यर्थः । अविद्याकामकर्मा-

यदा पश्यः पश्यते रुक्मवर्णं कर्त्तारमीशं पुरुषं ब्रह्मयोनिम्। तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ॥ ३ ॥

---

प्रकारैरविवेकितया चिन्तामापद्यमानः स एवं प्रेततिर्य्यङ्म-नुष्यादियोनिष्वाजवं जवीभावमापन्नः कदाचिदनेकजन्मसु शुद्धधर्मसञ्चितनिमित्तेन केनचित्परमकारुणिकेन दर्शितयोग-मार्गे अहिंसासत्यब्रह्मचर्य्यसर्वत्यागशमदमादिसम्पन्नः समा-हितात्मा सन् जुष्टं सेवितमनेकैर्योगिमार्गैः कर्म्मभिश्च यदा यस्मिन् काले पश्यति ध्यायमानोऽन्यं वृक्षोपाधिलक्षणाद्विल-क्षणमीशमसंसारिणमशनायापिपासा-शोकमोहजरामृत्यतीत-मीशं सर्वस्य जगतोऽयमहमस्म्यात्मा सर्वस्य समः सर्वभूतस्थो नेतरोऽविद्याजनितोपाधिपरिच्छिन्नो मायात्मेति विभूतिं महिमानञ्च जगद्रूपमस्यैव मम परमेश्वरस्येति यदैवं द्रष्टा तदा वीतशोको भवति सर्वस्माच्छोकसागराद्विप्रमुच्यते कृत-कृत्यो भवतीत्यर्थः ॥ २ ॥

अन्योऽपि मन्त्र इममेवार्थमाह सविस्तरम्। यदा यस्मिन् काले पश्यः पश्यतीति विद्वान् साधक इत्यर्थः पश्यते पश्यति पूर्ववद्रुक्मवर्णं स्वयं ज्योतिः स्वभावं रुक्मस्येव वा

---

चेश्वरस्य तावित्यर्थः। सत्त्वो मायाख्यमुपाधिरस्येति सत्त्वो-पाधिः। ज्ञानीत्मकस्यामलमत्त्वराशेरिति श्रुतम्। आवरणं विक्षेपश्च द्वयमविद्यायाः कार्य्यम्। तत्रेश्वरभावा प्रतिपत्ति-रनीशावरणं शोचतीति विक्षेपस्तदुभयहेतुरनिर्वाच्यमज्ञानं

प्राणो ह्येष यः सर्वभूतैर्विभाति विजानन् विद्वान् भवते नातिवादी । आत्मक्रीड आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठः ॥ ४ ॥

---

ज्योतिरस्याविनाशि कर्त्तारं सर्वस्य जगत ईशं पुरुषं ब्रह्मयोनिं ब्रह्म च तद्योनिश्चासौ ब्रह्मयोनिस्तं ब्रह्मयोनिं ब्रह्मणो वाऽपरस्य योनिं स यदा चैव पश्यति तदा स विद्वान् पश्यः पुण्यपापे बन्धनभूते कर्म्मणी समूले विधूय निरस्य दग्ध्वा निरञ्जनो निर्लेपो विगतक्लेशः परमं प्रकृष्टं निरतिशयं साम्यं समतामद्वयलक्षणं द्वैतविषयाणि सामान्यतो वाऽथे यातोऽद्वयलक्षणमेतत्परमं साम्यमुपैति प्रतिपद्यते ॥ ३ ॥

किञ्च योऽयं प्राणस्य प्राणः पर ईश्वरो ह्येष प्रकृतः सर्वभूतैर्ब्रह्मादिस्तम्भपर्यन्तैः । इत्थम्भूतलक्षणा तृतीया । सर्वभूतस्थः सर्वात्मा सन्नित्यर्थः । विभाति विविधं दीप्यते ।

---

मोहः । तेन विशिष्टोऽनेकैरनर्थप्रकारैरहं करोमीत्यादिभि र्विवेकतया तादात्म्यापत्तयेत्यर्थः । आजन्ममनवरतं जीवभावं निकृष्टभावं लक्षणया लघुभावं कर्म्म वायुप्रेरिततया जीवभावं दौर्म्मनस्यमापन्नः पूर्वपदित्यभेदेनेत्यर्थः । आत्मनि रतिरात्मरतिस्तत्पुरुषः सैव क्रियास्यास्तीत्यात्मरतिः । क्रियावानिति मतुल्व कः प्रतीयते कथमुक्तं बहुव्रीहिमतुभर्थयोरन्यतरोऽतिरिच्यत इति । सत्यम् असमासपाठे द्वयोरर्थवत्त्वमासीत् समासपाठे त्वन्यतरे मतुरतिरिच्यते विशेष्यते बाह्यक्रियानिवृत्तिलाभादित्यर्थः ॥ १ ॥ २ ॥ ३ ॥

एवं सर्वभूतस्थं साक्षादात्मभावेनायमहमस्मीति विजानन् विद्वान् वाक्यार्थज्ञानमात्रेण न स भवति न भवतीत्येतत्। किम् अतिवादी अतीत्य सर्वानन्यान् वदितुं शीलमस्येत्यतिवादी। तस्त्वेवं साक्षादात्मानं प्राणस्य प्राणं विद्वान्नातिवादी भवतीत्यर्थः। सर्वं यदात्मैव नान्यदस्तीति दृष्टं तदा किं ह्यसावतीत्य वदेत्। यस्य त्वपरमपरमन्यद्दृष्टमस्ति स तदतीत्य वदति। अयन्तु विद्वानात्मनोऽन्यन्न पश्यति नान्यच्छृणोति नान्यद्विजानाति। अतो नातिवदति। किञ्चात्मक्रीड़ आत्मन्येव क्रीडनं यस्य नान्यत्र पुत्रदारादिषु स आत्मक्रीडः तथाऽऽत्मरतिरात्मन्येव च रतीरमणं प्रीतिर्यस्य स आत्मरतिः। क्रीड़ा बाह्यसाधनमापेक्षा। रतिस्तु साधननिरपेक्षा बाह्यविषयप्रीतिमात्रमिति विशेषः। तथा क्रियावान् ज्ञानध्यानवैराग्यादिक्रिया यस्य सोऽयं क्रियावान्। समासपाठे आत्मरतिरेव क्रियाऽस्य विद्यत इति बहुव्रीहिमतुवर्थयोरन्यतरोऽतिरिच्यते। केचित्त्वग्निहोत्रादिकर्म्मब्रह्मविद्ययोः समुच्चयार्थमिच्छन्ति। तच्चैष ब्रह्मविदां वरिष्ठ इत्यनेन मुख्यार्थवचनेन विरुध्यते। न हि बाह्यक्रिया आत्मरतिश्च भवितुं शक्नुतः। कश्चिद्बाह्यक्रियाविनिवृत्तो ह्यात्मक्रीडो भवति बाह्यक्रियात्मक्रीड़योर्विरोधात्। न हि तमः प्रकाशयोर्युगपदेकत्र स्थितिः सम्भवति। तस्मादसत्प्रलपितमेतत्। अनेन ज्ञानकर्म्मसमुच्चयप्रतिपादनम्। अन्या वाचो विमुञ्चथ सन्न्यासयोगादित्यादिश्रुतिभ्यश्च। तस्मादयमेवेह क्रिया-

एकदेशिव्याख्यामुद्भाव्य निराचष्टे। केचिदित्यादिना।

सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्य्येण नित्यम्। अन्तः शरीरे ज्योतिर्मयो हि शुभ्रो यं पश्यन्ति यतयः क्षीणदोषाः ॥५॥

---

वान् यो ज्ञानध्यानादिक्रियावानसम्भिन्नार्यमर्य्यादः सन्न्यासी। य एव लक्षणो नातिवाद्यात्मक्रीड आत्मरतिः क्रियावान् ब्रह्मनिष्ठः स ब्रह्मविदां सर्वेषां वरिष्ठः प्रधानः ॥ ४ ॥

अधुना सत्यादीनि भिक्षोः सम्यग्ज्ञानसहकारीणि साधनानि विधीयन्ते निवृत्तिप्रधानानि। सत्येनानृतत्यागेन मृषावदनत्यागेन लभ्यः प्राप्तव्यः। किञ्च तपसा ह्येन्द्रियमन एकाग्रतया। मनसश्चेन्द्रियाणाञ्चैकाग्र्यं परमं तप इति स्मरणात्। तद्ध्यनुकूलमात्मदर्शनाभिमुखीभावात् परमं साधनं तपो नेतरच्चान्द्रायणादि। एष आत्मा लभ्य इत्यनुषङ्गः। सर्वत्र सम्यग्ज्ञानेन यथाभूतात्मदर्शनेन ब्रह्मचर्य्येण मैथुनासमाचारेण नित्यं सत्येन नित्यं तपसा नित्यं सम्यग्ज्ञानेनेति सर्वत्र नित्यशब्दोऽन्तर्दीपकन्यायेनानुषक्तव्यः। वक्ष्यति च। न येषु जिह्ममनृतं न माया चेति।

---

अनेन वचनेन ज्ञानकर्मसमुच्चयप्रतिपादनं क्रियत इत्येतदसत्प्रलपितमेवेति योजना ॥ ४ ॥

सम्यग्ज्ञानसहकारीणीत्यत्र सम्यग्ज्ञानशब्देन वस्तुविषयावगतिफलावसानं वाक्यार्थज्ञानमुच्यते। अवगतिफलस्य स्वकार्य्येऽविद्यानिवृत्तौ सहकार्य्यपेक्षाभावात्। अतोऽपरिपक्वज्ञानस्य सत्यादीनाञ्च परिपक्वविद्यालाभाय समुच्चय इष्यत

सत्यमेव जयते नानृतं सत्येन पन्था विततो देवयानः। येनाक्रमन्त्यृषयो ह्याप्तकामा यत्र तत्सत्यस्य परमं निधानम् ॥ ६ ॥

---

कोऽसावात्मा य एतैः साधुभिर्लभ्यत इत्युच्यते। अन्तः शरीरेऽन्तर्मध्ये शरीरस्य पुण्डरीकाकाशे ज्योतिर्मयो हि रुक्मवर्णः शुभ्रः शुद्धोऽयमात्मानं पश्यन्त्युपलभन्ते यतयो यतनशीलाः सन्न्यासिनः चीणदोषाः चीणक्रोधादिचित्तमलाः स आत्मा नित्यं सत्यादिसाधनैः सन्न्यासिभिर्लभ्यत इत्यर्थः। न कदाचित् कैः सत्यादिभिर्लभ्यते सत्यसाधनस्तुत्यर्थोऽयमर्थवादः ॥ ५ ॥

सत्यमेव सत्यवानेव जयते जयति नानृतं नानृतवादीत्यर्थः। न हि सत्यानृतयोः केवलयोः पुरुषानाश्रितयोः सम्भवो जयः पराजयो वा सम्भवति। प्रसिद्धं लोकेऽसत्यवानन्टतवादभिभूयते न विपर्ययोऽतः सिद्धं सत्यस्य बलवत् साधनत्वम्। किञ्च। शास्त्रतोऽप्यवगम्यते सत्यस्य साधनातिशयत्वम्। कथम्। सत्येन यथाभूतवादव्यवस्थया पन्था देवयानाख्यो विततो विस्तीर्णः सातत्येन प्रवृत्तः। येन

---

एव। नैतावताभास्कराभिमतसिद्धिः। परिपक्वविद्यावद्दकार्यपेचायां मानाभावात्। ततः कर्माऽसन्नेपश्रवणाद्देवादीनां कर्मविहीनानां मुक्तिश्रवणाच्चेति ॥ ५ ॥

कुहकं परवचनमन्तरन्यथा गृहीत्वा बहिरन्यथा प्रकाशनम्। माया शाठ्यं विभवानुसारेणाप्रदानम्। अहङ्कारो

बृहच्च तद्दिव्यमचिन्त्यरूपं सूक्ष्माच्च तत्सूक्ष्मतरं विभाति। दूरात्सुदूरे तदिहान्तिके च पश्यत्स्विहैव निहितं गुहायाम्॥ ७॥

---

यथा ह्याक्रमन्ति क्रमन्ते ऋषयो दर्शनवन्तः कुहकमायाशाठ्याहङ्कारदम्भानृतवर्जिता ह्याप्तकामा विगततृष्णाः सर्वतो यत्र यस्मिन् तत्परमार्थतत्त्वं सत्यस्योत्तमसाधनस्य सम्बन्धि साध्यं परमं प्रकृष्टं निधानं पुरुषार्थरूपेण निधीयते प्रवर्त्तते। तत्र च येन यथा क्रमन्ति सत्येन वितत इति पूर्वेण सम्बन्धः। किं तत् किं धर्म्मक तदत्त्युच्यते॥६॥

बृहच्च तन्महच्च तत्प्रकृष्टं ब्रह्म सत्यादिसाधनेन सर्वतो व्याप्तत्वात्। दिव्यं स्वयम्प्रभमनिन्द्रियगोचरम् अतएव न चिन्तयितुं शक्यतेऽस्य रूपमित्यचिन्त्यरूपम्। सूक्ष्मादाकाशादेरपि तत् सूक्ष्मतरं निरतिशयं हि सौक्ष्म्यमस्य सर्वकारणत्वाद्विभाति विविधमादित्यचन्द्राद्याकारेणाभाति दीप्यते। किञ्च दूराद् विप्रकृष्टदेशात् सुदूरे विप्रकृष्टतरे देशे वर्त्ततेऽविदुषामत्यन्तागम्यत्वात्तद्ब्रह्म। इह देहेऽन्तिके समीपे च। विदुषामात्मत्वात् सर्वान्तरत्वाच्चाकाशस्याप्यन्तर-

---

मिथ्याभिमानः। दम्भो धर्म्मध्वजित्वम्। अनृतमयथादृष्टभाषणम्। एतैर्दोषैर्वर्जिता इत्यर्थः। सत्यस्य निधानं यदुक्तं तत् पुनर्विशेष्यत इत्याह। किन्तत् किं धर्म्मक तदिति॥६॥

ज्ञानप्रसादेनेत्यत्र ज्ञायतेऽर्थोऽनेनेति व्युत्पत्त्या बुद्धिरुच्यते। ध्यायमानो ध्यानप्रसादं लभ्यते। ज्ञानप्रसादेनात्मन पश्यतीति

न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवै-
स्तपसा कर्म्मणा वा। ज्ञानप्रसादेन विशुद्धसत्त्व-
स्ततस्तु तं पश्यते निष्कलं ध्यायमानः॥ ८॥

---

श्रुतिः। इह पश्यत्सु चेतनावत्स्वित्येतन्निहितं स्थितं दर्शनादिक्रियावत्त्वेन योगिभिर्लक्ष्यमाणम्। क्व। गुहायां बुद्धिलक्षणायाम्। तत्र हि निगूढं लक्ष्यते विद्वद्भिः। तथाप्यविद्यया संवृतं सन्न लक्ष्यते तत्रस्थमेवाविद्वद्भिः॥ ७॥

पुनरप्यसाधारणेऽप्यसाधारणं तदुपलब्धिसाधनमुच्यते॥ यस्मान्न चक्षुषा गृह्यते केनचिदप्यरूपत्वान्नापि गृह्यते वाचाऽनभिधेयत्वान्न चान्यैर्देवैरिन्द्रियैः। तपसः सर्वप्राप्तिसाधनत्वेऽपि न तपसा गृह्यते। तथा वैदिकेनाग्निहोत्रादिकर्म्मणा प्रसिद्धमहत्त्वेनापि न गृह्यते। किं पुनस्तस्य ग्रहणसाधनमित्याह। ज्ञानप्रसादेनात्मावबोधनसमर्थमपि स्वभावेन सर्वप्राणिनां ज्ञानं बाह्यविषयरागादिदोषकलुषितमप्रसन्नमशुद्धं सन्नावबोधयति नित्यं सन्निहितमप्यात्मतत्त्वं मलावनद्धमिवादर्शम्। विलुलितमिव सलिलम्। तद्यदिन्द्रियविषयसंसर्ग-जनित-रागादिमलकालुष्यापनयनादादर्शसलिलादिवत् प्रसादितं स्वच्छं शान्तमवतिष्ठते तदा ज्ञानस्य प्रसादः स्यात्। तेन विशुद्धान्तःकरणो योग्यो ब्रह्म द्रष्टुं यस्मात्

---

क्रमो द्रष्टव्यः।• संशयादिमलरहितस्य प्रमाणज्ञानस्यैव साक्षात्कारहेतुत्वाद्ध्यानक्रियायाः प्रमितिसाधनत्वासिद्धेरित्यर्थः। बौद्धादेर्विसादौ चेतनत्वभ्रमदर्शनाच्चित्तं तस्मिन् स्वमर्मगोपि

एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेश। प्राणैश्चित्तं सर्वमोतं प्रजानां यस्मिन् विशुद्धे विभवत्येष आत्मा ॥ ९॥

यं यं लोकं मनसा संविभाति विशुद्धसत्त्वः

---

तस्मात्तमात्मानं पश्यते पश्यति उपलभते निष्कलं सर्वावयवभेदवर्जितं ध्यायमानः सत्यादिसाधनतानुपसहृतकरण एकाग्रेण मनसा ध्यायमानश्चिन्तयन्नयमात्मानमेव पश्यतीति ॥८॥

एषोऽणुः सूक्ष्मश्चेतसा विशुद्धज्ञानेन केवलेन वेदितव्यः। क्वासौ। यस्मिञ्छरीरे प्राणो वायुः पञ्चधा प्राणापानादिभेदेन संविवेश सम्यक्प्रविष्टस्तस्मिन्नेव शरीरे हृदये चेतसा ज्ञेय इत्यर्थः। कीदृशेन चेतसा वेदितव्य इत्याह। प्राणैः सहेन्द्रियैश्चित्तं सर्वमन्तःकरणं प्रजानामोतं व्याप्तं येन क्षीरमिव स्नेहेन काष्ठमिवाग्निना। सर्वं हि प्रजानामन्तःकरणं चेतनावत् प्रसिद्धं लोके। यस्मिंश्च चित्ते क्लेशादिमलवियुक्ते शुद्धे विभवत्येष उक्त आत्मा विशेषेण स्वेनात्मना विभवत्यात्मानं प्रकाशयतीत्यर्थः ॥ ९ ॥

य एवमुक्तलक्षणं सर्वात्मानमात्मत्वेन प्रतिपन्नस्तस्य सर्वात्मत्वादेव सर्वावाप्तिलक्षणं फलमाह। यं यं लोकं

---

च चैतन्याभिव्यक्तिकाले स्वभावत एव योग्यम्। ततश्चित्ते परमात्मनोऽभिव्यक्तिसम्भावनाच्चेतसा ज्ञेयत्वमुक्तम् इति सम्भावनार्थमाह। प्राणैः सहेन्द्रियैश्चित्तमिति। ओतं चैतन्येन

कामयते यांश्च कामान्। तं तं लोकं जायते तांश्च कामांस्तस्मादात्मज्ञं ह्यर्चयेद्भूतिकामः॥१०॥

इति तृतीयमुण्डके प्रथमः खण्डः॥१॥

स वेदैतत्परमं ब्रह्म धाम यत्र विश्वं निहितं

---

पित्रादिलक्षणं मनसा संविभाति सङ्कल्पयति मह्यमन्यस्मै वा भवेदिति विशुद्धसत्त्वः क्षीणक्लेश आत्मविन्निर्मलान्तःकरणः कामयते यांश्च कामान् प्रार्थयते भोगांस्तं तं लोकं जयते प्राप्नोति तांश्च कामान् सङ्कल्पितान् भोगान्। तस्माद्विदुषः सत्यसङ्कल्पत्वादात्मज्ञमात्मज्ञानेन विशुद्धान्तःकरणं ह्यर्चयेत् पूजयेत् पादप्रक्षालनशुश्रूषानमस्कारादिभिर्भूतिकामो विभूतिमिच्छुः। ततः पूजार्ह एवासौ॥ १०॥

इति तृतीयमुण्डके प्रथमखण्डभाष्यम्॥ १॥

यस्मात् स वेद जानात्यसावेतद्यथोक्तलक्षणं परमं ब्रह्म प्रकृष्टं धाम सर्वकामानामाश्रयमास्पदं यत्र यस्मिन् ब्रह्मणि धाम्नि विश्वं समस्तं जगन्निहितमर्पितं यच्च स्वेन ज्योतिषा

---

सर्वस्य तर्हि चित्ते किमिति ब्रह्म स्वत एवापरोक्षं न भवतीत्यत आह। यस्मिन् चित्त इति। सगुणविद्याफलमपि निर्गुणविद्यास्तुतये प्ररोचनार्थमुच्यते। यं यमिति। परमार्थतत्त्वज्ञानादित्यर्थः॥ ७॥ ८॥ ९॥ १०॥

इति तृतीयमुण्डके प्रथमखण्डभाष्यटीका॥ १॥

विषयेषु यथास्थितदोषदर्शनात्पर्याप्तकामः क्षीणरागो

भाति शुभ्रम् । उपासते पुरुषं ये ह्यकामास्ते शुक्रमेतदतिवर्त्तन्ति धीराः ॥ १ ॥

कामान् यः कामयते मन्यमानः स कामभिर्जायते तत्र तत्र । पर्य्याप्तकामस्य कृतात्मनस्तु इहैव सर्वे प्रविलीयन्ति कामाः ॥ २ ॥

---

भाति शुभ्रं शुद्धम् । तमप्येवमात्मज्ञं पुरुषं ये ह्यकामा विभूतितृष्णावर्जिता मुमुक्षवः सन्त उपासते परमिव देवं ते शुक्रं नृबीजं यदेतत् प्रसिद्धं शरीरोपादानकारणमतिवर्त्तन्तेऽतिगच्छन्ति धीरा बुद्धिमन्तो न पुनर्योनिं प्रसर्पन्ति । न पुनः क्व रतिं करोतीति श्रुतेः ॥ अतस्तं पूजयेदित्यभिप्रायः ॥ १ ॥

मुमुक्षोः कामत्याग एव प्रधानं साधनमित्येतद्दर्शयति कामान् यो दृष्टादृष्टेष्टविषयान् कामयते मन्यमानस्तद्गुणांश्चिन्तयानः प्रार्थयते स, तैः कामभिः कामैर्धर्म्माधर्म्मप्रवृत्तिहेतुभिर्विषयेच्छारूपैः सह जायते तत्र तत्र । यत्र यत्र विषयप्राप्तिनिमित्तकामाः कर्म्मसु पुरुषं नियोजयन्ति तत्र

---

विलक्षणयाऽऽत्मकामस्यात्मबुभुत्सयैव वशीकृतचित्तस्य विषयेभ्यः कामान्निवृत्ता भवन्तीत्यर्थः सामर्थ्यादवगम्यते । स्वहेतुविनाशात् पुनः कामा न जायन्त इति । ज्ञातानां ध्यानं त्विन्द्रियादिव्यापारकल्पनादित्यर्थः । न बहुना श्रुतेनेति उपनिषद्विचारव्यतिरिक्तेनेत्यर्थः । तेन वर्णनेनेति कथं व्याख्यानं यत्

नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनूं स्वाम् ॥ ३ ॥

---

तत्र तेषु तेषु विषयेषु तैरिव कामैर्वेष्टितो जायते। यस्तु परमार्थतत्त्वविज्ञानात् पर्याप्तकाम आत्मकामत्वेन परिसमन्तत आप्ताः कामा यस्य तस्य पर्याप्तकामस्य कृतात्मनोऽविद्यालक्षणादपररूपादपनीय स्वेन परेण रूपेण कृत आत्मा विद्यया यस्य तस्य कृतात्मनस्त्विहैव तिष्ठत्येव शरीरे। सर्वे धर्माधर्मप्रवृत्तिहेतवः प्रविलीयन्ति विलयमुपयन्ति नश्यन्तीत्यर्थः। कामास्तज्जन्महेतुविनाशान्न जायन्त इत्यभिप्रायः ॥ २ ॥

यद्येवं सर्वलाभात् परमात्मलाभस्तल्लाभाय प्रवचनादय उपाया बाहुल्येन कर्त्तव्या इति प्राप्त इदमुच्यते। योऽयमात्मा व्याख्यातो यस्य लाभः परः पुरुषार्थो नाऽसौ वेदशास्त्राध्ययनबाहुल्येन प्रवचनेन लभ्यः। तथा न मेधया ग्रन्थार्थधारणशक्त्या। न बहुना श्रुतेन नापि भूयसा श्रवणेनेत्यर्थः। केन तर्हि लभ्य इत्युच्यते। यमेव परमात्मानमेष

---

तदोभिप्रायत्वं साधनविवक्षायाः प्रस्तुतत्वादित्यर्थं ब्रूमः। परमात्माऽस्मीत्यभेदानुसन्धानं वर्णनम्। तेन वर्णनेनैव आत्मा लभ्यो भवति। बहिर्मुखेन तु शतशोऽपि श्रवणादौ क्रियमाणे न लभ्यते। अतः परमात्माऽस्मीत्यनुसन्धानं परमात्मभजनं पुरस्कृत्यैव श्रवणादिसम्पादनीयमिति भावः। अथवाऽयमेव

नायमात्मा बलहीनेन लभ्यो न च प्रमा-
दात्तपसो वाप्यलिङ्गात् । एतैरुपायैर्यतते यस्तु
विद्वांस्तस्यैष आत्मा विशते ब्रह्मधाम ॥ ४ ॥

---

विद्वान् वृणुते प्राप्तुमिच्छति तेन वरणेनैष परमात्मा लभ्यः नान्येन साधनान्तरेण । नित्यलब्धस्वभावत्वात् । कीदृशोऽसौ विदुष आत्मलाभ इत्युच्यते । तस्यैष आत्माऽविद्यासच्छन्ना स्वां परां तनूं स्वात्मतत्त्वस्वरूपां विवृणुते प्रकाशयति प्रकाश इव घटादिर्विद्यायां सत्यामाविर्भवतीत्यर्थः ॥ ३ ॥

तस्मादन्यत्यागेनात्मलाभप्रार्थनैवाऽऽत्मलाभसाधनमित्यर्थः । आत्मप्रार्थनासहायभूतान्येतानि च साधनानि बलाप्रमादतपांसि लिङ्गयुक्तानि संन्यासहितानि । यस्मादयमात्मा बलहीनेन बलप्रहीणेनात्मनिष्ठाजनितवीर्यहीनेन न लभ्यो नापि लौकिकपुत्रपश्वादिविषयासङ्गनिमित्तप्रमादात् । तथा तपसो वाप्यलिङ्गाल्लिङ्गरहितात् । तपोऽत्र ज्ञानम् । लिङ्गं संन्यासस्तत्संन्यासरहितात् ज्ञानान्न लभ्य इत्यर्थः । एतैरुपायैर्बलाप्रमादसंन्यासज्ञानैर्यतते तत्परः सन् प्रयते । यस्तु

---

परमात्मानं वृणुते तेन परमात्मना मुमुक्षुरूपव्यवस्थितेन वरणेनाभेदानुसन्धानलक्षणेन प्रार्थनेन कृत्वा लभ्य परमात्मैव मुमुक्षुरूपव्यवस्थित इत्यभेदानुसन्धानेनैव लभ्यो न कर्मणेत्यर्थः ॥ १ ॥ २ ॥ ३ ॥

वीर्यमिति । मिथ्याज्ञानानभिभाव्यतालक्षणो विशेषः । अलिङ्गादिति कथम् । इन्द्रजनकगार्गीप्रभृतीनामप्यात्मलाभ-

संप्राप्यैनमृषयो ज्ञानतृप्ताः कृतात्मानो वीतरागाः प्रशान्ताः। ते सर्वगं सर्वतः प्राप्य धीरा युक्तात्मानः सर्वमेवाविशन्ति ॥ ५ ॥

वेदान्तविज्ञानसुनिश्चितार्थाः सन्न्यासयोगाद्य-

---

विद्वान् विवेकी आत्मवित् तस्य विदुषः आत्मा एष विशते सम्प्रविशति ब्रह्मधाम ॥ ४ ॥

कथं ब्रह्मविशत इत्युच्यते। सम्प्राप्य समवगम्यैनमात्मानमृषयो दर्शनवन्तस्तेनैव ज्ञानेन तृप्ता न वाह्येन तृप्तिसाधनेन शरीरोपचयकारणेन। कृतात्मानः परमात्मस्वरूपेणैव निष्पन्नात्मनः सन्तः। वीतरागा विगतरागादिदोषाः। प्रशान्ता उपरतेन्द्रियाः। त एवम्भूताः सर्वगं सर्वव्यापिनमाकाशवत् सर्वतः सर्वत्र प्राप्य नोपाधिपरिच्छिन्नेनैकदेशेन। किन्तर्हि ब्रह्मैवाद्वयमात्मत्वेन प्रतिपद्य धीरा अत्यन्तविवेकिनो युक्तात्मानो नित्यसमाहितस्वभावाः सर्वमेव समस्तं शरीरपातकालेऽप्याविशन्ति. भिन्नघटाकाशवदविद्याकृतोपाधिपरिच्छेदं जहाति। एवं ब्रह्मविदो ब्रह्मधाम एवं ब्रह्मविदो ब्रह्मधाम प्रविशन्ति ॥ ५ ॥

किञ्च वेदान्तजनितविज्ञानं वेदान्तविज्ञानं तस्यार्थः

---

न्यवणात्। मत्वै सन्न्यासी नाम सर्वत्यागात्मकस्तेषामपि सत्त्वाभिमानाभावादस्त्येवाऽऽन्तरः सन्न्यासो वाह्यस्तु निष्क्रमविवचितम्। न लिङ्गं धर्मकारणमिति स्मरणात्। नैष्कर्म्यसांहि-

तयः शुद्धसत्त्वाः। ते ब्रह्मलोकेषु परान्तकाले परामृताः परिमुच्यन्ति सर्वे ॥ ६ ॥

---

परमात्मा विज्ञेयः सोऽर्थः सुनिश्चितो येषां ते वेदान्तविज्ञानसुनिश्चितार्थाः। ते च सन्न्यासयोगात् सर्वकर्म्मपरित्यागलक्षणयोगात् केवलब्रह्मनिष्ठास्वरूपाद् योगाद्यतयो यत्नशीलाः शुद्धसत्त्वाः शुद्धं सत्त्वं येषां सन्न्यासयोगात् ते शुद्धसत्त्वाः। ते ब्रह्मलोकेषु। संसारिणां ये मरणकालास्ते परान्तास्तानपेक्ष्य मुमुक्षूणां संसारावसाने देहपरित्यागकालः परान्तकालस्तस्मिन् परान्तकाले साधकानां बहुत्वाद् ब्रह्मैव लोको ब्रह्मलोक एकोऽप्यनेकवद् दृश्यते प्राप्यते च। अतो बहुवचनं ब्रह्मलोकेष्विति ब्रह्मणीत्यर्थः। परामृताः परममृतममरणधर्म्मकं ब्रह्मात्मभूतं येषां ते परामृता जीवन्त एव ब्रह्मभूताः परामृताः सन्तः परिमुच्यन्ति परिसमन्तात् प्रदीपनिर्वाणवद् घटाकाशवच्च निर्वृतिमुपयन्ति परिमुच्यन्ति परिसमन्तान्मुच्यन्ते सर्वे न देशान्तरं गन्तव्यमपेक्षन्ते। शकुनीनामिवाकाशे जले वारिचरस्य च। पदं यथा न दृश्येत तथा ज्ञानविदां गतिः। अनध्वगा अध्वसु पारयिष्णव इति श्रुति स्मृतिभ्यां देशपरिच्छिन्ना हि गतिः संसारविषयैव। परिच्छिन्नसाधनसाध्यत्वात्। ब्रह्म तु समस्तत्वान्न देशपरिच्छेदेन गन्तव्यम्। यदि हि देशपरिच्छिन्नं ब्रह्म स्यान्मूर्त्तद्रव्यवदाद्यन्तवदन्याश्रितं सावयवमनित्य

---

त्वन्तं विवक्षित प्रदीपस्य अर्चिश्शताच्चे

गताः कलाः पञ्चदश प्रतिष्ठा देवाश्च सर्वे प्रतिदेवतासु। कर्म्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकी भवन्ति ॥ ७ ॥

---

कृतनाशः स्यात्। न त्वेवंविधं ब्रह्म भवितुमर्हति। अत-स्तत्प्राप्तिश्च नैव देशपरिच्छिन्ना भवितुं युक्ता ॥ ६ ॥

अपि चाविद्यादिसंसारबन्धापनयनमेव मोक्षमिच्छन्ति ब्रह्मविदो न तु कार्य्यभूतम्। किञ्च मोक्षकाले या देहा-रम्भकाः कलाः प्राणाद्यास्ताः स्वाः प्रतिष्ठाः प्रतिष्ठाङ्गताः स्वं कारणं गता भवन्तीत्यर्थः। प्रतिष्ठा इति द्वितीयाबहु-वचनम्। पञ्चदश पञ्चदशसंख्यका या अन्त्यप्रश्नपरिपठिताः प्रसिद्धा देवाश्च देहाश्रयाश्चक्षुरादिकरणस्थाः सर्वे प्रतिदेवता-स्वादित्यादिषु गता भवन्तीत्यर्थः। यानि च मुमुक्षुणा कृतानि कर्म्माण्यप्रवृत्तफलानि प्रवृत्तफलानामुपभोगेनैव क्षीणत्वाद् विज्ञानमयश्चात्माऽविद्याकृतबुद्ध्याद्युपाधिमात्मत्वेन मत्वा जलादिषु सूर्य्यादिप्रतिबिम्बवदिह प्रविष्टो देहभेदेषु

---

सामान्यतापत्तिस्तद्वदित्याह। प्रदीपनिर्वाणवदिति। पदं पाद-न्यासः। प्रतिबिम्बं न दृश्येताभावादेवेत्यर्थः। पारगा इति। संसाराध्वनः पारयिष्णवः पारयितुं समापयितुमिच्छन्तीति समापितकामा अनध्वगा भवन्तीत्यर्थः। तर्कतोऽपीहैव मोक्षो वक्तव्य इत्याह। देशपरिच्छिन्ना हीत्यादिना ॥ ४ ॥ ५ ॥ ६ ॥

स्वाः प्रतिष्ठाः प्रतिगता भवन्तीति भूतांशानां भौतिका-नाञ्च महाभूतेषु लयो दर्शितः। अन्त्यप्रश्नेति प्राश्नग्रन्थे,

यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय । तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् ॥८॥

---

कर्म्मणां तत्फलार्थत्वात् सह तेनैव विज्ञानमयेनात्मना । अतो विज्ञानमयो विज्ञानप्रायः । ते एते कर्म्माणि विज्ञानमयश्चात्मोपाध्यपनयनेन सति परेऽव्ययेऽनन्ते अक्षये ब्रह्मण्याकाशकल्पेऽजेऽजरेऽमृतेऽभयेऽपूर्व्वेऽनपरेऽनन्तरेऽवाह्येऽद्वये शिवे शान्ते सर्वे एकीभवन्त्यविशेषतां गच्छन्त्येकत्वमापद्यन्ते जलाद्याधारापनय इव सूर्य्यादिप्रतिविम्बाःसूर्य्ये घटाद्यपनयमाकाशे घटाद्याकाशः ॥ ७ ॥

किञ्च यथा नद्यो गङ्गाद्याः स्यन्दमाना गच्छन्त्यः समुद्रं प्राप्यास्तमदर्शनमविशेषात्मभावं गच्छन्ति प्राप्नुवन्ति नाम च रूपञ्च नामरूपे विहाय हित्वा तथाऽविद्याकृतनामरूपाद्विमुक्तः सन् परादक्षरात् पूर्व्वोक्तात् परं दिव्यं पुरुषं यथोक्तलक्षणमुपैत्युपगच्छति ॥ ८ ॥

---

प्रथमप्रश्ने प्राण श्रद्धाद्या याः कलाः पठिता इत्यर्थः । मायामयमहाभूतांशावष्टब्धे जीवाविद्यामयभूतसूक्ष्मैः प्रातिस्विकैरदृष्टसहकृतैः प्रातिस्विकाः प्राणादय आरभ्यन्ते । ते च कर्म्माभिमानिभिर्दैवैः सूर्य्यादिभिरधिष्ठीयन्ते । कर्म्मणो भोगनाशावसाने ते देवाः स्वस्थानं गच्छन्ति । यच्च प्रातिस्विकं स्वाविद्याकार्य्यं तच्च सर्वं ब्रह्मैव सम्पद्यत इत्याह । यानि चेत्यादिना ॥ ७ ॥ ८ ॥

स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति नास्याब्रह्मवित्कुले भवति। तरति शोकं तरति पाप्मानं गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति ॥ ९ ॥

तदेतदृचाऽभ्युक्तं क्रियावन्तः श्रोत्रिया ब्रह्मनिष्ठाः। स्वयं जुह्वत एकर्षिं श्रद्धयन्तस्तेषा-

---

ननु श्रेयस्यनेके विघ्नाः प्रसिद्धा अतः क्लेशानामन्यतमेनान्येन वादे वादिना च विघ्नतो ब्रह्मविदप्यन्यां गतो गच्छति न ब्रह्मैव। न विद्ययैव सर्वप्रतिबन्धस्यापनीतत्वात्। अविद्याप्रतिबन्धमात्रो हि मोक्षो नान्यप्रतिबन्धः। नित्यत्वादात्मभूतत्वाच्च। तस्मात् स यः कश्चिद् वै लोके तत् परमं ब्रह्म वेद साक्षादहमेवास्मीति स नान्यां गतिं गच्छति। देवैरपि अस्य ब्रह्मप्राप्तिं प्रति विघ्नो न शक्यते कर्तुम्। आत्मा ह्येषां प्रभवति। तस्माद्ब्रह्मविद् विद्वान् ब्रह्मैव भवति। किञ्च नास्य विदुषोऽब्रह्मवित् कुले भवति। किञ्च तरति शोकमनेकेष्टवैकल्यनिमित्तं मानसं सन्तापं जीवन्नेवातिक्रान्तो भवति। तरति पाप्मानं धर्माधर्माख्यं गुहाग्रन्थिभ्यो विमुक्तः सन्नमृतो भवतीत्युक्तमेव भिद्यते हृदयग्रन्थिरित्यादि ॥ ९ ॥

अथेदानीं ब्रह्मविद्यासम्प्रदानविध्युपदर्शनेनोपसंहारः

---

एतद्ग्रन्थद्वारकविद्याप्रदानेऽयं विधिराथर्वणिकानामिति।

मेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम् ॥ १० ॥

तदेतत् सत्यमृषिरङ्गिराः पुरोवाच नैतदचीर्णव्रतोऽधीते। नमः परम ऋषिभ्यो नमः परम ऋषिभ्यः ॥ ११ ॥

इति तृतीयमुण्डके द्वितीयः खण्डः ॥२॥

मुण्डकोपनिषत् समाप्ता ॥

---

क्रियते। तदेतद् विद्यासम्प्रदानविधानमृचा मन्त्रेणाभ्युक्तमभिप्रकाशितम्। क्रियावन्तो यथोक्तकर्मानुष्ठानयुक्ताः। श्रोत्रिया ब्रह्मनिष्ठा अपरस्मिन् ब्रह्मण्यभियुक्ताः परब्रह्म बुभुत्सवः स्वयमेकर्षिमेकर्षिनामानमग्निं जुह्वते जुह्वति श्रद्दधन्तः श्रद्दधानाः सन्तो ये तेषामेव संस्कृतात्मनां पात्रभूतानामेतां ब्रह्मविद्याम्। वदेत ब्रूयाच्छिरोव्रतं शिरस्यग्निधारणलक्षणम्। यथाऽऽथर्वणानां वेदे व्रतं प्रसिद्धम्। यैस्तु यैश्च तच्चीर्णं विधिवद्यथाविधानं तेषामेव च वदेत ॥ १० ॥

तदेतदक्षरं पुरुषं सत्यमृषिरङ्गिरा नाम पुरा पूर्वं शौनकाय विधिवदुपसन्नाय पृष्टवते उवाच। तद्वदन्योऽपि स्वं तथैव श्रेयोऽर्थिने मुमुक्षवे मोक्षार्थं विधिवदुपसन्नाय ब्रूयादित्यर्थः। नैतद्ग्रन्थरूपमचीर्णव्रतोऽचरितव्रतो नाप्यधीते।

---

प्रकृतपरामर्शादेतच्छब्दादवगम्यते ग्रन्थद्वारेण विद्यायाः प्रकृत-

नयवति चीर्णव्रतस्य हि विद्याफलाय संस्कृता भवतीति। समाप्ता ब्रह्मविद्या सा येभ्यो ब्रह्मादिभ्यः पारम्पर्य्यक्रमेण सम्प्राप्ता तेभ्यो नमः परम ऋषिभ्यः। परमं ब्रह्म साक्षाद् दृष्टवन्तो ये ब्रह्मादयोऽवगतवन्तश्च ते परमर्षयस्तेभ्यो भूयोऽपि नमः। द्विवचनमत्यन्तादरार्थं मुण्डकसमाप्त्यर्थञ्च ॥११॥

इति तृतीयमुण्डकोपनिषद्भाष्ये द्वितीयखण्डः ॥२॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यपरमहंसपरिव्राजकस्य श्रीमच्छङ्करभगवतः कृतावाथर्वणमुण्डकोपनिषद्भाष्यं समाप्तम् ॥

---

त्वमभवाच्च सर्वत्र ब्रह्मविद्यासम्प्रदानमिति सूचयन्नाह। एतां ब्रह्मविद्यां वदेतेति ॥ ८ ॥ १० ॥ ११ ॥

इति श्रीमत् परमहंसपरिव्राजकाचार्य्यश्रीमदानन्दज्ञानविरचितं मुण्डकभाष्यव्याख्यानं समाप्तम्।



संख्यातुरीयं परममृतमजं ब्रह्म यत्तन्नतोऽस्मि ॥१॥

यो विश्वात्मा विधिज विषयान् प्राश्य भोगान् स्थविष्ठान् पश्चाच्चान्यान् स्वमतिविभवान् ज्योतिषा स्वेन

---

माययेति । तस्यैव ब्रह्मणोऽवस्थात्रयातीतत्वेन निर्विशेषत्वं दर्शयति । तुरीयमिति । चतुर्णां पूरणं तुरीयमिति व्युत्पत्तेर्ब्रह्मणस्तुरीयत्वेन निर्दिष्टस्यास्य सद्वितीयत्वमित्याशङ्क्य कल्पितस्थानत्रयसापेक्षया तुरीयत्वं न सद्वितीयत्वेनेत्याह । मायेति । मायाविशेषेण निरस्तत्वमाशङ्क्योक्तम् । परमिति । मायाद्वारा ब्रह्मणस्तत्सम्बन्धेऽपि स्वरूपद्वारा न तत्सम्बन्धोऽस्तीति कुतो निरस्तेत्यर्थः ॥१॥

*विधिमुखेन वस्तुप्रतिपादनप्रक्रियामवलम्ब्य तदर्थेनोपक्रम्य तस्य* त्वमर्थप्रत्यगात्ममात्रत्वमुक्तम् । अभिधेयफलोक्त्या सम्बन्धाधिकारिणौ च सूचितौ । सम्प्रति निषेधद्वारा वस्तुप्रतिपादनप्रक्रियामाश्रित्य त्वमर्थेनोपक्रम्य *तस्य तदर्थाविसंवादिब्रह्ममात्रत्वं प्रत्याययति* । यो विश्वात्मेति । तत्र त्वमर्थः सन् जिज्ञासितः सर्वनाम्ना परामृश्यते । तस्मिञ्जागरितमारोपितमनुदाहरति । विश्वात्मेति । विश्वं पञ्चीकृतपञ्चमहाभूततत्कार्यात्मकं स्थूलं जगद्वैराजं शरीरम् । तस्मिञ्जागरिते चाहं ममेत्यभिमानवानित्यर्थः । तस्यार्थक्रियामुपन्यस्यति । विधिजेति । विधीयत इति विधिर्धर्मः स चानुपलक्षेण ततो व्यतिरिक्तो विधिरधर्मस्ताभ्यां धर्माधर्माभ्यामविद्याकामपूर्वकाभ्यां विषयाः शब्दादयो जन्यन्ते । तान् भोगयोग्यतया भोगशब्दितान् दिग्वाताद्यनुगृहीतबाह्येन्द्रियद्वारकबुद्धिपरिणामगोचरतया स्थूलान् प्राश्य साक्षादनुभूय स्थितोऽयं *प्रत्यगात्मेत्यर्थः* । तस्यैव स्वप्नावस्थामभ्यस्यति । पश्चाच्चेति । जाग्रद्धेतुकर्मक्षयानन्तरं स्वप्नहेतुकर्मोद्भवे च सति स्थूलेभ्यो विषयेभ्योऽन्यानस्मादेव हेतोः सूक्ष्मान् बाह्येन्द्रियव्यापारमुपरतत्वादविद्याकामकर्मप्रेरितात्मीयमतिप्रभावादेव मनःकरणात्मनो वासनामयानादित्यादिज्योतिषामसन्निहितत्वादात्म

श्रीगौडपादीयकारिकासहितायर्ववेदीयमाण्डूक्योप-
निषदारम्भः ।

॥ हरिः ॐ ॥ ओमित्येतदक्षरमिदं

जित्वा हित्वा सर्वान् विशेषान् विगतगुणगणः पात्वसौ नस्तुरीयः ॥२॥

ओमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानम् । वेदान्तार्थसारसंग्रहभूतमिदं प्रकरणचतुष्टयमोमित्येतदक्षरमित्याद्यारभ्यते । अत एव न पृथक्सम्बन्धाभिधेय-

---

प्रारम्भोपयोगित्वेन क्रियते । परदेवताभक्तिवदपरदेवताभक्तेरपि विद्याप्राप्तावुपकारकत्वस्य शास्त्रीयस्य शिष्यशिक्षार्थं ज्ञापनार्थमवस्थात्रयातीताद्वितीयसिद्धविज्ञानमूर्तेराचार्याच्छ्रोत्रियविज्ञानमाप्ति प्राप्ता यंशाम् पुरुषो वेदेत्यादिश्रुत्यर्थक्रमेण पुरुषपाः प्राप्ति इति द्वितीय श्लोकेन कथयतीति ॥२॥

सर्वं तस्योपव्याख्यानं भूतं भवद्भविष्यदिति सर्वमोङ्कार एव।

प्रयोजनानि वक्तव्यानि। यान्येव तु वेदान्ते सम्बन्धाभिधेयप्रयोजनानि तान्येवेह भवितुमर्हन्ति। तथापि प्रकरणव्याचिख्यासुना सङ्क्षेपतो वक्तव्यानि। तत्र प्रयोजनवत्साधनाभिव्यञ्जकत्वेनाभिधेयसम्बद्धं शास्त्रं पारम्पर्येण विशिष्टसम्बन्धाभिधेयप्रयोजनवद्भवति। किं पुनस्तत् प्रयोजनमित्युच्यते। रोगार्त्तस्येव रोगनिवृत्तौ स्वस्थता। तथा दुःखात्मकस्यात्मनो द्वैतप्रपञ्चोपशमे स्वस्थता। अद्वैतभावः प्रयोजनम्। द्वैतप्रपञ्चस्याविद्याकृतत्वाद्विद्यया तदुपशमः स्यादिति ब्रह्मविद्याप्रकाशनायास्यारम्भः क्रियते। यत्र हि द्वैतमिव भवति। यत्र वाऽन्यदिव स्यात्तत्रान्योऽन्यत्पश्येदन्योऽन्यद्विजानीयात्। यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्तत्केन कं विजानीयादित्यादिश्रुतिभ्योऽस्यार्थस्य सिद्धिः। तत्र तावदोङ्कारनिर्णयाय

---

मिष्टम्। निर्गुणवस्तुमात्रप्रतिपादकत्वात्। तद्प्रतिपादनमङ्गमपि स्वकार्यान्तरत्वात्प्रकरणत्वव्याघातस्य, तास सम्पूर्णत्वादित्यर्थः। प्रकरणत्वेऽपि निर्विषयत्वादिप्रयुक्तमव्याख्येयत्वमाशङ्क्याह। अत एवेति। प्रकरणत्वादेव प्रकृतशास्त्रोद्देशेन सम्बन्धादीनामर्थवत्त्वेऽपि प्रकरण-प्रवृत्त्यङ्गतयातानि तस्य वक्तव्यानीत्यभ्युपगमे शास्त्रीयसम्बन्धादीनां तदीये प्रकरणेऽप्यनुप्रवेशात्पृथगभिधाने वक्तव्यत्वमर्थस्य पुनरुक्तिरित्याह। यान्येवेति। श्रोतारो हि शास्त्रीयं प्रकरणं प्रतिपद्यमानाः शास्त्रीया-णि सम्बन्धादीनि अन्यत्र वचनाभावेऽपि बुध्यमानाः प्रवर्त्तिं तस्मिन्

प्रथमं प्रकरणमागमप्रधानमात्मतत्त्वप्रतिपत्त्युपायभूतम् । यस्य द्वैतप्रपञ्चस्योपशमेऽद्वैतप्रतिपत्तिः रज्ज्वामिव सर्पादिविकल्पस्योपशमे रज्जुतत्त्वप्रतिपत्तिः । तस्य द्वैतस्य हेतुतो वैतथ्यप्रतिपादनाय द्वितीयं प्रकरणम् । तथाऽद्वैतस्यापि वैतथ्यप्रसङ्गप्राप्तौ युक्तितस्तथात्वदर्शनाय प्रकरणं तृतीयम् । अद्वैतस्य तथात्वप्रतिपत्तिप्रतिपक्षभूतानि यानि वादान्तराण्यवैदिकानि तेषामन्योन्यविरोधित्वादतथार्थत्वेन तदुपपत्तिभिरेव निराकरणाय चतुर्थं प्रकरणम् । कथं पुनरोङ्कारनिर्णय आत्मतत्त्वप्रतिपत्त्युपायत्वं प्रतिपद्यत इत्युच्यते ॥ ओमित्येतत् । एतदालम्बनम् । एतद्वै सत्यकाम परञ्चापरञ्च ब्रह्म यदोङ्कारः । तस्माद्विद्वानेतेनैवायतनेनैकतरमन्वेति । ओमित्यात्मानं युञ्जीत ओमिति ब्रह्म ओङ्कार एवेदं सर्व्वमित्यादिश्रुतिभ्यः । रज्ज्वादिरिव सर्पादिविकल्पस्यास्पदोऽद्वय आत्मा परमार्थतः सन् प्राणादिविकल्पस्यास्पदो यथा तथा सर्व्वोऽपि वाक्प्रपञ्चः प्राणाद्या

---

प्रकृतमस्तीत्यर्थः । तर्हि प्रकरणकर्तृवदेव तद्भाष्यकृतापि विषयादीनामभावकथनात्तद्भाष्यकृतो विषयाद्युपन्यासो वृथा स्यादित्याशङ्क्याह । यद्यपीति ॥ प्रकरणकर्तुरवक्तव्यान्यपि तद्भाष्यकृता तानि सङ्क्षेपतो वक्तव्यानीति व्याख्यातॄणां सम्मतम् । ताभ्यामनुक्तत्वे तेषामाश्वावगत्यशङ्काभावादित्यर्थः ॥ भाष्यकृता प्रयोजनादीनां वक्तव्यत्वे सिद्धे शास्त्रप्रकरणयोर्मोक्षलक्षणप्रयोजनवत्त्वं प्रतिजानीते । तत्रेति ॥ प्रयोजनवच्छास्त्रमिति सम्बन्धः । शास्त्रपदं प्रकरणोपलक्षणार्थम् । मोक्षलक्षणं फलं ब्रह्मज्ञानस्येष्यते चेत् शास्त्रप्रकरणयोरित्याशङ्क्याह । साधनेति ॥ सत्यं मोक्षस्य साधनं ब्रह्मात्मैकत्वज्ञानम् तस्य जनकं शास्त्रादि तद्भावेन ज्ञानस्य प्राधान्येन मोक्षफलवद्भवति शास्त्रादीत्यर्थः ।

त्मविकल्पविषय , ओङ्कार एव। स चात्मस्वरूपमेव। तदभिधायकत्वात्। ओङ्कारविकारशब्दाभिधानाभिधेयश्च सर्वः प्राणादिरात्मविकल्पोऽभिधानव्यतिरेकेण नास्ति। वाचारम्भणं विकारो नामधेयं तदस्येदं वाचा तन्त्या नामभिर्दामभिः सर्वं सितम्। सर्वं हीदं नामनीत्यादिश्रुतिभ्यः। अत आह ओमित्येतदक्षरमिदं सर्वमिति। यदिदमर्थजातमभिधेयभूतं तस्याभिधानाव्यतिरेकात्। अभिधानस्य , ओङ्काराव्यतिरेकात् ओङ्कार एवेदं सर्वम्। परञ्च ब्रह्माभिधानाभिधेयोपायपूर्वकमेव गम्यत इत्योङ्कार एव। तस्यैतस्य परापरब्रह्मरूपस्याक्षरस्योमित्येतस्योपव्याख्यानम्। ब्रह्मप्रतिपत्त्युपायत्वाद्ब्रह्मसमीपतया विस्पष्टं प्रकथनमुपव्याख्यानं प्रस्तुतं वेदितव्यमिति वाक्यशेषः। भूतं भवद्भविष्यदिति कालत्रयपरिच्छेद्यं यत्तदप्योङ्कार एवोक्तन्यायतः। यच्चान्यत्त्रिकालातीतं कार्य्याधिगम्यं कालापरिच्छेद्यमव्याकृतादि, तद

---

यद्यपि ब्रह्मणा विषयेण सम्बन्धो वेदान्तानामिष्यते तथाप्युक्तमभिधेयत्वसम्बन्धं शास्त्रादीनामत्र ब्रह्मविचारमन्तरेण तज्ज्ञानजनकत्वायोगात्तज्ज्ञानजननद्वारा विषयसम्बन्धसिद्धिरित्याह। अभिधेयेति। उक्तं ज्ञानं व्यवहितप्रयोजनादिशास्त्रादेरुपसंहरति। पारम्पर्येणेति। तत्र सम्बन्धो ब्रह्मज्ञानं शास्त्रादिना जन्यमित्येवंयोग्यत्वलक्षणोऽदृष्टः। शास्त्रादिनैव जन्यनियमयोगव्यवच्छेदादिविषयोऽपि दर्शितः यदुक्तं प्रयोजनवत्त्वं तदाक्षिपति। किं पुनरिति। साध्यत्वे स्वर्गवद् अनित्यत्वं नित्यत्वे साधनानधीनत्वात् तादर्थ्येन शास्त्रादि प्रयोजनमित्यर्थः। मोक्षस्याकृतत्वरूपत्वान्नानित्यत्वं नापि साधनानर्थक्यम्॥

यच्चान्यत्त्रिकालातीतं तदप्योङ्कार एव ॥१॥

---

प्योङ्कार एव । अभिधानाभिधेययोरेकत्वेऽप्यभिधानप्राधान्येन निर्देशः कृतः ॥१॥

---

स्वरूपभूतमोक्षप्रतिबन्धनिवृत्तिफलत्वेनानर्थकत्वादित्युत्तरमाह । उच्यत इति । यथा देवदत्तस्य ज्वरादिना रोगेणाभिभूतस्य स्वस्थता स्वरूपादप्रच्युतिरूपा स्वरूपभूतैव प्रागपि सती रोगप्रतिबद्धाऽसतीव स्थिता चिकित्साशास्त्रीयोपायप्रयोगवशात् प्रतिबन्धभूतरोगापगमे पुनरभिव्यज्यते । न हि तत्रोपायवैयर्थ्यं प्रतिबन्धप्रध्वंसार्थत्वात् । तथा नित्यत्वं स्वस्थतायाः गदरत । तस्मादसाध्यत्वादित्युक्तेऽर्थे दृष्टान्तमाह । रोगार्तस्येवेति । यथोदितदृष्टान्तानुरोधादात्मनः स्वतः प्रभुत्वात-निखिलदुःखस्य निरतिशयानन्दैकतानस्यापि स्वाविद्याप्रसूताहङ्कारादिद्वैतप्रपञ्चसम्बन्धादात्मनि दुःखमारोप्याहं दुःखी सुखं मया प्राप्तव्यमिति प्रतिपद्यमानस्य परमकारुणिकाचार्योपदिष्टवाक्योत्थाद्वैतविद्यातो द्वैतनिवृत्तौ प्रतिबन्धप्रध्वंसे स्वभावभूता परमानन्दता निरस्तसमस्तानर्थता च स्वारस्येनाभिव्यक्ता भवति । सा च स्वस्थता परिपूर्णा वस्तुस्वभावावाप्तिरिष्यते । तदिदं शास्त्रीयं प्रयोजनं तस्य च स्वरूपत्वेनासाध्यत्वादनित्यत्वं शङ्कितव्यम् । न च साधनवैयर्थ्यं प्रदर्शितप्रतिबन्धनिवृत्तिफलत्वादिति दार्ष्टान्तिकमाह । तथेति ॥ ननु द्वैतस्याहङ्कारादेरात्मनो वस्तुत्वाद्वस्तुनश्च विद्यानपोह्यत्वान्नित्यनैमित्तिककर्मायत्तत्वान्निवृत्तेरलं विद्यार्थेन प्रकरणारम्भेणेति तत्राह । द्वैतेति । मायाऽविद्याकल्पितस्य द्वैतस्यात्मविद्यया कारणनिवृत्त्यानिवर्त्यत्वादात्मविद्याभिव्यक्तये शास्त्रारम्भो युज्यते । न च द्वैतस्याविद्याकृतस्य विद्यमानत्वे प्रमाणमस्तीत्याशङ्क्यान्वयव्यतिरेकानुविधायिनीं श्रुतिमुदाहरति । यत्र हीति ॥ इवशब्दाभ्यामविद्यायत्तत्वं प्रतिभाति-

सर्वं ह्येतद्ब्रह्मायमात्मा ब्रह्म सोऽयमात्मा चतुष्पात्॥२॥

---

ओमित्येतदक्षरमिदं सर्वमित्याद्यभिधानप्राधान्येन निर्दिष्टस्य पुनरभिधेयप्राधान्येन निर्देशोऽभिधानाभिधेययोरेकत्वप्रतिपत्त्यर्थः। इतरथा ह्यभिधानाधीनाभिधेयप्रतिपत्तिरित्यभिधेयस्याभिधानत्वं गौणमित्याशङ्का स्यात्। एकत्वप्रतिपत्तेश्च प्रयोजनमभिधानाभिधेययोरेकेनैव प्रय-

---

द्वैतस्य तत्प्रतिभानस्य चाभावत्वेन विद्यामयत्वमुच्यते। आत्मैवा नुतमि। विदुषो विद्यावस्थायां कर्तृकरणादिसर्वं मात्रमात्मनातिरिक्तमस्तीत्युक्त्वा विद्याद्वारा सर्वस्य द्वैतस्याभावत्ववचनादविद्यानिमित्तकार्यकारणात्मकद्वैतनिवृत्तिद्वारा तैवेत्यभिधत्ते। तथा च विद्यातो द्वैतनिवृत्तिनिर्देशात्तस्याविद्यात्मकत्वमुच्यते। आदिशब्दादेव नानेव धिष्ठाननिष्ठात्यन्ताभावप्रतियोगित्वं द्वैतस्याभिदधत् वाक्यं वाचारम्भणाद्यपि गृहीतम्। अस्यार्थस्येति द्वैतगताविद्याकृतत्वस्येत्यर्थः। विवक्षायोग्यानाद्यनुमन्त्रोपन्यासहेतुत्वेन ग्रन्थारम्भे स्थिते सति आदौ प्रकरणचतुष्टयस्य प्रत्यक्षप्रवृत्तिं प्रमेयप्रतिपत्तिसौकर्यार्थं सूचयितव्यमित्याह। तत्र तावदिति। ओंकारप्रकरणस्यासङ्कीर्णं प्रमेयं सङ्क्षिपति। ओंकारेति। तन्निर्णयार्थं प्रकरणमारब्धमित्युक्तम्। तन्निर्णये प्रमाणाभावात्तस्य चानुपयोगित्वात्। आत्मप्रतिपत्तिर्हि पुरुषार्थोपयोगिनीत्याशङ्क्यागमेत्यादिविशेषणद्वयम्। तदुपदेशप्रधानं माण्डूक्योपनिषद्ग्रन्थात्मकपदम्। तेन तत्र प्रामाण्यादुक्तो निर्णयः सेत्स्यति न त्विदं युक्तिप्रधानं युक्तिरेतस्य सतोऽपि गुणत्वादप्रधानत्वात्। न चायमोंकारनिर्णयो नोपयुज्यते। यदात्मतत्त्वमनारोपितरूपं तत्प्रतिपत्त्युपायत्वात्। तत्प्रतिपत्तेश्च मुक्तिफलत्वात्। अतश्चास्य प्रकरणमोंकारनिर्णयायात्मतत्त्वप्रतिपत्तिद्वारेण सम्प्रदाने परमफले पर्यव-

शेषं युगपत्प्रविलापयन् तद्विलक्षणं ब्रह्म प्रतिपद्येतेति। तथा च वक्ष्यति। पादा मात्रा मात्राश्च पादा इति। तदाह। सर्वं ह्येतद्ब्रह्मेति। सर्वं यदुक्तमोङ्कारमात्रमिति तदेतद्ब्रह्म तच्च ब्रह्म परोक्षाभिहितं प्रत्यक्षतो

---

ऽनुतोऽनुपदेशवशादधिगन्तव्यमित्यर्थः। वैतथ्यप्रकरणस्यावान्तरविषयविशेषं दर्शयति। यस्येति। आरोपितनिषेधे सत्यनारोपितप्रतिपत्तिः स्वाभाविकीत्यत्र दृष्टान्तमाह। रज्ज्वामिवेति। हेतुतो दृश्यत्वाद्यन्त्यवत्त्वादियुक्ति प्रयोगादित्यर्थः। अद्वैतप्रकरणस्यार्थविशेषमुपन्यस्यति। तथाद्वैतस्यापीति। तस्याभिहितवैतथ्यस्यानुपपत्त्या मिथ्यात्वप्रसङ्गप्राप्ते। तस्यां सत्याभीष्टाधिकभेदाद्यवस्थायाः सत्त्वादव्यभिचारादियुक्तिवशादद्वैतस्य परमार्थत्वं प्रतिपादयितुं तृतीयं प्रकरणमित्यर्थः। अलातशान्तिप्रकरणस्यार्थविशेषं कथयति। अद्वैतस्येति। तस्य यथात्वमबाधितत्वेन वस्तुत्वं तत्प्रतिपक्षत्वं पक्षान्तराणामित्यत्र हेतुमाह। अवैदिकानीति। तेषां निराकार्यत्वे हेतुमाह। अतथार्थत्वेनेति। मिथ्याद्वैतनिष्ठत्वेनेत्यर्थः। तदुपपत्तिभिरेव निराकरणे हेतुमाह। अन्योन्येति। पक्षान्तरप्रतिषेधमुखेनाद्वैतमेव दृढयितुमन्त्यप्रकरणमित्यर्थः। ओङ्कारनिर्णयद्वारेणात्मप्रतिपत्त्युपायभूतमाद्यं प्रकरणमित्ययुक्तम्। तन्निर्णयस्य तद्धेतुत्वायोगात्। न ह्यर्थान्तरज्ञानमर्थान्तरज्ञाने व्याप्तिमन्तरेणोपयुज्यते। न चात्र धूमाग्न्योरिव व्याप्तिरुपलभ्यते। न चात्मकार्यत्वमोङ्कारस्य युक्तम्। आकाशादेरविशेषात्। तस्य च सर्वात्मत्वेनात्मवत्तत्कार्यत्वस्याधारादिति मन्वानः सन् प्रथमप्रकरणार्थं [illegible]माक्षिपति। कथमिति। न वयमनुमानायत्तमाद्योङ्कारनिर्णयमात्मप्रतिपत्त्युपायमभ्युपगच्छामो येन व्याप्त्यभावो दोषमावहेत्। किन्तु श्रुतिप्रामाण्यात्तन्निर्णयस्तद्धेतुरिति परिहरति। उच्यत इति। तत्र मृत्युना नचिकेतसं प्रति ओमित्येतदित्यनेन वाक्येन प्रत्यक्षत्वेनोमित्येतदुपदिष्टम्। समाहितेनोङ्कारोच्चारणे यच्चैतन्यं स्फुरति [illegible] शब्द[illegible]ऽऽत्मनि [illegible] लभ्यते। तेन

विशेषेण निर्देक्ष्यति । अयमात्मा ब्रह्मेति । अयमिति चतुष्पात्त्वेन प्रविभज्यमानं प्रत्यगात्मतयाऽभिनयेन निर्दि-

---

अथ यदोङ्कारनिर्णयो ब्रह्मधीहेतुरिति विवक्षित्वा श्रुतिमुदाहरति । ओमित्येतदिति । प्रतिमायां विष्णुरिवदोङ्कारो ब्रह्मबुद्ध्योपास्यमानो ब्रह्मप्रतिपत्त्युपायो भवतीत्यभिप्रेत्य वाक्यान्तरं पठति । एतदालम्बनमिति । किञ्चायमोङ्कारो यदा परापरब्रह्मदृष्ट्या उपास्यते तदा तत्प्राप्त्युपायतामुपारोहतीति मत्वा पुनः श्रुतिं दर्शयति । एतद्धीति । किञ्च । समाधिनिष्ठो यदोमित्युच्चार्यात्मानमनुसन्धत्ते तदा स्थूलमकारमुकारे सूक्ष्मं तच्च कारणे मकारे तमपि कार्यकारणातीते प्रत्यगात्मन्युपसंहृत्य तन्निष्ठो भवतीत्यनेन प्रकारेणोङ्कारस्य तत्प्रतिपत्त्युपायतेति विधान्तरेणाह । ओमित्यात्मानमिति । किञ्च योऽयं स्थाणुः स पुमानिति वद्द्वैतदोमित्युच्यते तद्ब्रह्मेति बाधायां समानाधिकरण्येन समाहितो ब्रह्म बोध्यते । तथा च युक्तमोङ्कारस्य ब्रह्मध्याने हेतुत्वमित्याह । ओमिति ब्रह्मेति । किञ्च । सर्वास्पदत्वादोङ्कारस्य ब्रह्मणश्च तथात्वादेकत्वज्ञत्वादन्यत्वाभिद्धेदोङ्कारप्रतिपत्तिर्ब्रह्मप्रतिपत्तिरेवेत्याह । ओङ्कार एवेति । ओमितीदं सर्वमित्यादिवाक्यान्तरमन्यत्राधर्मादित्यादि श्रुतिभ्योब्रह्मप्रतिपत्त्युपायत्वमोङ्कारस्य प्रतिपादितमिति ध्येयः । ननु स्वानुभवप्रतिभासे सत्यात्मे चिदात्मनि मायादिविकल्पस्य कल्पितत्वादात्मनः सर्वास्पदत्वं न पुनरोङ्कारस्य तदस्ति वाच्यत्वादिति तत्राह । रज्ज्वादिरिवेति । यथा रज्जौ शुक्तिरित्यादिरभिधानविशेषः सर्पो रजतमित्यादिविकल्पस्यास्पदोऽभ्युपगतस्तथाकाशवत्स्वमिथ्यात्वे हेत्वभावात्परमार्थसत्स्वभावे मध्यमात्मन्यस्य मायादिविकल्पस्यास्पदोऽभ्युपगम्यते । यथैव चिदात्मन्येव मायादिरात्मविकल्पो वस्तुविषयः सर्वो वाक्प्रपञ्चो यथोक्तोङ्कारमात्रात्मकत्वादास्पदो गम्यते । न च जगत्योङ्कारस्यानुगम । ओङ्कारेण सर्वा वाक् सन्तृणोतीति श्रुतेः । अतो युक्तमोङ्कारस्य सर्वास्पदत्वमित्यर्थः । तत्र वैज्ञात्यास्यात्मास्पदत्वादोङ्कारास्पदत्वाच्च वाक्प्रपञ्च

श्रुति। अयमात्मेति। सोऽयमात्मा ओङ्काराभिधेयः परापरत्वेन व्यवस्थितश्चतुष्पात्कार्षापणवन्न गौरिवेति

---

प्राणादेरसद्द्वयमिति नेत्याह। स चेति। आत्मवाचकत्वेऽपि नास्योङ्कारस्यात्ममात्रत्वं तद्वाचकस्य तन्मात्रत्वमिति व्याप्त्यभावात्। प्राणादेरात्मविकल्पस्याभिधानव्यतिरेकदर्शनादित्याशङ्क्याह। ओंकारेति। तस्य विकारः सर्वो वाग्विशेषः। अकारो वै सर्वा वागिति श्रुतेः। ओङ्कारस्य च तत्प्रधानत्वात्तेन प्राणादिशब्देन वाच्यः प्राणादिरात्मविकल्पः सर्वः स्वाभिधानव्यतिरेकेण नास्ति। तदभिधानं प्राणादिशब्दविशेषात्मकमोङ्कारविकारभूतमोङ्कारातिरेकेण न सम्भवतीत्योङ्कारमात्रं सर्वमिति निर्णीयते। आत्मनोऽपि तद्वाच्यस्य तन्मात्रत्वाभिधानादित्यर्थः। शब्दातिरिक्तार्थाभावे शब्दस्यार्थवाचकत्वानुपपत्तेः। एकत्वे विषयविषयित्वायोगान्निर्विकल्पं सन्मात्रं वस्तु वाच्यवाचकविभागशून्यं पर्यवस्यतीत्यभिप्रेत्य कार्यस्य वस्तुतोऽसत्त्वे प्रमाणमाह। वाचारम्भणमिति। कार्यस्य सर्वस्यैव मिथ्यात्वेऽपि कथमोङ्कारनिर्णयस्य ब्रह्मप्रतिपत्त्युपायत्वसिद्धिरित्याशङ्क्याह। तदस्येति। तदिदं विकारजातमस्य ब्रह्मणः सम्बन्धि वाचा सामान्यरूपया तन्त्या प्रथादितरज्ज्वा तन्त्वा सितं बद्धं व्याप्तमिति सम्बन्धः। शब्दसामान्ये नार्थसामान्यस्य व्याप्तावपि कथमर्थविशेषस्य शब्दविशेषव्याप्तिरित्याशङ्क्याह। नामभिरिति। शब्दविशेषैर्दामभिर्दामस्थानीयैर्विशेषरूपमपीदमर्थजातं व्याप्तं वक्तव्यं न्यायस्य तुल्यत्वादित्यर्थः। उक्तमर्थं समर्थयते। सर्वं हीति। इदं हि सर्वं सामान्यविशेषात्मकमर्थजातं सामान्यविशेषरूपेण नाम्ना नीयते व्यवहारपथं प्राप्यते तेन नामतो बुध्यते। तदेवं वागनुरक्तबुद्धिबोध्यत्वाद्वाङ्मात्रं सर्वम्। वाग्जातञ्च सर्वमोङ्कारानुविद्धत्वादोङ्कारमात्रम्। स चोङ्कार उपासनेनात्मधीहेतुरित्याद्यप्रकरणारम्भः सम्भवतीत्यर्थः। तद्यथा शङ्कुनेति श्रुतिसंपदार्थमादिपद प्रतिज्ञातप्रथमप्रकरणार्थसिद्धिरिति शेषः। अर्थमुपपादितं तस्मिन्नर्थे श्रुतिसंवादयति। अत आहेति। श्रुतिं व्याचष्टे। यदिद

## जागरितस्थानो बहिःप्रज्ञः सप्ताङ्ग एकोन-

कथं चतुष्पात्त्वमित्याह । जागरितं स्थानमस्येति जागरितस्थानः । बहिःप्रज्ञः स्वात्मव्यतिरिक्ते विषये प्रज्ञा यस्य स बहिःप्रज्ञो बहिर्विषयेव प्रज्ञाऽविद्याकृताऽवभासत इत्यर्थः । तथा सप्ताङ्गान्यस्य तस्य च वैतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा सन्देहो बहुलो बस्तिरेव रयिः पृथिव्येव पादावग्निहोत्रकल्पनाशेषत्वेनाग्निमुखत्वेनाहवनीय उक्त इत्येवं सप्ताङ्गानि यस्य स सप्ताङ्गः । तथैकोनविंशति मुखान्यस्य बुद्धीन्द्रियाणि कर्मेन्द्रियाणि च दश वायवश्च प्राणादयः पञ्च मनो बुद्धिरहङ्कारश्चित्तमिति मुखानीव मुखानि तान्युपलब्धि-

---

पादचतुष्टयन्तु दुर्बोधमावेदितमिति शङ्कते । कथमिति । परमार्थतश्चतुष्पात्त्वाभावेऽपि कादाचित्कमुपायोपेयभूतं पादचतुष्टयमस्ति वस्त्वित्यभिप्रेत्याद्यं पादं व्युत्पादयति । जागरितेत्यादिना । स्थानस्य स्वेनाभिमानस्य विषयीभूतमित्यर्थः । प्रज्ञायास्त्वाकाशवदान्तरत्वाद्बहिर्भूतमिदं विशेषणमित्याशङ्क्य व्याचष्टे । बहिरिति । चैतन्यरूपा प्रज्ञा स्वरूपभूता न बाह्ये विषये प्रतिभासते तस्या विषयानपेक्षत्वात् । बाह्यस्य च विषयस्य वस्तुतोऽभावादित्याशङ्क्याह । बहिर्विषये चेति । न स्वरूपभूता प्रज्ञा वस्तुतो बाह्यविषयेष्यते बुद्धिरभिरूपा त्वनाद्यविद्याकल्पिता तद्विषया भवति । न च साऽपि वस्तुतस्तद्विषयतामनुभवति । वस्तुतः स्वयमभावाद्बाह्यस्य विषयस्य कादाचित्कत्वात्तद्विषयत्वं प्रातिभासिकमित्यर्थः । पूर्वेण विशेषणेन विशेषणान्तरं समुच्चिनोति । तथेति । सप्ताङ्गत्वं श्रुत्यन्तरेण विश्वस्य विशदयति ।

विंशतिमुखः स्थूलभुग्वैश्वानरः प्रथमः पादः ॥३॥

---

द्वाराणीत्यर्थः । स एवंविशिष्टो वैश्वानरो यथोक्तैर्द्वारैः शब्दादीन् स्थूलान् विषयान् भुङ्क्त इति स्थूलभुक् । विश्वेषां नराणामनेकधा नयनाद्विश्वानर । यद्वा विश्वश्चासौ नरश्चेति विश्वानर विश्वानर एव वैश्वानर ।

प्रेत्य सप्ताङ्गत्ववचनम् । मूर्द्धा ते व्यपतिष्यदित्यादिलिङ्गदर्शनाच्च । विराजैकत्वमुपलक्षणार्थं हिरण्यगर्भाव्याकृतात्मनोः । उक्तञ्चैतन्मधुब्राह्मणे । यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्ममित्यादि । सुषु-

---

[1] सिद्धमिति । तथा च । सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि । सम्पश्यन्नात्मयाजी वै स्वाराज्यमधिगच्छतीति स्मृतिरनुगृहीता भवतीत्याह । सर्वभूतस्थेति । न चेदं मानं वचनमात्रमिति शङ्कनीयम् । यद्वै किञ्च मनुरवदत्तद्भेषजमिति श्रुतेरित्यभिप्रेत्य दर्शितस्मृतिमूलभूतां श्रुतिं सूचयति । यस्त्विति । यो हि पादत्रयं प्राक्तनया प्रक्रियया प्रविलाप्य तुरीये नित्ये विज्ञप्तिमात्रे सदानन्दैकताने परिपूर्णे प्रतिष्ठां प्रतिपद्यते स ब्रह्माऽहमस्मीत्यात्मानं जानानः सर्वेषां भूतानामधिष्ठानात्मकमनुपलभमान आत्मन्येव प्रातीतिकानि तानि प्रत्येति । तेषु सर्वेष्वात्मानं पश्यन्न कुतश्चिदपगच्छति । ततश्च न किञ्चिदपि गोपायितुमिच्छतीति स्मृत्यर्थः यथोक्तरीत्या तत्त्वसाक्षात्कारे सङ्गृहीते सति सिद्धम् स्यादित्यर्थः । अध्यात्माधिदैवयोर्भेदाभ्युपगमद्वारेण प्रागुक्तपरिदृष्टा तत्त्वज्ञानानभ्युपगमे दोषमाह । अन्यथेति । चक्षुरादिभेदस्यापि प्रामाणिकत्वात्तस्यैव प्रति देहं परिच्छिन्नस्य प्रत्यगात्मनो दर्शनेन प्रामाणिकोऽयोऽभ्युपगतो भवति । व्यवस्थानुपपत्तेश्च प्रति शरीरमात्मभेदः सिद्ध्यतीत्याशङ्क्याह । तथा चेति । चाक्षुरादीनां द्वैतविषयं दर्शनमिष्टं तेन त्वदीयदर्शनस्याद्वैतविषयस्य विशेषाभावाद्द्वैतं तथ्यमिति प्रतिसिद्धौ विशेषस्तत्पक्षे न विद्यते इति श्रुतिविरोधो भेदवादे प्रसज्येत । व्यवस्था त्वौपाधिकभेदमधिकृत्य सुस्था भविष्यतीत्यर्थः । ननु भेदवादेऽपि नाद्वैतश्रुतिर्विरुध्यते । ध्यानार्थैनेव भवतीति यदद्वैतं तत्त्वमित्युपदेशविशेषैरित्याशङ्क्याह । दर्शिते चेति । उपक्रमोपसंहारैकरूप्यादिना सर्वासामुपनिषदां सर्वेषु देशेष्वात्मैक्यप्रतिपादनपरत्वमिष्टमतो न ध्यानार्थत्वमद्वैतश्रुतेर्न्याय्यम् । वस्तुपरत्वलिङ्गविरोधादित्यर्थः ।

प्राज्ञात्मनोस्त्वेकत्वं सिद्धमेव। निर्विशेषत्वात्। एवञ्च सत्येतत्सिद्धं भविष्यति सर्वद्वैतोपशमे चाद्वैतमिति॥३॥

---

अध्यात्माधिदैवयोरेकत्वमुपेत्याद्वैतपर्यवसाने सिद्धे सत्याध्यात्मिकस्य व्यष्ट्यात्मनो विश्वस्य त्रैलोक्यात्मकेनाधिदैविकेन विराजा अद्वैतत्वं गृहीत्वा यत्तस्य सप्ताङ्गत्वमुक्तं तदविरुद्धमित्युपसंहरति॥ अत इति॥ अध्यात्माधिदैवयोरैक्ये हेत्वन्तरमाह। मूर्द्धैवेति॥ दिवाऽऽदित्यादिकं वैश्वानरावयवं वैश्वानरत्वबुद्ध्या ध्यायतो जिघांसया पुनरवयवत्वमुपगतस्य मूर्द्धा ते व्यपतिष्यद्यन्मां नागमिष्य इत्यन्धोऽभविष्यो यन्मामित्यादिव्यस्तोपासननिन्दा समस्तोपासनविधित्सया दृश्यते। न च द्युलोकादिकं विपरीतबुद्ध्या गृहीतवतः स्वकीयमूर्द्धादिपतनमनुचितम्। यद्यध्यात्माधिदैवयोरेकत्वं न भवेत्तस्मात्तयोरेकत्वमत्र विवक्षितं भवतीत्यर्थः॥ ननु विराजो विश्वेनैकत्वमेव मूलग्रन्थे दृश्यते। तत्कथमविशेषेणाध्यात्माधिदैवयोरेकत्वं विवक्षितादद्वैतपर्यवसानं भाष्यकृतोच्यते तत्राह। विराजेति॥ यन्मुखतो विराजो विश्वेनैकत्वं प्रदर्शितं तत्तु हिरण्यगर्भस्य तैजसेनान्तर्यामिणश्चाव्याकृतोपहितस्य प्राज्ञेन सहैकत्वस्योपलक्षणार्थमतो मूलग्रन्थेऽप्यविशेषेणाध्यात्माधिदैवयोरेकत्वं विवक्षितमित्यद्वैतपर्यवसानसिद्धिरित्यर्थः। अध्यात्माधिदैवयोर्यदेकत्वमिष्टोच्यते तन्मधुब्राह्मणेऽपि दर्शितमित्याह उक्तञ्चेति॥ अधिदैवमध्यात्मञ्चैकरूपं निर्दिश्य तत्र प्रतिपर्यायमयमेव स इत्यभेदवचनादैकात्म्यमत्र विवक्षितमित्यर्थः। ननु विश्वविराजोः स्थूलाभिमानित्वात्तैजसहिरण्यगर्भयोश्च सूक्ष्माभिमानित्वादेकत्वं युक्तम्। प्राज्ञाव्याकृतयोस्तु केन साधर्म्येणैकत्वं तत्राह। सुषुप्तेति॥ प्राज्ञो हि सर्वं विशेषमुपसंहृत्य निर्विशेषः सुषुप्ते वर्त्तते प्रलयदशायामव्याकृतञ्च निःशेषविशेषं स्वात्मन्युपसंहृत्य निर्विशेषरूपं तिष्ठति तेनोक्तं साधर्म्यं पुरोधाय तयोरैक्यमविरुद्धमित्यर्थः। अध्यात्माधिदैवयोरेकत्वे साधुक्तन्यायेन प्रसिद्धे वक्ष्यमाणसंहारप्रक्रियया सिद्धमद्वैतमिति फलितमाह। एवञ्चेति॥ तदद्वैतं प्रतिबन्धकसामान्येन न एतदिति किन्तु वाक्यादेवाचार्योपदिष्टादिति मन्तव्यमन्दः॥३॥

कञ्चन स्वप्नं पश्यति तत्सुषुप्तम्। सुषुप्तस्थान

---

हि सुषुप्ते पूर्व्वयोरिवान्यथा ग्रहणलक्षणं स्वप्नदर्शनं कामो वा कश्चन विद्यते। तदेतत्सुषुप्तं स्थानमस्येति सुषुप्तस्थानः। स्थानद्वयप्रविभक्तं मनःस्पन्दितं द्वैतजातम्। तथारूपापरित्यागेनाविवेकापन्नं नैशतमोग्रस्तमिवाह्नः सप्रपञ्चमेकीभूतमित्युच्यते। अत एव स्वप्नजाग्रन्मनःस्पन्दनानि प्रज्ञानानि घनीभूतानीव सेयमवस्थाऽविवेकरूपत्वात्प्रज्ञानघन उच्यते। यथा रात्रौ नैशेन तमसाऽविभज्यमानं सर्व्वं घनमिव तद्वत्प्रज्ञानघन एव। एवम्-

---

प्रतिबोधः स्वापस्तस्य स्थानत्वेऽपि तुल्यत्वाज्जाग्रत्स्वप्नाभ्यां विभज्य सुषुप्तं दर्शयितुं विशेषणमित्यर्थः॥ एकस्यैव विशेषणस्य व्यवच्छेदकत्वसम्भवादलं विशेषणाभ्यामित्यस्य क. समाधिरित्याशङ्क्य विशेषणयोर्विकल्पेन व्यवच्छेदकत्वात्सामर्थ्यमिति मत्वाह। न हीति॥ पश्चेत्यस्यापेक्षितार्थं कथयति। तदेतदिति॥ अन्यथाग्रहणशून्यत्वं कामसंस्पर्शविरहितत्वञ्च विशेषणाभ्यां विवक्षितम्। कथमस्य द्वितीयस्यैकीभूतत्वविशेषणमित्याशङ्क्याह। स्थानद्वयेति॥ जागरितं स्वप्नश्चेति स्थानद्वयम्। तेन प्रविभक्तं यद्द्वैतं स्थूलं सूक्ष्मञ्च तत्सर्व्वं मनःस्पन्दितमात्रमिति यावत्। तच्च यथा स्वकीयरूपमात्मनो विभक्तं तथैव तस्यात्यागेनाव्याकृताख्यं कारणमापन्नं स्वकीयसर्व्वविशेषसहितं कारणात्मकं भवति। यथाह्नैशेन तमसा ग्रस्तं समस्तं नैव व्यवह्रियते तथेदमपि कार्य्यजातं कारणभावमापन्नं कारणमित्येव व्यवह्रियते। तस्यामवस्थायां तदुपाधिरात्मैकीभूतविशेषणभाग्भवतीत्यर्थः। तथापि कारणोपहितस्य प्रज्ञानघनविशेषणमयुक्तं निरुपाधिकस्यैव तथा विशेषणसम्भवादित्याशङ्क्याह। अत एवेति॥ यस्मात् कार्य्यप्रपञ्चस्य समस्तस्य सुषुप्ते कारणात्मना

अथ गौडपादाचार्यकृततदुपनिषदर्थाविष्करणरूप-
श्लोकावतारणम् ॥

॥ अत्रैते श्लोकाः ॥

**बहिष्प्रज्ञो विभुर्विश्वो ह्यन्तःप्रज्ञस्तु तैजसः ।**
**घनप्रज्ञस्तथा प्राज्ञ एक एव त्रिधा स्मृतः ॥१॥**

अत्रैतस्मिन्यथोक्तेऽर्थे एते श्लोका भवन्ति । बहिःप्रज्ञ इति । पर्यायेण त्रिस्थानत्वात्सोऽहमिति स्मृत्या प्रतिसन्धानाच्च स्थानत्रयव्यतिरिक्तत्वमेकत्वं शुद्धत्वमसङ्गत्वं च सिद्धमित्यभिप्रायः । महामत्स्यादिदृष्टान्तश्रुतेः ॥१॥

---

मयान्तरमित्याह । यत इति । प्रभवत्यस्मादिति प्रभवः । अप्येत्यस्मिन्नित्यप्ययः । न चैतौ भूतानामेकस्योपादानादृते सम्भावितावित्यर्थः ॥६॥

आचार्यैर्माण्डूक्योपनिषदं पठित्वा तद्व्याख्यानश्लोकावतारणमत्रेत्यादिना कृतं तदत्रेत्यनूद्य भाष्यकारो व्याकरोति । एतस्मिन्निति । विश्वस्य विभुत्वं प्रागुक्ताधिदैविकाभेदादवधेयम् । अध्यात्माधिदैवाभेदे मूर्धादाश्रुतां श्रुतिं सूचयितुं हिशब्दः । स्थूलसूक्ष्मकारणोपाधिभेदात्तत्त्वभेदमाशङ्क्य स्वरूपैक्येऽपि त्रयाणामुपाधिभेदमन्तरेण विशेषणानामभेदात्तदाकारभेदोक्तिरित्याह । एक एवेति । पदार्थानामेव पूर्वोक्तमेवोक्तत्वात्तात्पर्यं श्लोकस्य वक्तव्यमवशिष्यते तदाह । पर्यायेणेति । यद्यात्मनश्चैतन्यमिव स्वाभाविकं स्थानत्रयं न तर्हि तद्वदेव तं व्यभिचरितुमर्हति व्यभिचरति चात्मानं स्थानत्रयं क्रमाक्रमाभ्यां तस्य त्रिस्थानत्वादतस्तदतिरिक्तत्वमात्मनः सिद्धम् । यः स्वप्नः सोऽहं जागर्मीत्यनुसन्धानादेकत्वं तस्यावगतम् । एकत्वेन हि स्मृत्या घटादावेकत्वमिष्यते । धर्माधर्मरागद्वेषादिमत्त्वस्यावस्थाधर्मत्वात्तदतिरेकेणैव शुद्धत्वमपि सिध्यति । सङ्गस्यापि भेद्यत्वेनावस्थाधर्म त्वी-

समानां प्रसवबीजात्मकत्वस्य तदध्यक्षश्चैकोऽव्याकृतावस्थः । परिच्छिन्नाभिमानिनामध्यक्षाणाञ्च तेनैकत्वमिति पूर्वोक्तं विशेषणमेकीभूतः प्रज्ञानघन इत्याद्युपपन्नम् । तस्मिन्नेतस्मिन्नुक्तहेतुत्वाच्च कथं प्राणशब्दत्वमव्याकृतस्य । प्राण-

---

स्वप्नजागरितयोर्विलक्षणत्वात्तद्द्रष्टोर्विश्वतैजसयोरपि वैलक्षण्यमुचितमित्याशङ्क्याह । यथेति । जागरिते यथार्थजातं द्रष्टा पश्यति तथैव स्वप्नेऽपि तदुपलम्भात् ततो न तयोर्वैलक्षण्यसिद्धिरित्यर्थः । द्वितीयपादस्य व्याख्यामुपसंहरति । अत इति । स्थानद्वये द्रष्टुर्भेदाशङ्का निरवकाशेति दर्शयितुमेवकारः । तृतीयं पादं व्याकुर्वन् आपन्नेव सुषुप्तिं दर्शयति । आकाशे चेति । यो विश्वतैजसत्वमुपगतः स पुनः स्वारम्भकस्य व्यापारस्य व्याहृतौ हृदयाकाशे स्थितः सन् प्राज्ञो भूत्वा तल्लक्षणलक्षितो भवति । न हि तस्य रूपविषयदर्शनस्मरणे परित्यज्य विशिष्टाकाशनिविष्टस्य प्राज्ञादर्थान्तरत्वम् । अतश्च स एकीभूतो विषयविषय्याकाररहितः । यतो घनप्रज्ञो विशेषविज्ञानविरहो रूपान्तररहितस्तिष्ठतीत्यर्थः । उक्तमर्थं प्रपञ्चयन्मनोव्यापाराभावादिति हेतुमुक्त्वा व्याचष्टे । दर्शनेत्यादिना ॥ अविभक्ताव्याकृतरूपेणेत्यर्थः । अथस्थाने जागरिते सुषुप्तमिति शेषः ॥ यदुक्तमव्याकृतेन प्राणात्मना हृदयेऽवस्थानमिति तत्र प्रमाणमाह । प्राणो ह्येति ॥ यो हि प्राणोऽध्यात्मं प्रसिद्धः स वागादीन् प्राणात्मनि संहृत्य संहरतीति प्राणस्याध्यात्मं वागादिसंहर्तृत्वमुक्तम् । अधिदैवं यो वायुः सूत्रात्मा सोऽग्न्यादीनात्मनि संहरतीत्यग्न्यादिसंहर्तृत्वं वायोरुक्तम् । अध्यात्माधिदैवयोश्चैकत्वात्प्राणस्य वायोश्च वागादिष्वग्न्यादिषु संहर्तृत्वेनाव्याकृतस्य संवर्गविद्यायां सूचितत्वादव्याकृतेन प्राणात्मना सुषुप्ते प्राज्ञस्यावस्थानमिति यत्तमेवोक्तमित्यर्थः । पूर्वमेव विश्वविराजोरैक्यस्थानान्तरञ्च सुषुप्ताव्याकृतयोरेकत्वस्य दर्शितत्वात्तैजसहिरण्यगर्भयोरनुक्तमभेदं चक्रमिदानीमुपन्यस्यति । तैजस इति ॥ तत्र हेतुमाह । मन इत्यादिति ॥ हिरण्यगर्भस्य समष्टिमनो

बीजत्वाभ्युपगमेनैव सतः प्राणत्वव्यपदेशः सर्वश्रुतिषु
कारणत्वव्यपदेशः । अत एवाक्षरात्परतः परः । सबा-
ह्याभ्यन्तरो ह्यजः । यतो वाचो निवर्त्तन्ते । नेति नेती-
त्यादिना बीजवत्त्वापनयनेन व्यपदेशः । तामबीजावस्थां
तस्यैव प्राज्ञशब्दवाच्यस्य तुरीयत्वेन देहादिसम्बन्धरहिता
पारमार्थिकीं पृथग्वक्ष्यति । बीजावस्थापि न किञ्चिद-

---

प्राज्ञयो विशेषणमग्रहणम् । मिथ्याज्ञानतत्संस्काराणामज्ञानशब्दवा-
च्यत्वात्तत्राह । ज्ञानेति ॥ अतोऽहमित्यज्ञानमपरोक्षमग्रहणस्य च
ग्रहणप्रागभावस्य नापरोक्षत्वमिन्द्रियसन्निकर्षाभावादनुपलब्धिगम्य-
त्वाच्च भ्रान्तितत्संस्कारयोश्चाभावेतरकार्यत्वादुपादानतापेक्षणादात्मनश्च
कैवल्यात्तद्धेतुत्वात्तदुपादानत्वेनानाद्यज्ञानसिद्धिः । किञ्च देवदत्तप्रमा
तन्निष्ठप्रमाप्रागभावातिरिक्तानादिप्रध्वंसिनी प्रमात्वाद्यज्ञदत्तप्रमावत् ।
न च तदभावे सम्यग्ज्ञानार्थवत्त्वम् क्षणिकत्वेन भ्रान्तेस्तदनिवर्त्य-
त्वात्संस्कारस्य च सत्यपि सम्यग्ज्ञाने क्वचिदनुवृत्तिदर्शनान्न चाग्र-
हणस्य तन्निवर्त्यत्वम् । ज्ञानस्य तद्विरोधित्वात् । अतो ज्ञानदाह्यं
संसारबीजभूतमनाद्यनिर्वाच्यमज्ञानं ज्ञानस्यार्थवत्त्वायास्थेयम् । अन्यथा
तदानर्थक्यप्रसङ्गादित्यर्थः । एतस्य प्राज्ञयो वाक्यप्रकरणाभ्यां विप-
श्चित्त्वाभावे फलितमाह । तस्मादिति ॥ प्राज्ञस्य शबलस्यैव प्राकर-
णिकत्वाद्वाक्येऽपि तस्मिन् प्राणशब्दाद्युक्त प्राणशब्दस्याव्याकृतविषयत्व-
मिति भावः । यतोऽनाद्यनिर्वाच्याज्ञानशबलस्यैव कारणत्वं प्राज्ञयो
विवक्षितं अत एव कारणत्वनिषेधेन परिशुद्धं ब्रह्म श्रुतिषूपदिश्यते
तदेतदाह । अत एवेति ॥ अक्षरमव्याकृतं तच्च कार्यापेक्षया परम् ।
तस्मात्परतोऽयं परमात्मा । स हि कार्यकारणाभ्यामस्पृष्टो वर्ण्यते ।
बाह्यं कार्यमभ्यन्तरं कारणमिति । ताभ्यां सह तत्कल्पनाधिष्ठान-
त्वेन वर्त्तमानश्चिद्धातुः । तथा च स चिद्धातुर्जन्मादिसमस्तविक्रि-
याशून्यत्वेन कूटस्थः श्रुतिस्मृत्योरुपदिश्यते । यतो प्राज्ञयाः सर्वा-]

विषु धामसु यद्भोज्यं भोक्ता यश्च प्रकीर्त्तितः। वेदैतदुभयं यस्तु स भुञ्जानो न लिप्यते ॥५॥

प्रभवः सर्व्वभावानां सतामिति विनिश्चयः।

---

स भुञ्जानो न लिप्यते। भोज्यस्य सर्व्वस्यैकस्य भोक्तृभोज्यत्वात्। न हि यस्य यो विषयः स तेन हीयते वर्द्धते वा। न ह्यग्निः स्वविषयं दग्ध्वा काष्ठादि तद्वत् ॥५॥

सतां विद्यमानानां स्वेनाविद्याकृतनामरूपमायास्वरूपेण सर्व्वभावानां विश्वतैजसप्राज्ञभेदानां प्रभव उत्पत्तिः। वक्ष्यति च। वन्ध्यापुत्रो न तत्त्वेन मायया वापि

---

भोगप्रयुक्तां व्याप्तिमधुना त्रेधा विभजते। स्थूलमिति। उदाहृतश्लोकयोर्व्याख्यानमेवं दर्शयति। त्रयादाविति ॥४॥

प्रकृतभोक्तृभोग्यपदार्थद्वयपरिज्ञानस्यावान्तरफलमाह। त्रिष्विति। पूर्व्वार्द्धं व्याचष्टे। जाग्रदादिष्विति। भोग्यत्वेनैकत्वेऽपि त्रैविध्यमवान्तरभेदाद्बोध्यम्। भोक्तुरेकत्वे हेतुमाह। सोऽहमिति। योऽहं स्वप्नः सोऽहं सुप्तं प्राप्तः। यश्च स्वप्नमद्राक्षं सोऽहमिदानीं जागर्मीत्येकत्वं प्रतिसन्धीयते। न च तत्र बाधकमस्ति। तदुक्तं भोक्तुरेकत्वमित्यर्थः। किञ्चात्मानं तत्कार्य्यञ्च प्रति साक्षादिषु द्रष्टृत्वस्याविशिष्टत्वात्। द्रष्टृभेदे च प्रमाणाभावादुक्तं तदेकत्वमित्याह। द्रष्टृत्वेति। द्वितीयार्द्धं विभजते। यो वेदेति। कथमेतावता भोगप्रयुक्तदोषराहित्यं तत्राह। भोज्यस्येति। यद्यपि भोक्तुरेकस्यैव सर्व्वं भोज्यमित्यवगतं तथापि कथं सर्व्वं भुञ्जानो भोगप्रयुक्तदोषवान् भवतीत्याशङ्क्याह। न हीति। उक्तमर्थं दृष्टान्तेन स्पष्टयति। न ह्यग्निरिति। स्वविषयान् काष्ठादीन् दग्ध्वा न क्षीयते वर्द्धते वाग्निरिति यावत् ॥५॥

स्वप्नमायासरूपेति सृष्टिरन्यैर्विकल्पिता ॥७॥

इच्छामात्रं प्रभोः सृष्टिरिति सृष्टौ विनिश्चिताः। कालात्प्रसूतिं भूतानां मन्यन्ते कालचिन्तकाः ॥८॥

---

स्वप्नादिविकासस्तदारूढमायाविगमश्च । तत्स्वप्नाद्यतैजसादिः सूत्रतदारूढाभ्यामन्यः परमार्थमायावी। स एव भूमिष्ठो मायाच्छन्नोऽदृश्यमान एव स्थितो यथा तथा तुरीयाख्यं परमार्थतत्त्वम्। अतस्तच्चिन्तायामेवादरो मुमुक्षूणामार्याणां न निष्प्रयोजनायां सृष्टावादर इति। अतः सृष्टिचिन्तकानामेवैते विकल्पा इत्याह स्वप्नमायासरूपेति। स्वप्नसरूपा मायासरूपा चेति ॥७॥

इच्छामात्रं प्रभोः सत्यसङ्कल्पत्वात्सृष्टिर्घटादिः सङ्कल्पनामात्रं न सङ्कल्पनातिरिक्तं कालादेव सृष्टिरिति केचित् ॥८॥

---

यनादरस्तत्त्वनिष्ठानामित्याह। नेति। परमार्थचिन्तकाना सृष्टावनादरादपरमार्थनिष्ठानामेव दृष्टौ विशेषचिन्तेत्युक्तेऽर्थे द्वितीयार्द्धमवतारयति। इत्यत इति। आप्तकृतानामर्थानामेव स्वप्ने प्रथनात्तस्य सत्यत्वं मायायाश्च मायाव्यादिलक्षणायाः सत्यत्वाङ्गीकारादनयोर्विकल्पयोः सिद्धान्ताद्वैषम्यमुन्नेयम् ॥७॥

सृष्टिचिन्तकानामेव सृष्टिविषये विकल्पान्तरमुत्थापयति। इच्छामात्रमिति। ज्योतिर्विदां मतप्रकारमाह। कालादिति। परमेश्वरस्येच्छामात्रं सृष्टिरित्यत्र हेतुमाह। सत्येति। यथा लोके कुलालादेः सङ्कल्पमात्रं घटादिकार्ये सृष्टिरिष्टा नामरूपाभ्याम-

तत्त्वमसीति यत् । यदि हि त्रयस्थात्मविलक्षणं तुरीयमन्यत्तत्प्रतिपत्तिद्वाराभावाच्छास्त्रोपदेशानर्थक्यं शून्यतापत्तिर्वा रज्जुरिव सर्पादिभिर्विकल्प्यमाना स्थानत्रयेऽपि आत्मैक एवान्तःप्रज्ञादित्वेन विकल्प्यते यदा तदान्तःप्रज्ञादित्वप्रतिषेधविज्ञानप्रमाणसमकालमेवात्मन्यनर्थप्रपञ्चनिवृत्तिलक्षणफलं परिसमाप्तमिति तुरीयाधिगमे प्रमाणान्तरं साधनान्तरं वा न मृग्यम् । रज्जुसर्पविवेकसमकाल इव रज्ज्वां सर्पनिवृत्तिफले सति रज्ज्वधिगमस्य येषां पुनस्तमोऽपनयव्यतिरेकेण घटादिगमे प्रमाणं व्याप्रियते तेषां छेद्यावयवसम्बन्धवियोगव्यतिरेकेणान्यतरावयवेऽपि छिदिर्व्याप्रियत इत्युक्तं स्यात् । यदा पुनर्घटतमसोर्विवेककरणे प्रवृत्तं प्रमाणमनुपादित्सिततमसो निवृत्तिफलावसानं छिदिरिव छेद्यावयवसम्बन्धविवेककरणे

कालमेव प्रमातृत्वादिभेदनिवृत्तेः । तथा च वक्ष्यति । ज्ञातेऽद्वैतं न विद्यत इति । ज्ञानस्य द्वैतनिवृत्तिक्षणव्यतिरेकेण क्षणान्तरानवस्थानात् । अवस्थाने चानवस्थाप्रसङ्गाद्द्वैतानिवृत्तिः । तस्मात्प्रतिषेधविज्ञानप्रमाणव्यापारसमकाल एवात्मन्यध्यारोपितानात्मभेदनिवृत्तिरिति सिद्धम् । नान्तःप्रज्ञमिति तैजसप्रतिषेधः । न बहिःप्रज्ञमिति विश्वप्रतिषेधः । नोभयतःप्रज्ञ-

---

अन्यथा रज्ज्वभिधानयोर्मिथःसम्पर्कविरहिणोरुपायोपेयभावायोगात्तुरीयप्रतिपत्तौ विशिष्टस्य द्वारत्वाभावादन्यस्य च तत्प्रतिपत्तिद्वारस्यादर्शनात्तुरीयाप्रतिपत्तिरेव स्यादित्यर्थः ॥ शास्त्रात्तत्प्रतिपत्तिः स्यादिति चेन्नेत्याह । शास्त्रेति । तद्धि विशिष्टरूपमनूद्य विशेषणांशापोहेन तस्य तुरीयत्वमुपादिशति । भेदे चात्यन्तिके तदानर्थक्यान्न शास्त्रात्तत्प्रतिपत्तिरित्यर्थः । सा तर्हि तुरीयप्रतिपत्तिर्भूयादिति चेत्तत्राह । शून्येति । विशिष्टस्यैव प्रतिपत्त्या तुरीयस्याप्रतिपत्तौ प्रतिपन्नस्य विशेषैर्विशिष्टस्य प्रत्यक्षत्वादन्यस्य चाप्रतिपन्नत्वाच्छून्यावसानैव धीरेषा प्रसज्येतेत्यर्थः । भेदपक्षे यथोक्तदोषवशात् अस्तु तर्हि माभूदभेदपक्षोऽपि कथं निर्वहतीति चेत्तत्र किं फलं पर्यनुयुज्यते किं वा प्रमाणान्तरमथ वा साधनान्तरमिति विकल्पाद्यं दूषयति । रज्ज्वादिवेति ॥ यथा रज्ज्वरविच्छिन्नभूता सर्पधारादिभिर्विकल्प्यते तथैव प्रत्यात्मा स्थानत्रयेऽपि यदा न प्रज्ञत्वादिना विकल्प्यमानो बहुधा भासते तदा तदनुवादेनान्तःप्रज्ञत्वादिप्रतिषेधजनितं यत्प्रमाणरूपं विज्ञानं तदुत्पत्तिसमानकालमेवात्मन्यनर्थनिवृत्तिरूपं फलं भवतीति न फलपर्यनुयोगोऽवकाशवानित्यर्थः । शब्दस्य संसृष्टगोचरत्वान्निर्विशेषागोचरत्वायोगात्तुरीयज्ञाने प्रमाणान्तरमेष्टव्यमिति चेत्तत्राह । तुरीयेति । तस्य हि साक्षात्कारे न प्रमाणान्तरमपेक्ष्यम् । शब्दस्य विषयानुसारेण प्रमाणहेतु-

मिति जाग्रत्स्वप्नयोरन्तरालावस्थाप्रतिषेधः । न प्रज्ञानघनमिति सुषुप्तावस्थाप्रतिषेधः । बीजाभावाविवेकरूपत्वात् । न प्रज्ञमिति युगपत्सर्व्वविषयज्ञातृत्वप्रतिषेधः । नाप्रज्ञमित्यचैतन्यप्रतिषेधः । कथं पुनरन्तःप्रज्ञत्वादीनामात्मनि गम्यमानानां रज्ज्वादौ सर्पादिवत्प्रतिषेधादसत्त्वं गम्यत इत्युच्यते । ज्ञस्वरूपाविशेषेऽपीतरेतरव्यभिचारात् रज्ज्वादाविव । रज्ज्वादाविव सर्पधारादिविकल्पितभेदवत्सर्व्वत्राव्यभिचाराज्ज्ञस्वरूपस्य सत्यत्वं सुषुप्ते

---

त्वात् । विषयस्य तुरीयस्यासंस्पृष्टापरोक्षत्वादित्यर्थः । तुरीयगोचराकारे प्रमाज्ञानाख्यं साधनान्तरमेष्टव्यमिति पक्षं प्रतिक्षिपति । साधनान्तरं चेति । प्रमाज्ञानस्याप्रमाणत्वात् प्रमाकृत्यं प्रति हेतुतेति भावः । यथा रज्ज्विदं सर्पोनेति विवेकधीप्रमुदयमात्रात्कार्य्यं यादृशात्तादृशमेव रज्ज्वां सर्पनिवृत्तिफले सिद्धे रज्जुमात्रात्कारस्य फलान्तरं प्रमाणान्तरं साधनान्तरं वा न पश्यते क्रमत्वात् तथेहापीत्याह । रज्ज्विति ॥ विषयगतं प्राकट्यं प्रमाणफलं साध्यस्तन्निवृत्तिरित्याशङ्क्याह । येषामिति ॥ स्वविषयाज्ञानापनयनाय प्रवृत्ता प्रमाणक्रिया स्वविषये भावरूपमतिशयमाधत्ते चेद्गमनार्थक्रियात्वाविशेषाच्छिदिरपि छेद्यसंयोगापनयनातिरिक्तमतिशयमादध्यात् । न च संयोगविनाशातिरिक्ते विभागे सम्प्रतिपत्तिरस्ति । प्राकट्यस्य च प्रकाशत्वे ज्ञानवद्धर्मिनिष्ठत्वप्रकाशत्वे स्यात् । तेनार्थेन विना नार्थोऽस्तीति भावः । अज्ञाननिवर्त्तकमेव प्रमाणमिति पक्षे विषयस्फुरणे कारणाभावाद्विषयसंवेदनं न स्यादित्याशङ्क्याह । यदेति ॥ घटो हि तमसा समावृतो व्यवहारयोग्यस्तिष्ठति तस्य तमसो निष्क्रम्य व्यवहारयोग्यत्वापादने प्रत्यक्षादिप्रमाणं प्रवर्त्तते । तत्रानुपादितृषितस्यानिष्टस्याप्रमेयस्य तमसो निवृत्तिक्षणे यदा प्रत्यवस्यति तदा घटसंवेदनमार्थिकं प्रमाणफलं न भवति । यथा छिदिक्रिया छेद्यस्य तरोरवयव-

व्यभिचरतीति चेन्न। सुषुप्तस्यानुभूयमानत्वात्। न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यत इति च श्रुतेः। अत एवादृष्टम्। यस्माददृष्टं तस्मादव्यवहार्य्यम्। अग्राह्यं कर्मेन्द्रियैरलक्षणमलिङ्गमित्येतदननुमेयमित्यर्थः। अत एवाचिन्त्यम्। अत एवाव्यपदेश्यं शब्दैः। एकात्मप्रत्ययसारं जाग्रदादिस्थानेष्वेकोऽयमात्मेत्यव्यभिचारी यः प्रत्य-

कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ ।
प्राज्ञः कारणबद्धस्तु द्वौ तौ तुर्ये न सिध्यतः ॥११॥

नात्मानं न परांश्चैव न सत्यं नापि चाऽ

---

यस्मादद्वैतः सर्वभावानां रज्जुसर्पवन्मृषात्वात्स एष देवो द्योतनात्तुरीयश्चतुर्थो विभुर्व्यापी स्मृतः ॥१०॥

विश्वादीनां सामान्यविशेषभावो निरूप्यते तुर्ययाथात्म्यावधारणार्थम् । कार्यं क्रियत इति फलभावः । कारणं करोतीति बीजभावः । तत्त्वाग्रहणान्यथाग्रहणाभ्यां बीजफलभावाभ्यां तौ यथोक्तौ विश्वतैजसौ बद्धौ संगृहीताविष्येते प्राज्ञस्तु बीजभावेनैव बद्धः । तत्त्वाप्रतिबोधमात्रमेव हि बीजं प्राज्ञत्वे निमित्तम् । ततो द्वौ तौ बीजफलभावौ तत्त्वाग्रहणान्यथाग्रहणे तुर्ये न सिध्यतो न विद्येते न सम्भवत इत्यर्थः ॥११॥

---

मत्वाह सर्वभावानामिति ॥ अवस्थात्रयातीतस्य तुरीयस्योक्तमद्वयत्वं विद्वदनुभवसिद्धमिति सूचयति । स्मृत इति ॥१०॥

विश्वादिष्ववान्तरविशेषनिरूपणद्वारेण तुरीयमेव निर्धारयति कार्येति ॥ श्लोकस्य तात्पर्यमाह । विश्वादीनामिति ॥ विश्वतैजसयोरुभयबद्धत्वं सामान्यं प्राज्ञस्य कारणमात्रबद्धत्वं विशेषः ॥ यथेदं निरूपणं कुत्रोपयुज्यते तत्राह । तुर्येति ॥ प्राज्ञस्य कारणमात्रबद्धत्वं साधयति । तत्त्वाप्रतिबोधेति ॥ यथोक्तावान्तरविशेषे स्थिते फलितं तुरीये किमायातमित्याशङ्क्याह । तत इति ॥ तयोरस्मिन्नविद्यामात्रत्व विवेकज्ञाने तयोर्निरूपयितुमशक्यत्वादित्याह । सम्भवत इति ॥

नृतम्। प्राज्ञः किञ्चन संवेत्ति तुर्यं तत्सर्वदृक् सदा॥१२॥

कथं पुनः कारणबद्धत्वं प्राज्ञस्य तुरीये वा तत्त्वाग्रहणान्यथाग्रहणलक्षणौ बन्धौ न सिध्यत इति। यस्मादात्मविलक्षणमविद्याबीजप्रसूतं बाह्यं द्वैतं प्राज्ञो न किञ्चन संवेत्ति यथा विश्वतैजसौ ततश्चासौ तत्त्वाग्रहणेन तमसान्यथाग्रहणबीजभूतेन बद्धो भाति। यस्मात्तुरीयं तत्सर्वदृक् सदा तुरीयादन्यस्याभावात्सर्वदा सर्वेति। सर्वञ्च तद्दृक्चेति सर्वदृक् तस्मान्न तत्त्वाग्रहणलक्षणं बीजम्। तत्र तत्प्रसूतस्यान्यथाग्रहणस्याप्यत एवाभावो न हि सवितरि सदा प्रकाशात्मके तद्विरुद्धमप्रकाशनं अन्यथा प्रकाशनं वा सम्भवति। नहि द्रष्टुर्दृष्टेर्विपरिलोपो

प्राज्ञस्य कारणबद्धत्वं साधयति। नात्मानमिति॥ तुरीयस्य कार्यकारणाभ्यामबद्धत्वं स्फुटयति तुर्यमिति॥ श्लोकव्याचिख्यासया प्रश्नमाह। कथमिति॥ चशब्दात्कथमित्यस्यानुवृत्तिः सूच्यते। प्रथमवाक्यान्तरत्वेन पादत्रयं व्याचष्टे। यस्मादिति॥ विलक्षणमनात्मानमिति यावत्। प्रसूतमित्यस्य व्याख्यानमविद्याबीजप्रसूतमिति द्वैतं द्वितीयमसत्यमित्यर्थः। वैधर्म्योदाहरणम्। यथेति॥ प्राज्ञस्य विभागविज्ञानाभावे फलमाह। ततश्चेति॥ यथोक्तं तमसि कार्यलिङ्गमनुमानं सूचयति। अन्यथेति॥ द्वितीयं चाद्यं चतुर्थपादव्याख्यानेन प्रत्याख्याति। यस्मादित्यादिना॥ सर्वं च तुरीयादन्यस्याभावात्तुरीयमेव सर्वं तच्च सदा दृक्चेति यस्मात्तस्मादिति योजना। तत्रेति परिपूर्णचिदेकतानं तुरीयं परामृश्यते। अत एवेति कारणा-

अन्यथा गृह्णतः स्वप्नो निद्रातत्त्वमजानतः । विपर्यासे तयोः क्षीणे तुरीयं पदमश्नुते ॥१५॥

---

इत्युक्तम् । नोभयं पश्यन्ति तुरीये निश्चिता ब्रह्मविदो विरुद्धत्वात्सवितरीव तमः । अतो न कार्यकारणबद्ध इत्युक्तस्तुरीयः ॥१४॥

कदा तुरीये निश्चितो भवतीत्युच्यते । स्वप्नजागरितयोरन्यथा रज्ज्वां सर्प इव गृह्णतस्तत्त्वं स्वप्नो भवति । निद्रा तत्त्वमजानतस्तिसृष्ववस्थासु तुल्या । स्वप्ननिद्रयोस्तुल्यत्वाद्विश्वतैजसयोरेकराशित्वम् । अन्यथाग्रहणप्राधान्याच्च गुणभूता निद्रेति तस्मिन् विपर्यासः स्वप्नः । तृतीये तु स्थाने तत्त्वाग्रहणलक्षणा निद्रैव केवला विपर्यासः । अतस्तयोः कार्यकारणस्थानयोरन्यथाग्रहणाग्रहणलक्षणविपर्यासे कार्यकारणबन्धरूपे परमार्थतत्त्वप्रतिबोधतः क्षीणे तुरीयं पदमश्नुते तदोभयलक्षणं बन्धरूपं तत्रापश्यन् तुरीये निश्चितो भवतीत्यर्थः ॥१५॥

---

स्थितिः ॥ द्वितीयार्धं व्याचष्टे । नोभयमिति । तुरीये निद्रास्वप्नयोर्दर्शने हेतुमाह । विरुद्धत्वादिति । यथा [illegible] तुरीये विरुद्धत्वादनुपपत्तिरित्यर्थः दृष्टान्तमाह । सवितरीवेति । तुरीये वस्तुतो नाविद्यातत्कार्ययोः [illegible] मागपि सूचितमित्याह । अतो नेति ॥१४॥

कदा तर्हि तुरीये निश्चितो भवतीत्याकाङ्क्षायामाह । अन्यथेति । निद्रा तर्हि कथमिति [illegible] माह । निद्रेति । तुरीयप्राप्तिप्रतिबन्धकं [illegible]

अनादिमायया सुप्तो यदा जीवः प्रबु

योऽयं संसारी जीवः स उभयलक्षणेन तत्त्वाप्रतिबोधरूपेण बीजात्मना अन्यथाग्रहणलक्षणेन चानादिकालप्रवृत्तेन मायालक्षणेन स्वप्नेन ममायं पिता पुत्रोऽयं नप्ता क्षेत्रं पशवोऽहमेषां स्वामी सुखी दुःखी क्षयितोऽहमनेन वर्द्धितश्चानेनेत्येवंप्रकारान् स्वप्नान् स्थानद्वयेऽपि पश्यन् सुप्तो यदा वेदान्तार्थतत्त्वाभिज्ञेन परमकारुणिकेन गुरुणा नास्येवं त्वं हेतुफलात्मकः किन्तु तत्त्वमसीति प्रतिबोध्यमानो यदा तदैवं प्रतिबुध्यते। कथं नास्मिन् बाह्यमाभ्यन्तरं वा जन्मादिभावविकारोऽस्त्यतोऽजं सबाह्याभ्यन्तरसर्व्वभावविकारवर्जितमित्यर्थः। यस्माज्जन्मादिकारणभूतं नास्मिन्नविद्यातमोबीजं निद्रा विद्यत इत्य-

र्ते। विपर्यास इति॥ श्लोकव्याख्यानार्थमाकाङ्क्षां दर्शयति। कदेति॥ कदा स्वप्ननिष्ठो भवति कदा निद्रानिष्ठः स्यादित्यपि द्रष्टव्यम्॥ प्रश्नत्रयस्योत्तरं श्लोकेन दर्शयति। अन्यथेति॥ तत्र कदा स्वप्नो भवतीति प्रश्नं परिहरति। स्वप्न इति॥ अवस्थाद्वये स्वप्नद्रष्टुरित्यर्थः। द्वितीयं प्रश्नं समाधत्ते। निद्रेति॥ विश्वादिषु त्रिषु तयोरिति द्विवचनं कथमित्याशङ्क्याह। स्वप्ननिद्रयोरिति॥ विश्वतैजसावेको राशिः। प्राज्ञो द्वितीयः ततः श्लोके द्विवचनमविरुद्धमित्यर्थः। प्रथमे राशौ विपर्यासस्वरूपं कथयति। अन्यथेति॥ द्वितीये राशौ विपर्यासविशेषं दर्शयति। तृतीये त्विति॥ द्वितीयार्द्धगतान्यक्षराणि व्याकरोति। अत इति॥ द्विवचनस्योपपन्नत्वाद्विपर्यासस्य च विभागेन निद्रादिरितत्वादित्यर्थः। तृतीयं प्रश्नं प्रतिविधत्ते। यदेति॥ तत्त्वप्रबोधाद्विपर्यासद्वयावस्थायामित्यर्थः॥१५॥

ध्यते । अजमनिद्रमस्वप्नमद्वैतं बुध्यते तदा ॥१६॥

प्रपञ्चो यदि विद्येत निवर्तेत न संशयः ॥

---

निद्रम् । अनिद्रं हि तत्तुरीयमत एवास्वप्नम् । तन्निमित्तत्वादन्यथा ग्रहणस्य । यस्मादनिद्रमस्वप्नं तस्मादजमद्वैतं तुरीयमात्मानं बुध्यते तदा ॥ १६ ॥

प्रपञ्चनिवृत्त्या चेत्प्रतिबुध्यतेऽनिवृत्ते प्रपञ्चे कथमद्वैतमिति । उच्यते । सत्यमेव स्यात्प्रपञ्चो यदि विद्येत रज्ज्वां सर्प इव कल्पितत्वात् न तु स विद्यते विद्यमानश्चेन्निवर्तेत न संशयः । न हि रज्ज्वां भ्रान्तिबुद्ध्या कल्पित सर्पो विद्यमान सन् विवेकतो निवृत्तः । नैव माया मायाविना प्रयुक्ता तद्दर्शिना चक्षुर्बन्धापगमे विद्यमाना सती निवृत्ता । तथेदं प्रपञ्चाख्यं मायामात्रं

---

यदा तत्त्वप्रतिबोधो विपर्यासस्य भेदकैवल्येऽस्यैवाभावादाह । अनादीति । प्रतिबुध्यमानं तत्त्वमेव विविनक्ति । अजमिति । जीवपदस्वार्थमर्थं निर्दिशति । योऽयमिति । परमात्मैव जीवभावमापन्नोऽवतिष्ठतेऽर्थः । तस्य च जीवभावापत्तिरविद्याप्रयुक्त कार्यकारणबद्धत्वादित्याह । स इति । परमात्मनोऽभेदलक्षणेन स्वापेन सुप्तेना भवतीत्यर्थः । स्वापस्योभयलक्षणत्वमेव प्रकटयति । तत्त्वेत्यादिना । मायावत्त्वेनेत्युभयत्र सम्बध्यते ।। सुषुप्तमेव व्यनक्ति । अमेत्यादिना । स्वापपरिस्फोटस्येव प्रतिबोधभावकार्यो भवतीत्याह । यदेति । यदा सुप्तस्तदा बुध्यते इति शेषः । प्रतिबोधकं विविनक्ति । वेदान्तार्थेति । अथ प्रतिबोधकं तदाह । नास्तीति

मायामात्रमिदं द्वैतमद्वैतं परमार्थतः॥१७॥

---

द्वैतं रज्जुसर्पवन्मायाविवर्त्ताद्द्वैतं परमार्थतस्तस्मान्न कश्चित्प्रपञ्चः प्रवृत्तो निवृत्तो वास्तीत्यभिप्रायः ॥१७॥

विकल्पो विनिवर्तेत कल्पितो यदि केनचित् । उपदेशादयं वादो ज्ञाते द्वैतं न विद्यते ॥१८॥

---

ननु शास्ता शास्त्रं शिष्य इति विकल्पः कथं निवृत्त इत्युच्यते । विकल्पो विनिवर्तेत यदि केनचित्कल्पितः स्यात् । यथाऽयं प्रपञ्चो मायारज्जुसर्पवत्तथाऽयं शिष्यादिभेदविकल्पोऽपि प्राक् प्रतिबोधादेवोपदेशनिमित्तोऽत उपदेशादयं वादः शिष्यः शास्ता शास्त्रमित्युपदेशकार्ये तु ज्ञाने निर्वृत्ते ज्ञाते परमार्थतत्त्वे द्वैतं न विद्यते ॥ १८ ॥

---

र्त्तिरवश्यम्भाविनी । कार्यस्य च निवृत्तिर्नाम कारणसंसर्गस्तथा सति कारणे प्रपञ्चनिवृत्तेरनात्यन्तिकत्वाद्द्वैतानुपपत्तिरवस्थितेति । न च कारणाधीनः सन् प्रपञ्चोऽस्ति । तस्य कल्पितत्वेनावस्तुत्वादित्यर्थः । प्रपञ्चस्य सर्वदा विद्यमानत्वं तु वस्तुत्वादित्युदाहरणाभ्यामुपपादयति । न हीत्यादिना । सर्पो हि रज्ज्वां भ्रान्त्या कल्पितो नासौ सर्पो रज्ज्वामपि विवेकधिया निवृत्तो नैव वस्तुतो विद्यते । बाधितस्य कालत्रयेऽपि सत्त्वाभावात् । माया चेन्द्रजालशब्दवाच्या मायाविना प्रदर्शिता पश्यतां मायादर्शनवतां चक्षुर्गतस्य यथार्थदर्शनप्रतिबन्धकस्यापगमे सति अनुपलभ्यमानावस्था निवृत्ता सती नैव वस्तुतो विद्यमाना भवितुमुत्सहते । यथोदाहरणद्वयं तथेदं द्वैतं प्रपञ्चाख्यं मायामात्रं न परमार्थतोऽस्तीत्यर्थः । प्रपञ्चस्यावस्तुत्वे शून्यवादः स्यादित्याशङ्क्याह । रज्जुवदिति । प्रपञ्चस्य कालत्रयेऽपि सत्त्वाभावे वास्तवमद्वैतमविरुद्धमित्युपपद्यते । तस्मादिति ॥१७॥

प्रकारान्तरेणाद्वैतानुपपत्तिमाशङ्क्य परिहरति । विकल्प इति । यदि केनचिदत्र ज्ञानेन कार्येण शास्त्रादिविकल्पो केनचित्

## ॥ उपनिषद् ॥

सोऽयमात्माऽध्यक्षरमोङ्कारोऽधिमात्रं पादा-

अभिधेयप्रधान ओङ्कारश्चतुष्पादात्मेति व्याख्यातो यः सोऽयमात्माऽध्यक्षरमक्षरमधिकृत्याभिधानप्राधान्येन वर्ण्यमानोऽध्यक्षरम् । किं पुनस्तदक्षरमित्याह । ओङ्कारः । सोऽयमोङ्कारः पादशः प्रविभज्यमानोऽधिमात्रं मात्रा-

विकल्पस्तत्साध्यश्चो बाधितो निवर्तेत न तु तात्त्विकमद्वैतं निरोद्धुमर्हतीति । तत्त्वज्ञानात्प्रागवस्थायामेव तत्त्वोपदेशं निमित्ती यतः । शास्त्रादिभेदोऽनूद्यते । उपदेशप्रयुक्ते तु ज्ञाने निर्वृत्ते न किञ्चिदपि द्वैतमस्तीत्यद्वैतमविरुद्धमित्यर्थः । गुरुशिष्यावस्थायां प्राग्द्वैतमाह । नन्विति तदनिवृत्तौ नाद्वैतसिद्धिर्न च शास्त्रादिभेदस्य कल्पितत्वादविरोधः । तथा सति धूमाभासवत्तस्य ज्ञानहेतुत्वानुपपत्तिरित्यर्थः । धूमाभासस्याव्याप्तस्याज्ञातत्वेऽपि कल्पितस्य शास्त्रादेस्तु ज्ञानहेतुत्वं प्रतिबिम्बादिवदुपपन्नमित्युत्तरमाह । उच्यत इति । शिष्य शास्ता शास्त्रमित्ययं विकल्पो विभागः सोऽपि निवृत्तिप्रतियोगित्वादप्रमात्वाज्ज्ञानसाध्यत्वादद्वैताविरोधीत्यर्थः । शिष्यादिविभागस्य कल्पितत्वं दृष्टान्तेन स्फुटयति । यथेति मायाविना प्रयुक्ता माया यथा कल्पितेष्यते यथा च सर्पधारादिर्विकल्पितस्तथाऽयं प्रपञ्चः सर्वोऽपि कल्पितो वस्तु न भवतीति प्रपञ्चितं तथैव प्रपञ्चैकदेशः शिष्यादिरपि ज्ञानात्प्राक्कल्पितः स्वज्ञानतस्तु मिथ्येत्यर्थः । किमिति ज्ञानात्पूर्वमसौ कल्प्यते तत्राह । उपदेशेति । उपदेशमुद्दिश्य यथोक्तविभागवचनमित्यन्तमुपसंहरति । अत इति । उपदेशात्प्रागिव तस्मादूर्ध्वमपि भेदोऽनुवर्ततामित्याशङ्क्य निरोधमज्ञानान्नैवमित्याह । उपदेश इति ॥ १८ ॥

तत्त्वज्ञानसमर्थानां मध्यमानामुत्तमानां चाधिकारिणामध्यारोपापवादाभ्यां पारमार्थिकं तत्त्वमुपदिष्टमिदानीं तत्त्वपरिज्ञानासमर्थो-

मात्राप्तेरादिमत्त्वाद्वाप्नोति ह वै सर्वान् कामा नादिश्च भवति य एवं वेद ॥९॥

स्वप्नस्थानस्तैजस उकारो द्वितीया मात्रो- त्कर्षादुभयत्वाद्वोत्कर्षति ह वै ज्ञानसन्ततिं

नरस्याद्यो वा सामान्यादकारत्वं वैश्वानरस्य । तदेकत्वविदः फलमाह । आप्नोति ह वै सर्वान् कामानादिः प्रथमश्च भवति महतां य एवं वेद यथोक्तमेकत्वं वेदेत्यर्थः ॥९॥

स्वप्नस्थानस्तैजसो यः स ओङ्कारस्योकारो द्वितीया- मात्रा । केन सामान्येनेत्याह । उत्कर्षात् । अकारादुत्

साहश्यमिति पृच्छति । केनेति ॥ सामान्योपन्यासपरां श्रुतिमवतार- यति । आप्तेति ॥ व्याप्तिमेवाकारस्य शुत्युपन्यासेन व्यनक्ति । अका- रेणेति ॥ अध्यात्माधिदैविकयोरेकत्वं पूर्वमुक्तमुपेत्य विश्वस्य वैश्वानरस्य जगद्व्याप्तिं व्यपदेशेन साधयति ।तेनेति ॥ किञ्च सामान्यद्वारा वाच्यवाचकयोरेकत्वमारोप्य न भवति तयोरेकत्वस्य प्रागेवोक्तत्वादि- त्याह । अभिधानेति ॥ सामान्यान्तरमाह । आदिरिति ॥ तदेव स्फुट- यति । यथैवेति ॥ उकारो मकारश्चेत्युभयमपेक्ष्य प्रथमपाठादिमत्व- मकारस्य द्रष्टव्यम् । विश्वस्य पुनरादिमत्त्वम् । तैजसप्राज्ञावपेक्ष्या- द्यस्थाने वर्त्तमानत्वादित्यर्थः ॥ उक्तस्य सामान्यान्तरस्य फलं दर्शयति । तस्मादिति ॥ किमर्थमित्थं सामान्यद्वारा तयोरेकत्वमुच्यते तद्विज्ञानस्य फलवत्त्वादित्याह । तदेकत्वेति ॥९॥

साहश्यविकल्पादेव फलविकल्पः ॥ द्वितीयपादस्य द्वितीयमा- त्रयाथैकत्वं व्यपदिशति । स्वप्नेत्यादिना ॥ यथा प्रथमपादस्य प्रथममात्रयाचैकत्वं सामान्यं पुरस्कृत्योक्तं तथा द्वितीयपादस्य

समानश्च भवति, नास्याब्रह्मवित्कुले भवति य एवं वेद ॥१०॥

---

उत्कृष्ट इव ह्युकारस्तथा तैजसो विश्वादुभयत्वाद्वा अकारमकारयोर्मध्यस्थ उकारस्तथा विश्वप्राज्ञयोर्मध्ये तैजसोऽत उभयभाक्त्वसामान्याद्विद्वत्फलमुच्यते । उत्कर्षति ह वै ज्ञानसन्ततिम् । विज्ञानसन्ततिं वर्द्धयतीत्यर्थः । समानस्तुल्यश्च मित्रपक्षस्येव शत्रुपक्षाणामप्यप्रद्वेष्यो भवति । अब्रह्मविदस्य कुले न भवति य एवं वेद ॥१०॥

---

द्वितीयमात्रायास्तैजसस्य चैक्यं सत्येव सामान्ये वक्तव्यं तदभावे तदारोपायोगादिति पृच्छति । केनेति । सामान्योपन्यासपूर्वकमेकत्वारोपं साधयति । आहेति । अकारस्य सर्वशब्दव्यापकत्वेनोत्कृष्टत्वस्य स्पष्टत्वात्कथं तस्मादुकारस्योत्कर्षो वर्ण्यते तत्राह । अकारादिति । अकारस्योत्कर्षो वास्तवोऽपि पाठक्रमादुकारस्योत्कर्षं पश्यामीत्याविष्कर्तुमित्कारादुकारस्योत्कर्षोऽत्र । यथा अकारादुकारोत्कर्षो दर्शितस्तथा विश्वात्तैजसस्योत्कर्षो वक्तव्यः । स्थूलाभिमानिनः सूक्ष्माभिमानिन उत्कर्षस्य युक्तत्वादित्याह । तथेति । उकारतैजसयोर्न प्रत्येकमुभयत्वं एकस्योभयत्वव्याघातादित्याशङ्क्य व्याकरोति । उकार इति । मध्यस्थत्वादुकारतैजसयोरुभयभाक्त्वं सामान्यं तस्मात्तयोरेकत्वं प्रत्यक्षमारोपयितुमित्याह । अत इति । यथोक्तैकत्वविज्ञानफलमपस्यादुपादेयमिति सूचयति । विद्वदिति । ज्ञानसन्ततेरुत्कर्षो नाम पुनर्वित्तस्याभेदावेदनं तस्येष्टत्वाभावे कथं फलत्वमित्याशङ्क्य व्याचष्टे । विज्ञानेति । पक्षद्वयस्याप्यत्र नैव पक्षपातित्वं । अप्रद्वेष्य इति । शाखाभेदेन फलभेदमाविद्य द्विविधशास्त्रप्रवृत्तेः कुलविज्ञानफलमाह । अब्रह्मविदिति ॥१०॥

सुषुप्तस्थानः प्राज्ञो मकारस्तृतीया मात्रा मितेरपीतेर्वा मिनोति ह वा इदं सर्वमपीतिश्च भवति य एवं वेद ॥११॥

सुषुप्तस्थानःप्राज्ञो यः स ओङ्कारस्य मकारस्तृतीया मात्रा। केन सामान्येनेत्याह सामान्यमिदमत्र। मितेर्मितिर्मानं मीयेते इव हि विश्वतैजसौ प्राज्ञेन प्रलयोत्पत्त्योः प्रवेशनिर्गमाभ्याम्। प्रस्थेनेव यवाः। तथा ओङ्कारसमाप्तौ पुनः प्रयोगे च प्रविश्य निर्गच्छत इवाकारोकारौ मकारे। अपीतेर्वाऽपीतिरप्यय एकीभावः। ओङ्कारोच्चारणेऽन्त्येऽक्षरे एकीभूताविवाकारोकारौ। तथा विश्वतैजसौ सुषुप्तकाले प्राज्ञे। अतो वा सामान्यादेकत्वं प्राज्ञमकारयोः। विद्वत्फलमाह। मिनोति ह वेदं सर्वं जगद्याथात्म्यं जानातीत्यर्थः। अपीतिश्च जगत्कारणात्मा भवतीत्यर्थः। अत्रावान्तरफलवचनं प्रधानसाधनस्तुत्यर्थम् ॥११॥

तृतीयपादस्य तृतीयमात्रयैकत्वमुपन्यस्यति। सुषुप्तेति। पूर्ववदेकत्वप्रयोजकमत्रापि सामान्यमुपवर्णयति। केनेत्यादिना। मानमेव विवृणोति। मीयेते इति। ओमित्योङ्कारस्य नैरन्तर्येणोच्चारणे सत्यकारोकारौ प्रथमं मकारे प्रविश्य पुनस्तस्मान्निर्गच्छन्ताविवोपलभ्येते तेन मकारेऽपि मानसामान्यमिति वक्तव्यमित्यर्थः। एकीभावमेव स्फोरयति। ओङ्कारेति। मकारस्य प्रान्तेऽपि तदस्ति सामान्यमित्याह। तथेति। उक्तस्यापि सामान्यस्य फलमाह। अतो वेति। सामान्यद्वयद्वारेण प्राज्ञमकारयोरेकत्वज्ञानं नाविवक्षितं फलवत्त्वादित्याह। विद्वदिति। अविदुषोऽपि जगद्विषयज्ञानमस्ती-

तैजसस्योत्वविज्ञाने उत्कर्षो दृश्यते स्फुटम् ।
मात्रासम्प्रतिपत्तौ स्यादुभयत्वं तथाविधम् ॥२०॥
मकारभावे प्राज्ञस्य मानसामान्यमुत्कटं।
मात्रासम्प्रतिपत्तौ तु लयसामान्य मेव च ॥२१॥
त्रिषु धामसु यत्तुल्यं सामान्यं वेत्ति

---

तैजसस्योत्वविज्ञाने उकारत्वविवक्षायामुत्कर्षो दृश्यते स्फुटं स्पष्ट इत्यर्थः। उभयत्वञ्च स्फुटमेवेति। पूर्ववत् सर्वम् ॥२०॥

मकारत्वे प्राज्ञस्य मितिलयावुत्कृष्टे सामान्य इत्यर्थः ॥२१॥

यथोक्तस्थानत्रये तुल्यमुक्तं सामान्यं वेत्त्येवमेवैतदिति निश्चितो यः सम्पूज्यो वन्द्यश्च ब्रह्मविल्लोके भवति ॥२२॥

यथोक्तैः सामान्यैरात्मपादानां मात्राभिः सहैकत्वं

निश्चितः । सम्पूज्यः सर्वभूतानां वन्द्यश्चैव महामुनिः ॥२२॥

अकारो नयते विश्वमुकारश्चापि तैजसम् । मकारश्च पुनः प्राज्ञं नामात्रे विद्यते गतिः ॥२३॥

---

कृत्वा यथोक्तोङ्कारं प्रतिपद्य यो ध्यायीत तमकारो नयते विश्वं प्रापयति अकारालम्बनोङ्कारं विद्वान् वैश्वानरो भवतीत्यर्थः । तथोकारस्तैजसम् । मकारश्चापि पुनः प्राज्ञमिति चशब्दान्नयत इत्यनुवर्तते । क्षीणे तु मकारे बीजभावक्षयादमात्रे चोङ्कारे गतिर्न विद्यते क्वचिदित्यर्थः ॥२३॥

---

निश्चितेति । यथोक्तस्थानत्रयं जागरितस्वप्नसुषुप्ताख्यमिति । त्रितयं मुख्यं पादानां मात्राणां चेति शेषः । उक्तं सामान्यमाविरुद्धरूपो मितिरित्यादिना ॥ महामुनिरित्यस्यार्थमाह । सर्वविदिति ॥२२॥

पूर्वोक्तसामान्यज्ञानवतो ध्याननिष्ठस्य फलविभागं दर्शयति । अकार इति ॥ यत्र तु पादानां मात्राणां च विभागो नास्ति तस्मिन्नोङ्कारे तुरीयात्मनि व्यवस्थितस्य प्राप्तृप्राप्यप्राप्तिविभागो नास्तीत्याह । नामात्र इति ॥ ओङ्कारध्यायिनमकारो विश्वं प्रापयतीत्युक्तमयुक्तम् । विश्वप्राप्तेर्ध्यानमन्तरेण सिद्धत्वात् । अकारस्य ध्येयस्योक्तफलत्वायोगादित्याशङ्क्याह । अकारेति ॥ तदालम्बनं तत्प्रधानमिति यावत् । अकारप्रधानमोङ्कारं ध्यायतो यथा वैश्वानरप्राप्तिस्तथोकारप्रधानं तमेव ध्यायतस्तैजसस्य हिरण्यगर्भप्राप्तिर्भवतीत्याह । तथेति ॥ यस्तु मकारप्रधानमोङ्कारं ध्यायति तस्य प्राज्ञाख्याव्याकृतप्राप्तिर्युक्तेत्याह । मकारश्चेति ॥ क्रियापदानुवृत्तिरत्र विवक्षिता ॥ चतुर्थपादं व्याचष्टे । क्षीणे त्विति स्थूलप्रपञ्चो जागरित

॥ उपनिषद् ॥

अमात्रश्चतुर्थोऽव्यवहार्यः प्रपञ्चोपशमः शिवोऽद्वैत एवमोङ्कार आत्मैव संविशत्यात्म-

---

अमात्रो मात्रा यस्य नास्ति सोऽमात्र ओङ्कारश्चतुर्थस्तुरीय आत्मैव केवलोऽभिधानाभिधेयरूपयोर्वाङ्मनसयोः क्षीणत्वादव्यवहार्यः । प्रपञ्चोपशमः शिवोऽद्वैतः संवृत्त एवं यथोक्तविज्ञानवता प्रयुक्त ओङ्कारस्त्रिमात्रस्त्रिपाद आत्मैव संविशत्यात्मना स्वेनैव स्वं पारमार्थिकमात्मानं य एवं वेद । परमार्थदर्शिना ब्रह्मविदा तृतीयं बीजभावं दग्ध्वाऽऽत्मानं प्रविष्ट इति न पुनर्जायते तुरीयस्याबीजत्वात् । न हि रज्जुसर्पयोर्विवेके रज्ज्वां प्रविष्टः

इति माण्डूक्योपनिषन्मूलमन्त्राः समाप्ताः ॥ ओं तत्सत् हरिः ओं ॥

॥ गौडपादीयश्लोकाः ॥

ओंकारं पादशो विद्यात् पादा मात्रा न संशयः। ओंकारं पादशो ज्ञात्वा न किञ्चिदपि चिन्तयेत् ॥२४॥

---

इति माण्डूक्यमूलमन्त्रभाष्यम् ॥ ओं ॥

पूर्ववदत्रैते श्लोका भवन्ति। यथोक्तैः सामान्यैः पादा एव मात्रा मात्राश्च पादास्तस्मादोंकारं पादशो विद्यादित्यर्थः। एवमोंकारे ज्ञाते दृष्टार्थमदृष्टार्थं वा न किञ्चित्प्रयोजनं चिन्तयेत् कृतार्थत्वादित्यर्थः ॥२४॥

युञ्जीत प्रणवे चेतः प्रणवो ब्रह्म निर्भयम्।
प्रणवे नित्ययुक्तस्य न भयं विद्यते क्वचित्॥२५॥
प्रणवो ह्यपरं ब्रह्म प्रणवश्च परः स्मृतः।

---

युञ्जीत समादध्यात् यथा व्याख्याते परमार्थरूपे प्रणवे चेतो मनो यस्मात्प्रणवो ब्रह्म निर्भयम्। न हि तत्र सदा युक्तस्य भयं विद्यते क्वचिद्विद्वान्न बिभेति कुतश्चनेति श्रुतेः॥२५॥

परापरे ब्रह्मणी प्रणवः परमार्थतः क्षीणेषु मात्रापादेषु पर एवात्मा ब्रह्मेति न पूर्वं कारणमस्य विद्यत इत्यपूर्वः। नास्यान्तरं भिन्नजातीयं किंचिद्विद्यत इत्य-

---

ब्रह्मणस्त्वा जानीयादित्याह। ओङ्कारमिति॥ उत्तरार्द्धस्य तात्पर्यमाह। एवमिति॥२४॥

* प्रणवानुसन्धानकुशलस्य प्रणवध्यानेनैव सर्वद्वैतापवादद्वारेण कृतार्थता भवतीत्युक्तम्। इदानीं तदनभिज्ञस्य परोपदेशमात्रशरणस्य ध्यानकर्तव्यतां कथयति। युञ्जीतेति॥ ननु मनसः समाधानं ब्रह्मणि कर्तव्यं किमिति प्रणवे तत्कर्तव्यमुच्यते तत्राह। प्रणव इति॥ सम्प्रति प्रणवे समाहितचित्तस्य फलं दर्शयति। प्रणवे नित्ये इति॥ समाधानविषयमाह। यथेति॥ तुरीयरूपे यथोच्यते तत्र हेतुमाह। यस्मादिति॥ मद्देव साधयति। न हीति॥ तत्र तैत्तिरीयकश्रुत्याऽऽनुकूल्यमाह। विद्वानिति॥२५॥

कोऽसावर्हि प्रणवो मन्दानां मध्यमानामुत्तमानां चाधिकारिणां ध्येयो भवतीत्याशङ्क्याह। प्रणवे हीति॥ उत्तमाधिकारिणां कोऽसावर्हि प्रणवः सम्यग्ज्ञानगोचरो भवति तत्राह। पूर्व इति॥ परापरब्रह्मा

अपूर्वोऽनन्तरो वाह्यो न परः प्रणवोऽव्ययः॥२६॥

सर्व्वस्य प्रणवो ह्यादिर्मध्यमान्तस्तथैव च।
एवं हि प्रणवं ज्ञात्वा व्यश्नुते तदनन्तरम्॥२७॥

---

नन्तरः। तथा वाह्यमन्यन्न विद्यत इत्यवाह्य। अपरं कार्य्यमस्य न विद्यत इत्यनपरः। स वाह्याभ्यन्तरो ह्यजः सैन्धवघनवदित्यर्थः॥२६॥

आदिमध्यान्ता उत्पत्तिस्थितिप्रलयाः। सर्व्वस्यैव मायाहस्तिरज्जुसर्पमृगतृष्णिकास्वप्नादिवदुत्पद्यमानस्य वियदादिप्रपञ्चस्य यथा मायाव्यादयः एवं हि प्रणवमात्मानं मायाव्यादिस्थानीयं ज्ञात्वा तत्क्षणादेव
व्यश्नुत इत्यर्थः॥२७॥

अमात्रोऽनन्तमात्रश्च द्वैतस्योपशमः शिवः।
ओङ्कारो विदितो येन स मुनिर्नेतरो जनः ॥२९॥

---

अमात्रस्तुरीय ओङ्कारो मीयतेऽनयेति मात्रा परिच्छित्तिः सा अनन्ता यस्य सोऽनन्तमात्रः। नैतावत्त्वमस्य परिच्छेत्तुं शक्यत इत्यर्थः। सर्व्वद्वैतोपशमत्वादेव शिवः। ओङ्कारो यथा व्याख्यातो विदितो येन स परमार्थतत्त्वस्य मननान्मुनिः। नेतरो जनः शास्त्रविदपीत्यर्थः ॥ २९॥

इति माण्डूक्योपनिषदर्थाविष्करणपरायां गौड़पादीयकारिकायां प्रथमभागमप्रकरणम् ॥ ॐ तत्सत् ॥

---

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंस परिव्राजकाचार्य्यस्य शङ्करभगवतः कृतावागमशास्त्रविवरणे गौडपादीयकारिकासहितमाण्डूक्योपनिषद्भाष्ये प्रथमभागमप्रकरणं सम्पूर्णम् ॥ ॐ तत्सत् ॥

---

इति श्रीमत्परमहंसपरिव्राजकाचार्य्य श्रीशुद्धानन्दपादपूज्य शिष्यभगवदानन्दज्ञानविरचितायां माण्डूक्योपनिषदाविष्करणपर गौडपादीयकारिकाभाष्यटीकायां प्रथमभागमप्रकरणं सम्पूर्णं ॥ ॐ तत्सत् ॥१॥

---

## अथ गौडपादीयकारिकायां वैतथ्याख्यं द्वितीयं प्रकरणम् ॥

हरिः ओं ॥

वैतथ्यं सर्व्वभावानां स्वप्न आहुर्मनी-

---

ओं ॥ ज्ञाते द्वैतं न विद्यत इत्युक्तम् । एकमेवाद्वितीयमित्यादिश्रुतिभ्यः । आगममात्रं तत् । तत्रोपपत्त्यापि द्वैतस्य वैतथ्यं शक्यतेऽवधारयितुमिति द्वितीयं प्रकरणमारभ्यते । वैतथ्यमित्यादिना । वितथस्य भावो वैतथ्यं असत्यत्वमित्यर्थः । कस्य । सर्व्वेषां बाह्याध्यात्मिकानां भावानां पदार्थानां स्वप्न उपलभ्यमानानामाहुः कथयन्ति मनीषिणः प्रमाणकुशलाः । वैतथ्ये हेतुमाह । अन्तःस्थानात् । अन्तः शरीरस्य मध्ये स्थानं येषाम् । तत्र हि भावा उपलभ्यन्ते पर्व्वतहस्त्यादयो न बहिः शरीरात् ।

पश्यति । प्रतिबुद्धश्च वै सर्वस्तस्मिन् देशे न विद्यते ॥ २ ॥

अभावश्च रथादीनां श्रूयते न्यायपूर्वकम् ।

---

सुप्तोऽहनि इव भावान् पश्यति बहुभिः सङ्गतो यैश्च सङ्गतो भवति तैर्गृह्येत ॥ न च गृह्यते । गृहीतश्चेत् त्वामद्य तत्रोपलब्धवन्तो वयमिति ब्रूयुः । नचैतदस्ति । तस्मान्न देशान्तरं गच्छति स्वप्ने ॥२॥

इतश्च स्वप्नदृश्या भावा वितथाः । यतो ह्यभावश्चैवरथादीनां स्वप्नदृश्यानां श्रूयते न्यायपूर्वकं युक्तितः श्रुतौ

---

तथापि गत्वा स्वप्नदर्शने कानुपपत्तिरित्याशङ्क्याह । यदि चेति ॥ अन्तरेव स्वप्नदर्शनमिति स्थिते स्वप्नमिथ्यात्वमुचितकालशून्यत्वादित्युक्तं प्रपञ्चयति । रात्राविति ॥ यद्यपि रात्रौ निद्रामुपगतस्तथापि भावानहनि पश्यन्निव तिष्ठति यश्च सङ्गतश्चतुरादिकरणोऽपि पश्यति । प्रयाणेऽपि पर्यटनं प्रतिपद्यते । यद्यपि सहायविहीनः स्वप्नस्तथापि बहुभिः सहाय स्वप्नानुपलभ्यते । तस्मादुचितस्य कालस्य करणस्य सहकारिणश्चाभावेऽपि स्वप्नदर्शनात्तस्मिन्मिथ्यात्वं सिद्धमित्यर्थः । स्वप्नमिथ्यात्वे हेत्वन्तरमाह । यैश्चेति ॥ सहदर्शिभिरवद्यमापन्नः स्वप्नद्रष्टुरवश्यमप्रतिपन्नमित्याशङ्क्याह । गृहीतश्चेदिति ॥ पुरुषान्तरसंवादादर्शनात्तद्देशान्तरप्राप्तिद्वारा स्वप्नदर्शनमिति वक्तुमशक्यत्वादन्तरेव स्वप्नदर्शनमित्युचितदेशकालाद्यभावात्तन्मिथ्यात्वं सिद्धमित्युपसंहरति । तस्मादिति ॥ २ ॥

स्वप्नदृश्यानां भावानां मिथ्यात्वे हेत्वन्तरमाह । अभावश्चेति ॥ न तत्र रथा न रथयोगा न पन्थानो भवन्तीत्यादिश्रुत्या स्वप्ने स्वयंज्योतिष्प्रमात्मनो दर्शयन्त्या तत्र दृश्यानां रथादीनामभावो योग्यते-

वैतथ्यं तेन वै प्राप्तं स्वप्न आहुः प्रका-
शितम् ॥३॥

---

न तत्र रथा इत्यत्र तेनान्तःस्थानसंवृतत्वादिहेतुना प्राप्तं वैतथ्यं तदनुवादिन्या श्रुत्या स्वप्ने स्वयंज्योतिष्ट्वप्रतिपादनपरया प्रकाशितमाहुर्ब्रह्मविदः ॥३॥

तस्मादाद्यन्तवत्त्वेन मिथ्यैव खलु ते स्मृताः
॥ ७ ॥
अपूर्वं स्थानिधर्मो हि यथा स्वर्गनिवासिनाम्

कस्माद्यस्मात्सप्रयोजनता दृष्टा या अन्नपानादीनां सा स्वप्ने विप्रतिपद्यते । जागरिते हि भुक्त्वा पीत्वा चातृप्तो विनिवर्त्तिततृट् सुप्तमात्र एव क्षुत्पिपासाद्यार्त्तमहोरात्रोषितमभुक्तवन्तमात्मानं मन्यते । यथा स्वप्ने भुक्त्वा पीत्वा चातृप्तोत्थितस्तथा । तस्माज्जाग्रद्दृश्यानां स्वप्नेऽपि विप्रतिपत्तिर्दृष्टा । अतो मन्यामहे तेषामप्यसत्त्वं स्वप्नदृश्यवदनाशङ्कनीयमिति । तस्मादाद्यन्तवत्त्वमुभयत्र समानमिति मिथ्यैव खलु ते स्मृताः ॥ ७ ॥

स्वप्नजाग्रद्दृश्ययोः समत्वाज्जाग्रद्भेदानामसत्त्वमिति यदुक्तं तदसत् । कस्मात् । दृष्टान्तस्यासिद्धत्वात् । कथं

---

दिति ॥ हेतोः सोपाधिकत्वं दूषयति । तत्रेति ॥ साधनव्याप्त्यादिदोषाहते सोपाधिनिरसनं शक्यमित्याशङ्क्याह । कस्मादिति ॥ फलपर्यन्ततावि रहितोपाधेः साधनव्याप्तिमाह । यस्मादित्यादिना ॥ तामेव विप्रतिपत्तिं प्रकटयति । जागरिते हीति ॥ उक्तमर्थं दृष्टान्तेन स्फुटयति । यथेत्यादिना ॥ उपाधेः साधनव्याप्तिं निगमयति । तस्मादिति ॥ हेतोः सोपाधिकत्वाभावे फलितमाह । अत इति ॥ हेतुद्वयमुपसंहरति तस्मादिति ॥ ७ ॥

दृष्टान्तस्य साध्यविकलत्वं शङ्कित्वा परिहरति । अपूर्वमिति ॥ यथा स्वर्गनिवासशीलानामिन्द्रादीनां सहस्राक्षत्वादिधर्मस्तथा यदिदमपूर्वं स्वप्नदर्शनं मन्यसे तदपि स्थानिनः स्वप्नस्थानवतो द्रष्टुरेव धर्मः । तेन दृष्टान्तस्य मिथ्यात्वसिद्धिरित्यर्थः । कथं तेनेह दृष्टत्वं तत्राह ।

तानयं प्रेक्षते गत्वा यथैवेह सुशिक्षितः ॥ ८ ॥

नहि जाग्रद्दृष्टा एवैते भावाः स्वप्ने दृश्यन्ते किन्तर्हि अपूर्वं स्वप्ने पश्यति चतुर्दन्तगजमारूढमष्टभुजमात्मानं मन्यते। अन्यदप्येवंप्रकारमपूर्वं पश्यति स्वप्ने। तन्नान्येनासताम-समिति सदेवतो दृष्टान्तोऽसिद्धस्तस्मात्स्वप्नवज्जागरितस्यासत्त्वमित्ययुक्तम्। तन्न स्वप्ने दृष्टमपूर्वं यन्मन्यसे न तत्स्वतः सिद्धम्। किन्तर्हि अपूर्वं स्थानिधर्मो हि स्थानिनो द्रष्टुरेव हि स्वप्नस्थानवतो धर्मः। यथा स्वर्गनिवासिनामिन्द्रादीनां सहस्राक्षत्वादि तथा स्वप्नदृशोऽपूर्वोऽयं धर्मः। न स्वतः सिद्धो द्रष्टुः स्वरूपवत्। तानेवं प्रकारान् अपूर्वान् स्वचित्तविकल्पानयं स्थानी स्वप्नदृक् स्वप्नस्थानं गत्वा प्रेक्षते। यथैवेह लोके सुशिक्षितो देशान्तरमार्गस्तेन मार्गेण देशान्तरं गत्वा तान् पदार्थान् पश्यति तद्वत्। तस्माद्यथा स्थानिधर्माणां रज्जुसर्पमृगतृष्णिकादीनामसत्त्वं तथा स्वप्नदृश्यानामपूर्वाणां स्थानिधर्मत्वमेवेत्यसत्त्वम्। अतो न स्वप्नदृष्टान्तस्यासिद्धत्वम् ॥८॥

तानयमिति। यथैवेह व्यवहारभूमौ सुशिक्षितो देशान्तरस्याभिमार्गस्तेन मार्गेण देशान्तरं गत्वा तत्रत्यान् पदार्थान् वीक्षते तथाऽयं स्वप्नगतान् पदार्थान् यथोक्तप्रकारान् प्रतिपद्यते। ततश्च स्वप्नस्य स्थानिधर्मत्वाद्दृष्टान्तमर्यादिवस्थ्यासत्त्वमित्यर्थः। शंकोत्तरभाष्यद्वयमुपन्यस्यति। स्वप्ने इति। सहस्राक्षत्वादि। अनुमानसिद्धस्यार्थस्यानुमानैर्दोषोक्तिमन्तरेणासत्त्वमयुक्तमिति दूषयति। कस्मादिति। व्याप्तिभूमिं दूषयन् व्याप्तिभङ्गं दोषमाह। दृष्टान्तस्येति। असिद्धत्वं प्रश्नपूर्वकं विघटयति। कथमित्यादिना। अपूर्वं दर्शनमेव विवृणोति।

स्वप्नवृत्तावपि त्वन्तश्चेतसा कल्पितन्त्वसत् ।
बहिश्चेतोगृहीतं सद्दृष्टं वैतथ्यमेतयोः ॥९॥

अपूर्वत्वाशङ्कां निराकृत्य स्वप्नदृष्टान्तस्य पुनः स्वप्नतुल्यतां जाग्रद्भेदानामुपपादयन्नाह। स्वप्नवृत्तावपि स्वप्नस्थानेऽप्यन्तश्चेतसा मनोरथसङ्कल्पितमसत् सङ्कल्पानन्तरसमकालमेवादर्शनात्तत्रैव स्वप्ने बहिश्चेतसा गृहीतं चक्षुरादिद्वारेणोपलब्धं घटादि सदित्येवमसत्यमिति निश्चितेऽपि सदसद्विभागो दृष्टः। उभयोरप्यन्तर्बहिश्चेतःकल्पितयोर्वैतथ्यमेव दृष्टम् ॥८॥

---

असद्दृत्तमिति। अन्यदपि सिद्धवत्कृतादिदृष्टान्तस्य साध्यविकलत्वे सिद्धे प्राग्युक्तानुमानानुपपत्तिरिति फलितमाह। तस्मादिति॥ दृष्टान्तासिद्धिं दूषयन्ननुमानं साधयति। तस्येति॥ तत्किं स्वभावत सिद्धपरतो वा। नाद्य। जडस्य तदयोगादित्याह। न तदिति॥ द्वितीये तन्मिथ्यात्वमित्यभिमेत्य प्रश्नपूर्वकमाद्यपादमवतारयति। किन्तदिति॥ तद्गतान्यक्षराणि व्याकरोति। स्थानिन इति॥ अपूर्वस्वप्नदर्शनस्य स्थानिधर्मत्वं दृष्टान्तेन साधयति। यथेत्यादिना॥ अपूर्वदर्शनं स्वप्नद्रष्टृधर्मोऽपि चैतन्यवत् किं न स्यादित्याशङ्क्य बाधोपलब्धेर्मैवमित्याह। न स्वत इति॥ उत्तरार्द्धं विभजते। तानित्यादिना॥ अपूर्वाणां स्वप्नदृश्यानां स्थानिधर्मत्वेऽपि किमायातमित्याशङ्क्याह। तस्मादिति॥ स्वप्नदृष्टान्तस्य साध्यविकलत्वाभावं निगमयति। अतो नेति॥ अपूर्वस्यानपूर्वस्य वा स्वप्नद्रष्टृधर्मत्वेन तदविद्याविलसितत्वाद्दृष्टान्ते साध्यसमुपपत्तेस्तथैव जाग्रद्भेदानां मिथ्यात्वं युक्तमित्यर्थः॥८॥

जाग्रद्दृश्यानां मिथ्यात्वं तेषु सदसद्विभागप्रतिभागविरुद्धमित्याशङ्क्य दृष्टान्तेन समाधत्ते। स्वप्नवृत्ताविति॥ श्लोकस्य तात्पर्यार्थमाह। अपूर्वत्वेति॥ स्वप्नदृष्टान्तस्यापूर्वदर्शनत्वप्रयुक्तां साध्यविकलत्वशङ्कां

जाग्रद्वृत्तावपित्वन्तश्चेतसा कल्पितन्त्वसत्
बहिश्चेतो गृहीतं सद्युक्तं वैतथ्यमेतयो ॥१०॥

उभयोरपि वैतथ्यं भेदानां स्थानयोर्यदि क एतान् बुध्यते भेदान् को वै तेषां विकल्पकः ॥ ११ ॥

---

सद्सतोर्वैतथ्यं युक्तम् । अन्तर्बहिश्चेत कल्पितत्वाविशेषादिति व्याख्यातमन्यत् ॥१०॥

चोदकआह । स्वप्नजाग्रत्स्थानयोर्भेदाना यदि वैतथ्य क एतानन्तर्बहिश्चेत कल्पितान् बुध्यते । को वै तेषा विकल्पक । स्मृतिज्ञानयो क आलम्बनइत्यभिप्राय । न चेन्निरात्मवाद इष्ट ॥११॥

कल्पयत्यात्मनात्मानमात्मा देवः स्वमायया।
स एव बुध्यते भेदानिति वेदान्तनिश्चयः॥१२॥

---

स्वयं स्वमायया स्वमात्मानमात्मा देव आत्मन्येव वक्ष्यमाणं भेदाकारं कल्पयति रज्ज्वादाविव सर्पादीन्। स्वयमेव च तान् बुध्यते भेदान् तद्वदेवेत्येवं वेदान्तनिश्चयः। नाऽन्योऽस्ति ज्ञानस्मृत्याश्रयः। न च निरास्पदे एव ज्ञानस्मृती वैनाशिकानामिवेत्यभिप्रायः॥१२॥

---

र्थापत्तिविरोधं स्फोरयति। स्वप्नेति॥ चतुर्थपादमवतार्यार्थापत्त्य-न्तरविरोधं स्फुटयति। को वै तेषामिति॥ कर्त्ता हि पूर्वानुभूतं स्मृत्वा तज्जातीयान् निर्मिमीतेऽनुस्मृत्यनुभवान्यथानुपपत्त्या कर्त्तादिरपो विवक्षितस्तथा च कर्त्रादिव्यवहारानुपपत्तिः सर्वमिथ्यात्वे दुर्वारेत्यर्थः॥ योऽध्यात्मं प्रमाता यश्चाधिदैवं कर्त्तेश्वरस्तावुभावपि मिथ्येत्यङ्गीकारात् प्रमात्रादेरप्यमिथ्यात्वमाह। न चेदिति॥ यदि प्रमाता कर्त्ता वा नेष्यते तर्हि नैरात्म्यमिष्टमेवापद्यते। न च तद्द्रष्टुं शक्यते आत्मनि करणस्य दुष्करत्वान्निराकर्तुरेवात्मत्वादित्यर्थः॥११॥

कर्तृकार्यादिव्यवस्थानुपपत्तिं परिहरति। कल्पयतीति॥ करणान्तरं व्यवच्छिनत्ति। आत्मनेति॥ कर्मान्तरं व्यावर्त्तयति। आत्मानमिति॥ कर्त्रन्तरं निवारयति। आत्मेति॥ तस्य द्योतकान्तरापेक्षां प्रतिक्षिपति। देव इति॥ विवर्त्तवादं द्योतयति। स्वमाययेति॥ सर्वस्य मिथ्यात्वेऽपि मायया विकल्पितभेदानुरोधेन कर्तृत्वादिव्यवहारस्य सिद्ध्यतीति भावः। प्रमातृप्रमाणादिव्यवहारानुपपत्तिं प्रत्याह। स एवेति॥ एकस्मिन्नेवाद्वितीये प्रतीचि वस्तुनि कल्पनिकभेदनिबन्धना सर्वा व्यवस्थेत्यत्र प्रमाणमाह। इति वेदान्तेति॥ यथा घटस्य कुलालोऽधिष्ठाता घटादन्यो दृष्टो न तथेहान्योऽधिष्ठातास्तीत्याह। स्वयमिति॥ यथा तत्र घटाख्यमुपादानमधिष्ठातुरन्यद्भिन्नं

वहिः । कल्पिता एव ते सर्वे विशेषो नान्यहेतुकः ॥१४॥

---

चित्तकाला हि येऽन्तस्तु चित्तपरिच्छेद्याः नान्यश्चित्तकाल-व्यतिरेकेण परिच्छेदकः कालो येषां ते चित्तकालाः । कल्पनाकाल एवोपलभ्यन्त इत्यर्थः । द्वयकालाश्च भेदकाला अन्योन्यपरिच्छेद्याः । यथा गोदोहनमास्ते यावदास्ते तावद्गां दोग्धि यावद्गां दोग्धि तावदास्ते तावानयमेतावान् स इति परस्परपरिच्छेदकत्वं बाह्यानां भेदानां ते द्वयकालाश्चान्तश्चित्तकाला बाह्याश्च द्वयकालाः

---

निर्द्धारितमित्यत्र हेतुमाह । यस्मादिति । आत्माभिध्याविवर्तेन, चित्तेन भावद्गतविनिर्मिता मनोरथरूपा मनस्यन्तर्वर्तमाना बही रज्जुसर्पा-दयस्ते चित्तेनैव परिच्छिद्यन्ते । ते हि कल्पनाकालमात्रभाविनो नस-भीयन्ते । तैः सह वैलक्षण्यं प्राप्तो बहिरुपदृश्यमानानां भावा-नामन्योऽन्यपरिच्छेद्यत्वं कालद्वयावच्छिन्नत्वेन प्रत्यभिज्ञानगोचरत्व-मिति यस्मादुपलभ्यते तस्मादयुक्तं जागरितस्य स्वप्नवन्मिथ्यात्वमित्यर्थः । श्लोकाक्षरैरुत्तरमाह । चित्तेति । येन मनस्यन्तर्मनोरथरूपा भावास्ते चित्तकाला भवन्तीत्यचित्तकालत्वं विशदयति । चित्तेत्यादिना । वाक्यार्थयुक्तां विवक्षितार्थमाह । कल्पनेति । द्वितीयपादमवताय्य व्याकरोति । द्वयेति । ये बहिरुपलभ्यन्ते भेदकालाः कालस्य भेदो भेदकालः स येषां ते तथेति व्युत्पत्तिः । तत्रैवान्येन पूर्वेणा-न्येन चापरेण परिच्छेद्याभिन्नकालावच्छिन्नत्वेन प्रत्यभिज्ञायमान-त्वमुपलक्षणत्वेनोक्तमयुक्तमित्याह । यथेति । गवां दोहनं गोदोहन-पर्यन्तमास्ते देवदत्तस्तिष्ठतीति प्रत्यभिज्ञोपन्यासमभिप्रेत्योदाहरणीया यावता कालेनावच्छिन्नो भवति तावता कालेनावच्छिन्नो गोदोहनं

अव्यक्ता एव येऽन्तस्तु स्फुटा एव च ये बहिः।

कल्पिता एव ते सर्वे न बाह्यो कालद्वयत्वविशेषः कल्पितत्वव्यतिरेकेणान्यहेतुकः। अथापि हि स्वप्नदृष्टान्तो भवत्येव ॥१४॥

यद्यप्यन्तरव्यक्तत्वं भावानां मनोवासनामात्राभिव्यक्तानां स्फुटत्वं वा बहिश्चक्षुरादीन्द्रियान्तरे विशेषः। नासौ

निवर्तयत्यनेककालावस्थायित्वेन प्रत्यभिज्ञाविषयत्वं तस्य दर्शयति। यावदिति। यावता कालेनायं घटोऽर्थक्रियां निर्वर्तयितुं शक्नोति तावता कालेनावच्छिन्नं सन्तं तिष्ठतीत्युदाहरणान्तरमाह। तावानिति। घटोत्पत्तया स्थितो यावता कालेनावच्छिन्नः स्वकार्यं निर्वर्तयितुं योग्यस्तावता कालेनावच्छिन्नस्तिष्ठतीत्यपरमुदाहरणमाह। एतावानिति। उक्तेन न्यायेन परेणापरेण च कालेन परिच्छेद्यत्वं जाग्रद्दृश्यानां भावानामुपगम्यते कालद्वयस्य च परिच्छेदकत्वम्। तथा ते सर्वे भावा बहिर्दृश्यमानाद्वयकालेन कालद्वयेन परिच्छिन्ना भवन्तीत्यर्थः। तृतीयपादं व्याचष्टे। अन्तरिति। चतुर्थपादार्थमाह। अनेनेत्यादिना। बाह्यो जाग्रद्दृश्येषु बाह्यपदार्थेषु व्यवस्थितो कालद्वयत्वेन कालद्वयावच्छेदेन तत्र प्रत्यभिज्ञायमानत्वरूपो विशेषोऽन्यहेतुको न भवति। कल्पितेऽपि तथाविधविशेषसम्भवादित्यत्र दृष्टान्तमाह। अथापि हीति। यद्यपि सर्वं जाग्रद्दृश्यं कल्पितं तथापि तत्र यथोक्तो विशेषः स्फुटं सिद्ध्यति। स्वप्नसर्वस्य भेदजातस्य कल्पितत्वेऽपि प्रत्यभिज्ञायमानत्वाज्जागरितेऽपि तदुपपत्तेरित्यर्थः ॥१४॥

स्वप्नजागरितयोरुभयोरपि मिथ्यात्वे स्फुटास्फुटावभासविभागानुपपत्तेर्नाविशेषेण मिथ्यात्वमित्याशङ्क्याह। अव्यक्ता इति ये मनस्यन्तर्भावनारूपत्वादस्फुटा ये च मनसो बहिरुपलभ्यमाना स्फुटा भवन्ति ते सर्वे मनःस्पन्दनमात्रत्वेन कल्पिता मिथ्यैवान्तर्बहिरिन्द्रियभेदानिमित्तः

भावान् । बाह्यानाध्यात्मिकांश्चैव यथाविद्य-
स्तथास्मृतिः ॥१६॥

फलात्मकमहं करोमि ममसुखदुःखे इत्येवं लक्षणम्। अनेनैवंलक्षणा एव शुद्धे आत्मनि रज्ज्वामिव सर्पं कल्पयते पूर्वम् । ततस्तादर्थ्येन क्रियाकारकफलभेदेन प्राणादीन्नानाविधान् भावान् बाह्यानाध्यात्मिकांश्चैव कल्पयते। तत्र कल्पनायां को हेतुरित्युच्यते । योऽसौ स्वयं कल्पितो जीवः सर्वकल्पनायामधिकृतः स यथाविद्यो यादृशी विद्या विज्ञानमस्येति यथाविद्यस्तथाविधैव स्मृतिस्तस्येति तथा-स्मृतिर्भवति स इति । अतो हेतुकल्पनाविज्ञानात् फल-

भावान् निर्मिमीते । स्वागतस्मृतिवैचित्र्यात्तत्कल्पितेषु भावेषु वैचित्र्योपपत्तिरित्यर्थः । श्लोकस्यावशिष्टं भागमुत्थापयति । बाह्यानिति ॥ पदार्थाः साध्यसाधनतया स्थिता बाह्याः सुखदुःखे ज्ञानं रागद्वेषप्रयत्नादय आध्यात्मिकास्तेषां परस्परं निमित्तनैमित्तिकताऽस्ति । बाह्यानि निमित्तान्याध्यात्मिका भवन्ति । तान्यपि निमित्तीकृत्येतरे जायन्ते । तदेवमितरेतरनिमित्ततया नैमित्तिकतया च कल्पनायां मूलं वक्तव्यं । निर्मूलकल्पनायामतिप्रसङ्गादित्यर्थः । श्लोकावयवयोजनया परिहरति । उच्यत इति ॥ हेतुफलात्मकमित्युक्तमेव व्याकरोति । करोमीति ॥ हेतुफलभावविरहिते परिशुद्धात्मरूपे जीवकल्पनाधिष्ठानं दर्शयति । अनेनैवमिति ॥ आरोपस्याधिष्ठानापेक्षत्वे दृष्टान्तमाह । रज्ज्वामिवेति ॥ द्वितीयतृतीयपादौ विभजते । तत इति ॥ तादर्थ्येन प्रथमं कल्पितस्य भोक्तुर्जीवस्य शेषत्वेनेत्यर्थः । यद्यपि जीवः सर्वकल्पनायां मूलभूतो हेतुस्तथापि तस्य कल्पनाविशेषे विशेषहेतुव्यतिरेकेण न संभव-

ल्पिता। सर्पधारादिभिर्भावैस्तद्वदात्मा विकल्पितः॥१७॥

चयनिमित्तम् । यदि हि पूर्वमेव रज्जुः स्वरूपेण निश्चिता स्यात् न सर्पादिविकल्पोऽभविष्यत् । स यथा स्वहस्ताङ्गुल्यादिषु एष दृष्टान्तः । तद्वद्धेतुफलादिसंसारधर्मानर्थविलक्षणतया स्वेन विशुद्धविज्ञप्तिमात्रसत्ताद्वयरूपेणानिश्चितत्वाज्जीवप्राणाद्यनन्तभावभेदैरात्मा विकल्पित इत्येष सर्वोपनिषदां सिद्धान्तः ॥१७॥

इदानीं जीवकल्पनानिमित्तं निरूपयति । अनिश्चितेति । श्लोकस्य तात्पर्यं दर्शयितुं वृत्तं कीर्तयति । जीवेति । पूर्वश्लोकसमाप्त्यर्थः । जीवकल्पनाया मिथ्यात्वायोगात् अनिमित्तत्वस्य वक्तव्यत्वात् तस्य च वस्तुत्वे निवृत्त्यनुपपत्तेः । अवस्तुत्वे च निमित्तत्वासिद्धेर्जीवकल्पनाया दुर्घटत्वात्तत्कार्यभूतापि कल्पना नावकल्पत इत्याशङ्कते । नैवेति । उत्तरत्वेन श्लोकाक्षराणि व्याचष्टे । दृष्टान्तेनेति । स्वेनासाधारणेन रूपेण रज्जुत्वेनेति यावत् । अनवधारितत्वमेव स्फोरयति । एवमेवेति । रज्जुरेवेयमित्यनेन प्रकारेणेत्यर्थः । सर्पादिकल्पनायामन्वयव्यतिरेकसिद्धमुपादानमुपन्यस्यति । स्वरूपेति । उक्तावधारणाराहित्ये कारणं सूचयति । मन्देति । पूर्वं रज्जुस्वरूपनिश्चयतयाऽप्रमाणावस्थायामित्यर्थः । एतदेव व्यतिरेकद्वारा विवृणोति । यदि हीति । देवदत्तस्य हस्ताद्यवयवेषु तद्रूपेणैव निश्चितेषु सर्पादिविकल्पो यथा नोपलभ्यते तथा पुरोवर्तिन्यपि रज्जुस्वरूपेण निश्चितेनासौ युक्तस्तथा च रज्जुप्रमादादेव भवतीत्यर्थः । उपपादितं दृष्टान्तमनूद्य दार्ष्टान्तिकमभिसन्धानन्तरार्धपादार्थमाह । एष इति । हेतुफलादीत्यादिशब्देन कर्तृत्वभोक्तृत्वरागद्वेषादि गृह्यते । विशुद्धत्वमेव स्फुटयति ।

निश्चितायां यथा रज्ज्वां विकल्पो विनिवर्तते । रज्जुरेवेति चाद्वैतं तद्वदात्मविनिश्चयः॥१८॥

---

रज्जुरेवेति निश्चये सर्वविकल्पनिवृत्तौ रज्जुरेवेति चाद्वैतं यथा तथा नेति नेतीति सर्वसंसारधर्मशून्यप्रतिपादकशास्त्रजनितविज्ञानसूर्यालोककृतात्मविनिश्चयः। आत्मैवेदं सर्वं अपूर्वोऽनपरोऽनन्तरोऽबाह्यः सबाह्याभ्यन्तरो ह्यजोऽजरोऽमरोऽमृतोऽभय एवाद्वय इति॥१८॥

---

स्वनेति। अनादौपितेमेति यावत्। विचारविरहस्य अज्ञानादिराहित्यमाकारान्तरशून्यत्वं तन्मात्रत्वमित्यर्थः। तन्मात्रत्वमयुक्तं सामान्यविशेषाभावादित्याशङ्क्याह। यत्तेति। न च गेहान्धकारवद्रज्जुमिति मत्वा विशिनष्टि। अद्वयेति। सच्चिदानन्दाद्वयात्मा विद्याविकल्पितद्वैतमित्यत्र प्रमाणं सूचयति। इत्येव दृति। अद्वैतस्वतत्त्वावस्थोपलभ्यते यत्र हि द्वैतमिव भवतीत्यादावपि द्वैतवत्प्रतिभासमानयोर्द्वयत्वमावेदयन्त्र श्रुतयः सूच्यन्ते। तेनाद्वैतं तत्त्वं द्वैतमविद्याविजृम्भितमिति प्रमाणसिद्धमित्यर्थः॥१७॥

अविद्याकृतात्मो जीवकल्पनेत्यत्र प्रमुक्तेन्दो सदृष्टान्तं व्यतिरेकमुखेन दर्शयति। निश्चितायामिति। रज्जुरेवेति रज्ज्वां निश्चितायां तदज्ञाननिबन्धनसर्पादिविकल्पः सर्वथा निवर्तते रज्जुमात्रमवशिष्यते। तद्वदात्मनि श्रौतो निश्चयो यदा सम्पद्यते तदा सर्वस्यात्माऽविद्याकल्पितस्य जीवादिविकल्पस्य व्यावृत्तेरद्वैतमेवात्मनः परिशिष्यते। तस्मादात्माऽविद्याविजृम्भितजीवकल्पनेत्यर्थः। दृष्टान्तभागं व्याचष्टे। रज्जुरिति। तद्वदित्यादि व्याकरोति। तथेति। सर्वस्यापि समारोपितो धर्मः स्यात्मन्यादौ

प्राण इति प्राणविदो भूतानीति च तद्विदः।
गुणा इति गुणविदस्तत्त्वानीति च तद्विदः॥२०

करोति तथेयमपि देवस्य माया यथाऽयं स्वयमपि मोहितो भवति। मम माया दुरत्ययेत्युक्तम्॥१९॥

प्राणः प्राज्ञो बीजात्मा तत्कार्यभेदा हीतरे स्थि

र्यद्भुतत्वेन व्याकरोति। उच्यत इति। मायामेव दृष्टान्तेन स्पष्टयति। यथेति। तामेव मायां कार्यद्वारा स्फोरयति। यथेति। यथा लौकिको मोहितो मोहपरवशो दृश्यते तथा ऽयमात्मा स्वयमेव मायया स्वकीयया मोहितो भवति। अतो मोहद्वारा ऽनन्यैव मायाधिगतेत्यर्थः। मायाया मोहहेतुत्वं भगवतापि सूचितमित्याह। ममेति॥१९॥

के ते प्राणादयोऽनन्ता भावा यैरात्मा विकल्पत इत्यपेक्षायां प्राणादिविकल्पनामुदाहरति। प्राण इति। प्राणो हिरण्यगर्भकारणं शरीरं वा स जगतो हेतुरिति प्राणविदो हैरण्यगर्भाः वैशेषिकादयश्च कल्पयन्ति। तदिदं कल्पनामात्रम्। स्वतन्त्रस्य हिरण्यगर्भस्य सर्वजगद्धेतुत्वे मानाभावात्। पौरुषेयागमस्यापौरुषेयश्रुतिविरोधे स्वार्थे मानत्वायोगात्तदभ्युपगमवादस्य च प्रमाणयुक्तिविहीनस्य प्रतिपत्तुमशक्यत्वादित्यर्थः। कल्पनान्तरं दर्शयति। भूतानीति चेति। पृथिव्यप्तेजोवायवस्तानि तानि च चत्वारि भूतानि जगत्कारणानीति लोकायतिकास्तदपि कल्पनामात्रम्। न हि भूतानि स्वतः सिद्धानि जडत्वविरोधात्। नापि परतः सिद्धानि। तदुपगतस्य चैतन्यस्य स्वरूपफलत्वायोगाद्बहिर्गतस्य स्वस्य बहिर्विषयत्वादर्शनात्। अतो भूतानि जगत्कर्तॄणीति कल्पनमयुक्तम्। सत्त्वरजस्तमांसि त्रयो गुणाः साम्ये नावस्थिता जगतो महदादिकस्य कारणमिति सांख्याः। तदपि कल्पनामात्रम्। साम्येन स्थितानां कारणत्वे प्रमाणाभावप्रसङ्गात्।

लोका इति लोकविदो देवा इति च तद्विदः ॥२१॥
वेदा इति च वेदविदो यज्ञा इति च तद्विदः । भोक्तेति च भोक्तृविदो भोज्यमिति च तद्विदः ॥२२ ॥

---

भेदा रज्ज्वामिव सर्पादयः । तच्छून्ये आत्मन्यात्मस्वरूपा

---

न्तरगतो वर्णस्यारोप्यते। तथा च तथाविधक्रमवता वर्णानामारोपित रूपेण वेदशब्दवाच्यत्वात्क्रमो वेदानां परमार्थतेत्याह । वेदा इति । ज्योतिष्टोमादयो यज्ञा वस्तुभूता भवन्तीति बौधायनप्रभृतयो याज्ञिका मन्यन्ते तदपि भ्रान्तिमात्रम् । यत्तं व्यासासामो द्रव्य देवता त्याग स्यतेनैकैकस्मिन्यज्ञविज्ञानाभावात्समुदायस्य चाव स्तुत्यादित्याह । यज्ञा इति चेति । भोक्तैवात्मा न कर्तेति साङ्ख्या । तत्र भोगो यदि विक्रिया स्वीक्रियते तर्हि कथं नानित्यत्वादिप्रसङ्ग स्वभावश्चेत् सदा स्यादिति विषयसन्निधौ भोक्तृत्व भ्रान्तिरेवेत्याह । भोक्तेति चेति । सूपकारास्तु भोज्य वस्त्विति प्रतिजानते । तदपि न । मधुरादिरसस्य ज्ञानादेशदेशान्यथात्वदर्शनादेकरूप्यासम्भवादित्याह । भोज्यमिति चेति ॥ २२ ॥

आत्मा सूक्ष्मोऽणुपरिमाणः स्यादिति केचित् । तन्न । युगपदशेष-शरीरव्यापिवेदनानुभवस्यानासिद्धेरित्याह । सूक्ष्म इतीति । स्थूलो देहाहम्प्रत्ययादात्मेति लोकायतभेदः । तच्च न । स्वतस्तुभयोरपि सङ्घा-ताविशेषाच्चैतन्यप्रसङ्गात् । एकैकस्य च भूतस्य चैतन्यादर्शनात्सङ्घा-तस्य चायस्तुत्वादित्याह । स्थूल इति चेति । मूर्त्तस्त्रिशूलादिधारी ... परमार्थो भवतीत्यागमिकाः । तदपि भ्रान्ति ... शरीरवत्तस्यापि शरीरस्य पाञ्चभौतिकत्वाद्गी- ... लोकाभावादयुक्तमित्याह । मूर्त्त इति ।

सूक्ष्म इति सूक्ष्मविदः स्थूल इति च तद्विदः॥
मूर्त्त इति मूर्त्तविदो अमूर्त्त इति च तद्विदः
॥ २३ ॥

काल इति कालविदो दिश इति च तद्विदः
वादा इति वादविदो भुवनानीति तद्विदः॥२४॥
मन इति मनोविदो बुद्धिरिति च तद्विदः।

निश्चयहेतोरविद्यया कल्पिता इति पिण्डीकृतोऽर्थः।

---

अमूर्त्तः सर्वाकारशून्यो निःस्वभावः परमार्थ इति शून्यवादिनः तदपि कल्पनामात्रम्। परमार्थो निःस्वभावश्चेति व्याघातादित्याह। अमूर्त्त इति चेति ॥२३॥

कालः परमार्थ इति ज्योतिर्विदः। तच्च न। कालस्य मुहूर्त्तादिव्यवहारायोगात्। तत्प्राधान्येऽपि न स्वातन्त्र्यम्। अन्य-विषयत्वेन प्रतीतेः। उदयकाल इत्यादिना क्रियाधर्म्मत्वेन स्फुट-त्वात्। न च क्रियाधर्म्मत्वं कालेऽपि तद्वदुत्पत्तिदर्शनादन्यथा-कालानवच्छिन्नत्वेन क्रियानित्यत्वापातादित्याह। काल इतीति॥ स्वरोदयविदस्तु दिशः परमार्था इत्याहुः। तदपि भ्रान्तिमात्रम्। तद्विदामपि पराजयदर्शनादित्याह। दिश इति चेति॥ धातुवादो मन्त्रवादश्चेत्यादयो वादा वस्तुभूता भवन्तीति केचित्। तदपि कल्पना-मात्रम्। ताम्रादिस्वभावे स्थिते नष्टे च कनकादिस्वभावासम्भवात्। मन्त्रवादेऽपि कालदृष्टो न भवति। अकालदृष्टः स्वयमेवोत्पद्यत इत्यभ्यु-पगमादज्ञमोहमात्रमित्याह। वादा इतीति॥ भुवनानि चतुर्दश वस्तू-नीति भुवनकोषविदः। तदपि कल्पनामात्रम्। तेषामदृष्टत्वात्। न च तेभ्यस्तद्दर्शनम्। तेषां मिथो विप्रतिपत्तिदर्शनादित्याह। भुवनानीति ॥ २४ ॥

मन एवात्मेति लोकायतभेदः। तदपि भ्रान्तिमात्रम्। तस्य

लोकान् लोकविदः प्राहुराश्रमा इति तद्विदः । स्त्रीपुंनपुंसकं लैङ्गाः परापरमथापरे ॥२७॥

सृष्टिरिति सृष्टिविदो लय इति च तद्विदः ।

---

त्वाद्यालो न हतः ॥२०॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥

किं बहुना प्राणादीनामन्यतममुक्तमनुक्तं वाऽन्यं यं

---

पातादविद्यामाययोरैकत्वादवान्तरभेदे च नियतावपि तदुपपत्तेर्न स्तुप्रातिरेकतादवस्थ्यम् । कालकलासु च तत्प्रसिद्धेरित्याह । एकत्रिंशक इति । अनन्तः पदार्थभेदो न नियतोऽस्तीति केचित् तदपि न । मादिना विवाददर्शनात् । विवादस्य चाप्रामाणिकत्वादित्याह । अनन्त इतीति ॥२६॥

लोकानुरञ्जनमेव तत्त्वमिति लौकिकाः । तदपि विभ्रममात्रम् । लोकस्य भिन्नरुचित्वात्तदनुरञ्जनस्येश्वरेणापि कर्तुमशक्यत्वादित्याह । लोकानिति । दण्डपञ्चतयस्याश्रमाः परमार्था इति समर्थयन्ते तदसत् । वैधस्याश्रमशब्दार्थत्वे शूद्रादेरपि प्रसङ्गाच्छ्रातेश्च दुर्विवेचनत्वात्तस्याश्रमस्य दर्शयितुमशक्यत्वात्संस्कारस्य च देहधर्मतायित्वे पारलौकिकत्वायोगादसङ्गे चात्मनि तदसमवायादित्याह । आश्रमा इतीति । वैयाकरणास्तु स्त्रीपुंनपुंसकशब्दजातं तत्त्वमिति वर्णयन्ति । तदप्ययुक्तम् । स्त्र्यादेः शब्दस्वभावत्वे घटादीनां त्रिलिङ्गत्वायोगादेकस्यानेकस्वभावत्वासंभवादौपाधिकधर्मत्वे च तस्यावस्तुत्वप्रसङ्गादित्याह । स्त्रीपुंनपुंसकमिति । द्वे ब्रह्मणी वेदितव्ये परं चापरं चेति केचित् । तच्च न । परिच्छेदे क्वचिदपि ब्रह्मत्वायोगात् वस्तुतोऽपरिच्छिन्नस्य भङ्गाभावादित्याह । परापरमिति ॥२७॥

सृष्टिर्लयो वा स्थितिर्वा तत्त्वमिति पौराणिकाः । तदपि

स्थितिरिति स्थितिविदः सर्वे चेदं तु सर्वदा ॥२८

यं भावं दर्शयेद्यस्य तं भावं स तु पश्यति

तं चावति स भूत्वासौ तद्ग्रहः समुपैति तं ॥२९

एतैरेषोऽपृथग्भावैः पृथगेवेति लक्षितः ।

---

भावं पदार्थं दर्शयेद्यस्याचार्योऽन्यो वाप्तः इदमेव तत्त्वमिति स तं भावमात्मभूतं पश्यत्ययमहमिति वा ममेति वा तं च द्रष्टारं स भावोऽवति यो दर्शितो भावः स भूत्वा रक्षति । स्वेनात्मना सर्वतो निरुणद्धि । तस्मिन् ग्रहस्तद्ग्रहस्तदभिनिवेशः । इदमेव तत्त्वमिति स तं ग्रहीतारमुपैति । तस्यात्मभावं निगच्छतीत्यर्थः ।२९।

एते प्राणादिभिरात्मनोऽपृथग्भूतैरपृथग्भावैरेष

---

कल्पनामात्रम् । ततोऽपसतस्तोत्पत्त्याद्यभावस्य प्रकृतमायात्वादिति भावः । सृष्टिरित्यादिना यथोक्तकल्पनाधिष्ठानं सूचयति । सर्वं चेति । उदाहृतानुदाहृताश्च कल्पनाभेदा यावन्तो विद्यन्ते ते सर्वेऽपि प्रकृतात्मन्येव कल्पनावस्थायां कल्प्यन्ते नात्मन कल्पितत्वम् । सर्वस्य कल्पितत्वेनाधिष्ठानत्वायोगादित्यर्थः । मायादिश्लोकेषु प्राणशब्दार्थमाह । इति । तस्यैव जीवात्मनो विकारविशेषत्वादितरयोश्च ततोऽनन्तभिन्नेत्याह । तत्कार्यमिति । अनिष्टपदार्थं स्फुटयति । धर्म इति । धर्मो पापधर्मौ देहधर्माश्चैते सर्वशब्देन गृह्यन्ते । तेषामात्मनि तदध्यासादेव कल्पितत्वं तद्दृष्टान्तं स्फुटयति । रज्ज्वामिति । आत्मनोऽधिष्ठानयोग्यतार्थं कल्पनाशून्यत्वमाह । तच्छून्य इति किमिति समुदायार्थं श्लोकान्तरमुच्यते । श्लोकान्तरेऽपि प्रत्येकं पदार्थत्वाख्यानमेतेषु किं न स्यादित्याशङ्क्याह । प्रत्येकमिति ॥२८॥

लौकिकानां परीक्षकाणां च कतिपयकल्पनाभेदानुदाहृत्यानन्

एवं यो वेद तत्त्वेन कल्पयेत्सोऽविशङ्कितः॥३०

आत्मा रज्जुरिव सर्पादिविकल्पनारूपैः पृथगेवेति लक्षितो ऽप्यलक्षितो मूढैरित्यर्थः। विवेकिनान्तु रज्ज्वामिव कल्पिताः सर्पादयो, नात्मव्यतिरेकेण प्राणादयः सन्तीत्यभिप्रायः। इदं सर्वं परमात्मेति श्रुतेः। एवमात्मव्यतिरेकेणासत्त्वं रज्जुसर्पवदात्मनि कल्पितानामात्मानञ्च केवलं निर्विकल्पं यो वेद तत्त्वेन श्रुतितो युक्तितश्च सोऽविशङ्कितो वेदार्थं विभागतः कल्पयेत् कल्पयतीत्यर्थः। इदमेवं परं वाक्यमदोऽन्यपरमिति। नह्यनध्यात्मविद्वेदान् ज्ञातुं शक्नोति तत्त्वतः। नह्यनात्मवित्कश्चित्क्रियाफलमुपाश्नुत इति हि मानवं वचनम्।३०।

त्वादशेषतत्त्वोपाधिष्ठानत्वं सम्यक्त्वं द्वष्टा मुद्रूपमात्ममाचष्टे। य भाव मिति। पादत्रय विभजते॥ कि बहुनेत्यादिना॥ तमेव भाव विशिनष्टि। यो दर्शित इति॥ स कथं दृष्टार रक्षतीत्यपेक्षायामाह। अमायिति॥ साधकपुरुषतादात्म्यमापद्यत्यर्थः॥ रक्षणप्रकारं प्रकटयति स्वेनेति॥ साक्षादसाधारणरूपत्वेन तमैव निष्ठामापाद्य ततोऽन्यत्र प्रवृत्तिमुपासकस्य निवारयतीत्यर्थः। चतुर्थपादं व्याचष्टे। तस्मिन्निति॥ एतेनान्यत्र प्रवृत्तिनिरोधे हेतुरुक्तः कहि प्राणादीनामात्मत्वप्राप्तमित्याशङ्क्य कल्पितानामधिष्ठानातिरेकेणावस्तुत्वान्नैवमित्याह॥ एतैरिति॥२९॥

उक्तमर्थमुपसंहरति एवमिति। पूर्वार्द्धं व्याकरोति। एतैरिति॥ कल्पितानामधिष्ठानातिरेकेण सत्ताम्फुरणयोरभावात्तद्द्वारेण आत्मनि भेददर्शनमविवेकिनामस्तु। तदन्येषां कथमुन्नौमितिविचारयाह। विवेकिनामिति॥ प्राणादीनाम...

स्वप्नमाये यथा दृष्टे गन्धर्वनगरं यथा।
तथा विश्वमिदं दृष्टं वेदान्तेषु विचक्षणैः॥३१॥

यदेतद्द्वैतस्यासत्त्वमुक्तं युक्तितस्तदेतद्वेदान्तप्रमाणावगतमित्याह। स्वप्नश्च माया च स्वप्नमाये असद्वस्त्वात्मिके ऽसत्यौ सद्वस्त्वात्मिके इव लक्ष्येते अविवेकिभिः। यथा च प्रसारितपण्यापणगृहप्रासादस्त्रीपुंजनपदव्यवहाराकीर्णमिव गन्धर्वनगरं दृश्यमानमेव सदकस्मादभावतां गतं दृष्टम्। यथा च स्वप्नमाये दृष्टे ऽसद्रूपे तथा विश्वमिदं द्वैतं समस्तमसद्दृष्टं क्वेत्याह। वेदान्तेषु। नेह नानास्ति किञ्चन। इन्द्रो मायाभिः॥ आत्मैवेदमग्र आसीत्। ब्रह्मैवेदमग्र आसीत् द्वितीयाद्वै भयं भवति। नतु तद्द-

द्वैतमिति॥ उत्तरार्द्धं योजयति। तथेमिति॥ तत्त्वे नात्मवेदनोपायं सूचयति। तत्रेति। अपूर्वत्वादज्ञातत्वात् प्रमाणं मिथ्यात्वसाधको दृश्यत्वादिहेतवस्तु युक्तिरित्युच्यते। यथोक्तविज्ञानवान् हि कृतार्थो न भवति किन्तु स च वेदार्थं श्रुत्वैव स वेदार्थो भवतीत्यर्थः। विभागशो वेदार्थव्याख्यानमभिनयति। द्वन्द्वमिति॥ ज्ञानकाण्डं साक्षादद्वैतवस्तुपरम्। कर्मकाण्डं तु साध्यसाधनसम्बन्धबोधनद्वारा परम्परया तस्मिन् पर्यवसितम्। सर्वे वेदा यत्पदमामनन्तीति श्रुतेरित्यर्थः। आत्मविदो वेदार्थविस्वमुक्त व्यनक्ति। न हीति॥ तदेव हि वेदार्थमस्य यत्प्रत्यागात्मस्वरूपमतस्तस्याज्ञानविदेव यथाश्रौतम तत्त्वज्ञाने प्रभवतीत्यर्थः। उक्तेऽर्थे श्रुतिमुदाहरति। न हीति॥ क्रियाशब्देन प्रमाणमुच्यते। तत्फलं तत्त्वज्ञानमग्निहोत्रादिक्रियायाश्च पारम्पर्यात् तस्मिन् पर्यवसानादित्यर्थः॥२०॥

याभिर्युक्तिभिर्यथायथं प्रकरणे द्वैतस्य मिथ्यात्वं कथ्यते तासां

न निरोधो नचोत्पत्तिर्न बद्धो न च सा-

द्वितीयमसि । यत्र त्वस्य सर्व्वमात्मैवाभूदित्यादिषु विचक्षणैर्निपुणतरवस्तुदर्शिभिरेभिः पण्डितैरित्यर्थः । तमःस्वभ्रनिभं दृष्टं वर्षबुद्बुदसन्निभम् ॥ नाशप्रायं सुखाद्धीनं नाशोत्तरमभावगमिति हि व्यासस्मृतेः ॥३१॥

प्रकरणार्थोपसंहारार्थोऽयं श्लोकः । यदा वितथं द्वैतमात्मैवैकः परमार्थतः सन् तदेदं निष्पन्नं भवति सर्व्वोऽयं लौकिको वैदिकश्च व्यवहारोऽविद्याविषय एवेति । तदा न निरोधः । निरोधनं निरोधः प्रलय उत्पत्तिर्जननं बद्धः संसारी जीवः साधकः साधनान्मोक्षस्य

---

तात्पर्य्यार्थमाह । यदेतद्द्वैतस्येति ॥ असत्त्वे सत्त्ववत् प्रतिभानं कथमित्याशङ्क्य श्लोकाक्षराणि व्याचष्टे । स्वप्नेति । प्रसारितानि तत्र तत्र प्रकटतां प्रापितानि । पण्यानि क्रयविक्रयद्रव्याणि येषामापणेषु हट्टेषु ते प्रसारितपण्यापणास्तैश्च गृहाद्यैः प्रासादैश्च स्त्रीपुञ्जनपदैश्चैतेषां व्यवहाराकीर्णमिति योजना ॥ दृष्टान्तद्वयमनूद्य दार्ष्टान्तिकमाह । यथा चेति ॥ गन्धर्व्वनगराकारं पदार्थैः । नेह नानास्ति किञ्चनेति वेदान्ताः । द्वैतस्य वस्तुतोऽसत्त्वे स्मृतिमपि दर्शयति । तम इति ॥ तमसि मन्दान्धकारे रज्ज्वामधिष्ठाने भुजङ्गमिति यथाज्ञानाद्भाति तथेदं तत्त्वाविवेकिभिर्विश्वं दृष्टं बहुलतोय बुद्बुदमात्रस्थितं नाशप्रायं प्रत्यक्षकालेऽपि क्षणभङ्गुरत्वात् । न च द्वैतं कदाचिदपि सुखकरमुपलभ्यते दुःखाक्रान्तं तु दृश्यते । तच्च नाशवत्तरम् । नाशादूर्द्ध्वमभावमेवापगच्छति न तर्हि तस्य परमार्थत्वं प्रमाणाभावादित्यर्थः ॥ ३१ ॥

निर्विकल्पो ह्ययं दृष्टः प्रपञ्चोपशमोऽद्वयः ॥३५॥
तस्मादेवं विदित्वैनमद्वैते योजयेत्स्मृतिम् ।

---

तदेतत् सम्यग्दर्शनं स्तूयते । विगतरागभयद्वेषक्रोधादिसर्वदोषैः सर्वदा मुनिभिर्मननशीलैर्विवेकिभिर्वेदपारगैरवगतवेदार्थतत्त्वैर्ज्ञानिभिर्निर्विकल्पः सर्वविकल्पशून्योऽयमात्मा दृष्ट उपलब्धो वेदान्तार्थतत्परैः । प्रपञ्चोपशमः प्रपञ्चो द्वैतभेदविस्तारस्तस्योपशमोऽभावो यस्मिन् स आत्मा प्रपञ्चोपशम अत एवाद्वयः । विगतदोषैरेव पण्डितैर्वेदान्तार्थतत्परैः संन्यासिभिः परमात्मा द्रष्टुं शक्यो नान्यैः रागादिकलुषितचेतोभिः स्वपक्षपातदर्शनैस्तार्किकादिभिरित्यभिप्रायः ॥३५॥

---

तस्यार्थमाह । तथेति ॥ स्वयंप्रकाशस्यात्मनोऽन्यायत्तत्वं दुर्वचनत्वाद्वैधर्म्योदाहरणं तु प्रातीतिकं पृथक्त्वमधिकृत्याभिहितम् ॥ नाद्वयशब्दार्थं व्याकरोति । अत इति ॥ द्वैतस्य प्रागुक्तन्यायेनासत्त्वात्तदन्योन्यं वा परेणात्मना वा परमार्थतः पृथग्भूतं भेदमर्हति । अतो दुर्निरूपत्वान्न किञ्चित् द्वैतं नामास्तीति ब्रह्मविदां मतमित्यर्थः ॥ इदं हि द्वैतं भयहेतुस्तदस्पृष्टं पुनरद्वैतमभयमेवेत्युपगच्छति अत इति ॥३४॥

किमिति यथोक्तमद्वैतं सर्वेषां न प्रतीतिगोचरत्वमाचरतीत्याशङ्क्याह । विगतेति ॥ रागादिप्रतिबन्धविधुराणामेव यथोक्तमद्वैतदर्शनं न सर्वेषामित्यर्थः श्लोकस्य तात्पर्यमाह । तदेतदिति ॥ स्तुतिश्च तदुपायप्रवृत्त्यामुपकरोतीति शेषः । आदिपदेन सम्यग्दर्शनप्रतिबन्धका सर्वे दोषाः सङ्गृह्यन्ते ॥ रागादिविमोको यदा कदाचिदनधिकारिणामपि सम्भवत्यतो विशिनष्टि । सर्वदेति ॥ सदा रागादिव्यावृत्तौ विवेकं हेतुं प्रपञ्चयति । मुनिभिरिति ॥ विवेके च पदर्शके-

निस्तुतिर्निर्नमस्कारो निःस्वधाकार एव च।
चलाचलनिकेतश्च यतिर्यादृच्छिको भवेत्॥३७॥

---

कया चर्यया लोकमाचरेदित्याह। स्तुतिनमस्कारादिसर्वकर्मविवर्जितस्त्यक्तसर्वबाह्यैषणः प्रतिपन्नपरमहंसपारिव्राज्य इत्यभिप्रायः। एतं वै तमात्मानं विदित्वेत्यादिश्रुतेः। तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणा इत्यादिस्मृतेश्च। चलं शरीरं प्रतिक्षणमन्यथाभावात्। अचलमात्मतत्त्वम्। यदा कदाचिद्भोजनादिव्यवहारनिमित्तमाकाशवदचलं स्वरूपमात्मतत्त्वमात्मनो निकेतनमाश्रयमात्मस्थितिं विस्मृत्याहमिति मन्यते यदा तदा चलो देहो निकेतो यस्य सोऽयमेवं चलाचलनिकेतो विद्वान् न पुन-

---

व्यवहारातीतस्य विदुषो जडवदाचरणं कीदृशमित्यपेक्षायां चतुर्थं पादमनूद्य तात्पर्यमाह। जडवदिति॥३६॥

एवं विधोऽहमित्यात्मानं विद्याभिजनादिभिरप्रख्यापयन् जडवदेव विद्वान् लोकमाचरेदिति योजना। ननु परापरदेवयोः स्तुतिपूर्वकं प्रणामस्य श्राद्धादिक्रियायाश्च कर्त्तव्यतया प्रतिबन्धात्कथं विदुषो जडवदाचरणमिति तत्राह। निस्तुतिरिति॥ तथापि जीवतां क्वापि स्थानव्यतादाश्रयमुद्दिश्य प्रवृत्तेरावश्यकत्वात्कुतो जडत्वमित्याशङ्क्याह। चलेति॥ चलश्चाचलश्च चलाचले ते निकेतो यस्याश्रयः स तथेति यावत्। तथापि कौपीनाच्छादनाशनपानादिदेहस्थितिप्रयोजकापेक्षया प्रवृत्तिध्रौव्यान्न विदुषो जडतेत्याशङ्क्याह। यतिरिति॥ आकाङ्क्षापूर्वकं पूर्वार्धाक्षराणि व्याचष्टे। कयेत्यादिना॥ वर्णाश्रमाभिमानवतस्तत्कर्मसु वर्त्तमानस्य कथमिदं विशेषणमित्याशङ्क्याह।

तत्त्वमाध्यात्मिकं दृष्ट्वा तत्त्वं दृष्ट्वा तु बाह्यतः।

---

वीच्युन्निधयाश्रयः । न च याहृच्छिको भवेत् । यदृच्छा-प्राप्तकौपीनाच्छादनग्रासमात्रदेहस्थितिरित्यर्थः॥ ३७॥

बाह्यं पृथिव्यादि तत्त्वमाध्यात्मिकञ्च देहादिलक्षणं रज्जुसर्पादिवत् स्वप्नमायादिवच्चासत्। वाचारम्भणं विकारो नामधेयमित्यादिश्रुतेः आत्मा च सबाह्यः इतुक्त आकाशवत्सर्वगत सूक्ष्मोऽचलो निर्गुणो निष्कलो निष्क्रियस्तत्सत्यं स आत्मा तत्त्वमसीति श्रुतेः। इत्येवं तत्त्व-

---

त्यक्तेति । पारमहंस्यं पारिव्राज्यं प्रतिपत्तव्यमप्रामाणिकत्वादिति चेत् मैवं श्रुतिस्मृतिसिद्धत्वादित्याह । एवमिति । विदित्वेत्यापातिकवेदनं व्युत्थानहेतुत्वेनोच्यते । तस्मिन्नेव परस्मिन् वस्तुनि विषयान्तरेभ्यो व्यावृत्तां बुद्धिं धारयेत् तथा । तदेव परं वस्त्वात्मा निरूपचरितं स्वरूपं येषां ते तथोच्यन्ते । तस्मिन्नेव परिनिष्ठितात्मनि निष्ठा निश्चयेन स्थितिर्येषां ते तथेत्याह । तन्निष्ठा इति । तदेवात्मभूतं परं वस्तु परमयनं परा गतिर्येषां ते तथेत्याह । तत्परायणा इति । आदिशब्देन सर्वकर्माणि संन्यस्यादिवाक्यं गृह्यते । कदा पुनरसौ देहो विदुषो निकेतो भवति तत्राह । यदेति । चाविशब्दिते हि कालविशेषे विशब्दितं व्यवहारं निमित्तीकृत्यात्मस्थितिं वृत्तिविशेषवतीं विस्मृत्याहारमकरयरदभो यदा विद्वानवतिष्ठते तदेति योजना । स्वभावस्थधनमात्मस्वरूपमेवास्य निकेतनम् । चलं पुनः शरीरमुपदर्शितविस्मरणद्वारेणेति निगमयति । सोऽयमिति । अविदुषो विशेषार्थं व्यावर्तयति कीर्तयति । न पुनरिति ॥ चतुर्थपादार्थमाह । न चेति ॥३७॥

अहमेव परमब्रह्म न मत्तोऽन्यदस्ति किञ्चिदिति स्मृतिमन्तिकरणमपि न कालविशेषनियत किन्तु नैरन्तर्येण कर्तव्यमित्याह । तत्त्वमिति । आध्यात्मिकं शरीरादिकल्पितं तत्त्वमधिष्ठानमात्रं दृष्ट्वा बाह्यतो

उपासनाश्रितो धर्मो जाते ब्रह्मणि वर्त्तते।

ओंकारनिर्णये उक्तः प्रपञ्चोपशमः शिवोऽद्वैत आत्मेति प्रतिज्ञामात्रेण। ज्ञाते द्वैतं न विद्यत इति च। तत्र द्वैताभावस्तु वैतथ्यप्रकरणेन स्वप्नमायागन्धर्व्वनगरादिदृष्टान्तैर्दृश्यत्वाद्यन्तवत्त्वादिहेतुभिस्तर्केण च प्रतिपादितः। अद्वैतं किमागममात्रेण प्रतिपत्तव्यमाहोस्वित्तर्केणापीत्यत आह। शक्यते तर्केणापि ज्ञातुम्। तत्कथमित्यद्वैतप्रकरणमारभ्यते। उपास्योपासनादिभेदजातं सर्व्वं वितथं केवलश्चात्माऽद्वयः परमार्थ इति स्थितमतीतप्रकरणे। यत उपासनाश्रित उपासनामात्मनो मोक्षसाधन-

तर्कावष्टम्भेन द्वैतवैतथ्यनिरूपणं परिसमाप्याद्वैतं परमार्थिकमपि तर्कतः सम्भावयितुं प्रकरणान्तरं प्रारिप्सुरुपास्योपासकभेददृष्टिं तावदपवदति। उपासनेति॥ देहस्य धारणाद्धर्मो जीवो भूतसङ्घाताकारेण जाते ब्रह्मणि तदभिमानित्वेन वर्त्तते। स प्रागुत्पत्तेरज सर्व्वमिदमेव कालानवच्छिन्नं वस्तु मन्यते। स पुनरुपासनां पुरुषार्थसाधनत्वेनाश्रितस्तदेव ब्रह्म प्रतिपत्स्ये शरीरपातादूर्द्धमिति। यतो मिथ्याज्ञानवानवतिष्ठते तेनासौ कृपणोऽल्पको ब्रह्मविद्भिः ख्यातश्चिन्तित इत्यर्थः॥ प्रकरणान्तरमवतारयन् वृत्तमनुद्रवति। ओङ्कारेति॥ तस्य हि निर्णये प्रथमे प्रकरणे प्रपञ्चोपशमः शिवोऽद्वैत इति विशेषणैरात्मा प्रतिज्ञामात्रेणाद्वितीयो व्याख्यात इत्यर्थः। द्वितीयप्रकरणार्थं सङ्क्षिप्यानुवदति। ज्ञात इति॥ तत्रैवाद्ये प्रकरणे ज्ञाते द्वैतं न विद्यत इत्यत्र प्रतिज्ञामात्रेण द्वैताभाव उक्तः। स तु द्वितीयेन प्रकरणेन हेतुदृष्टान्तात्मकेन तर्केण च प्रतिपादितो नात्र प्रतिपादयितव्यमवशिष्टमस्तीत्यर्थः। तृतीयं प्रकरणमाकाङ्क्षापूर्व्वकमवतारयति।

अतो वक्ष्याम्यकार्पण्यमजाति समताङ्गतम्।

सबाह्याभ्यन्तरमजमात्मानं प्रतिपत्तुमशक्नुवन्नविद्यया दीनमात्मानं मन्यमानो जातोऽहं जाते ब्रह्मणि वर्त्ते तदुपासनामाश्रितः सन् ब्रह्म प्रतिपत्स्ये इत्येवं प्रतिपन्नः कृपणो भवति यस्मादतो वक्ष्याम्यकार्पण्यमकृपणभावमजं ब्रह्म॥ तद्धि कार्पण्यास्पदं यत्रान्योऽन्यत् पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पं मर्त्यं वाचारम्भणं विकारो नामधेयमित्यादिश्रुतिभ्यः। तद्विपरीतं सबाह्याभ्यन्तरमजमकार्पण्यं भूमाख्यं ब्रह्म।। यत्प्राप्याविद्याकृतसर्वकार्पण्यनिवृत्तिस्तदकार्पण्यं वक्ष्यामीत्यर्थः। तदजाति अविद्यमाना जातिरस्य। समताङ्गतं सर्वसाम्यं गतम्। कस्मात्। अवयववैषम्याभावात्। यद्धि सावयवं वस्तु तदवयववैषम्यं जायत इत्युच्यते। इदन्तु निरवयवत्वात् समताङ्गतमिति न कैश्चिदवयवैः स्फुटत्यतोऽजात्य

---

कृतत्वादिति सम्बन्धः। तत्प्रकाराणां पाद्मायामुपास्य ब्रह्मत्वनिषेधदर्शनाच्चोपासकनिन्दा युक्तेत्याह। यद्वाचेति॥ अनभ्युदितमनभिप्रकाशितमभ्युद्यतेऽभिप्रकाश्यते उपास्यते वाचाविषयीकुर्व्वन्तीत्यर्थः। आदिशब्देन यन्मनसेत्यादि गृह्यते॥१॥

भेददर्शिनमुपासकमद्वैतविरोधिनं निन्दित्वा सम्प्रत्यद्वैतप्रतिज्ञां करोति। अत इति॥ जातिर्जन्म तद्रहितमजाति॥ तत्र हेतुमाह। समतामिति॥ जन्मराहित्यं साधयति। तथेति॥ अतः शब्दार्थमाह। सबाह्येति॥ प्रतिज्ञाभागं विभजते। अकृपणेति॥ तदेव व्यतिरेकमुखेन स्फोरयति। तद्धीति॥ दर्शनादि विशेषव्यवहारगोचरीभूतं

**यथा न जायते किञ्चिज्जायमानं समं ततः॥२॥**
**आत्मा ह्याकाशवज्जीवैर्घटाकाशैरिवोदितः।**

---

कार्पण्यम्। समन्ततः समन्ताद्यथा न जायते किञ्चिदल्पमपि न स्फुटति रज्जुसर्पवदविद्याकृतदृष्ट्या जायमानं येन प्रकारेण न जायते सर्वतोऽजमेव ब्रह्म भवति तथा तं प्रकारं शृण्वित्यर्थः॥२॥

अजाति ब्रह्माकार्पण्यं वक्ष्यामीति प्रतिज्ञातं तत्सिद्ध्यर्थं हेतु दृष्टान्तं वक्ष्यामीत्याह। आत्मा परो हि

---

कार्यजातं परिच्छिन्नं कार्पण्यमुच्यते। तदेव कृपणत्वमनर्थमित्यर्थः। तच्च मिथ्याभूतमित्यत्र प्रमाणमाह। वाचारम्भणमिति। कार्पण्यमुक्त्वा तदभावरूपमकार्पण्यं प्रकटयति। तद्विपरीतमिति। ब्रह्मात्मेति यावत्। द्वितीयपादं व्याचष्टे। तदजातीत्यादिना। सर्वात्मना साम्यं निर्विशेषत्वं गममित्यत्र हेतुं पृच्छति। कस्मादिति। निर्विशेषत्वे हेतुमाह। अवयवेति। हेतुमेव प्रकटयन् व्यतिरेकमुखेनाजत्वं प्रपञ्चयति। यथेत्यादिना। समन्तत इति पूर्वस्य भङ्गीकरणम्॥ द्वितीयार्द्धं व्याचष्टे। यथेत्यादिना। यथा रज्ज्वां सर्पो भ्रान्त्या जायते तथा सर्वं भ्रान्तिदृष्ट्या जायमानत्वेन भासमानमपि यथा येन प्रकारेण वस्तुतो न जायते तथा किन्तु सर्वतो देशतः कालतो वस्तुतश्च पूर्वं स्फुटमजमेव वस्तु भवति तथा तं प्रकारमिति सम्बन्धः॥२॥

प्रतिज्ञावाक्ये ब्रह्मशब्देन परमात्मना गृहीत स कीदृगित्यपेक्षायामाह। आत्मा ह्याकाशवदिति। [illegible] जीवैरिति॥ यथा घटाकाशो विभुत्वादिधर्मः खगताकाशभेदवान् भवति तथा परमात्मना विशेषाभावात्। यथा च महाकाशो घटा

घटादिवच्च सङ्घातैर्जातावेतन्निदर्शनम् ॥३॥

यस्मादाकाशवत् सूक्ष्मो निरवयवः सर्व्वगत आकाशवदुक्तो जीवैः क्षेत्रज्ञैर्घटाकाशैरिव घटाकाशतुल्य उदित उक्तः। स एवाकाशसमः पर आत्मा। अथवा घटाकाशैर्यथोदित उत्पन्नस्तथा परो जीवात्मभिरुत्पन्नो जीवात्मनां परस्मादात्मन उत्पत्तिर्या श्रूयते वेदान्तेषु सा महाकाशाद्घटाकाशोत्पत्तिसमानं परमार्थत इत्यभिप्रायः- तस्मादेवाकाशाद्घटादयः सङ्घाता यथोत्पद्यन्ते एवमाकाशस्थानीयात्परमात्मनः पृथिव्यादिभूतसङ्घाता आध्यात्मिकाश्च कार्य्यकारणलक्षणा रज्जुसर्पवद्विकल्पिता जायन्ते।

काशाकारेण प्रतीयते तथा परमात्मना नानाविधजीवाकारेण प्रतीतिगोचरो भवतीत्यर्थः। कथं सङ्घातानां परस्मादुत्पत्तिरित्याशङ्क्याह। घटादिवदिति॥ यथा मृदः सकाशाद्घटादयो जायन्ते तथा परमात्मैव पृथिव्यादिसङ्घाताकारेण जायत इत्यर्थः। यदाऽऽत्मनो जीवादीनामुत्पत्तिरिष्टा तदा तस्यामुत्पत्तौ दृष्टान्तवचनमेतदित्याह। जाताविति॥ श्लोकस्य वृत्तानुवादपूर्वकं तात्पर्य्यमाह। जातीत्यादिना प्रथमपादस्याक्षरार्थमाह। आत्मेत्यादिना॥ विमतस्सगततात्त्विकभेदशून्यः सूक्ष्मत्वान्निरवयवत्वाद्विभुत्वादाकाशवत्। न च परमाण्वादौ सूक्ष्मत्वादेर्व्यभिचारः। तस्यैवाक्षमतत्वात्। क्वचिदपि तात्त्विकभेदसम्प्रतिपत्तेरित्यर्थः॥ जीवैरित्यादिना व्याचष्टे। जीवैरिति॥ जीवाकारेण परमात्मैवोक्तः। क्षेत्रज्ञं चापि मां विद्धीति स्मृतेरित्यर्थः। उदितशब्दस्योक्तार्थं नहि परस्यैवात्मनः सङ्घातरूपेणोक्तत्वे सम्पन्नत्वं प्रमाणमित्याशङ्क्याह। अथवेति॥ तर्हि नात्मश्रुतेरिति न्यायविरोधः स्यादित्याशङ्क्याह। जीवात्मानमिति॥ तृतीयपादं व्याचष्टे।

घटादिषु प्रलीनेषु घटाकाशादयो यथा।
आकाशे सम्प्रलीयन्ते तद्वज्जीवा इहात्मनि ॥४॥
यथैकस्मिन् घटाकाशे रजोधूमादिभिर्युते।

---

अत उच्यते घटादिवच्च सङ्घातैरुदितः इति। यदा मन्दबुद्धिप्रतिपिपादयिषया श्रुत्याऽऽत्मनो जातिरुच्यते जीवादीनां तदा जातावुपगम्यमानायामेतन्निदर्शनं दृष्टान्तो यथोदिताकाशवदित्यादिः ॥३॥

यथा घटाद्युत्पत्त्या घटाकाशाद्युत्पत्तिः। यथा च घटादिप्रलये घटाकाशादिप्रलयस्तद्वद्देहादिसङ्घातोत्पत्त्या जीवोत्पत्तिस्तत्प्रलये च जीवानामिहात्मनि प्रलयो न स्वत इत्यर्थः ॥४॥

सर्वदेहेष्वात्मैकत्वे एकस्मिन् जननमरणसुखादिमत्यात्मनि सर्वात्मनां तत्सम्बन्धः क्रियाफलसाङ्कर्यं स्या

---

तस्मादेवेति। उक्तेऽर्थे वाक्यमवतारयति। अत इति। आकाशस्यावकाशप्रदाने च घटाद्युत्पत्तौ कारणत्वं निर्विकारस्यैव दृष्टमिति द्रष्टव्यम्। जातावित्यादेरर्थमाह। यदेति ॥३॥

अद्वैतस्य जीवोत्पत्तिश्रुतिविरोधं परिहृत्य तस्यैव जीवप्रलयश्रुत्या विरोधमाशङ्क्य परिहरति। घटादिष्विति। औपाधिकौ जीवानामुत्पत्तिप्रलयौ न स्वाभाविकौ। तथा चोत्पत्तिश्रुत्या विरोधाभाववदद्वैतस्य प्रलयश्रुत्यापि न विरोधोऽस्तीति श्लोकाक्षरव्याख्यानेन प्रकटयति। यथेत्यादिना ॥४॥

इदानीमद्वैतस्य व्यवस्थानुपपत्त्या विरोधमाशङ्क्य परिहरति। यथैकस्मिन्निति। उक्तदृष्टान्तवशादेकस्मिन् जीवे सुखादियुक्ते सर्व-

न सर्वे सम्प्रयुज्यन्ते तद्वज्जीवाः सुखादिभिः॥५॥

---

स्यादिति य आशङ्कितिनस्तान् प्रतीदमुच्यते। यथैकस्मिन् घटाकाशे रजोधूमादिभिर्युते संयुक्ते न सर्वे घटाकाशादयस्तद्रजोधूमादिभिः संयुज्यन्ते तद्वज्जीवाः सुखादिभिः। नन्वेक एवात्मा। बाढम् ननु श्रुतं त्वया आकाशवत्सर्वसङ्घातेष्वेक एवात्मेति यदि एक एवात्मा तर्हि सर्वत्र सुखी दुःखी च स्यात्। न चेदं साङ्ख्यचोद्यं सम्भवति। न हि साङ्ख्य आत्मनः सुखदुःखादीनाम्। न चोपलब्धिस्वरूपस्यात्मनो भेदकल्पनायां प्रमाणमस्ति। भेदाभावे प्रधानस्य परार्थानुपपत्तिरिति चेत्। न। प्रधानकृतस्यार्थस्यात्मन्यसमवायात्। यदि हि प्रधानकृतो बन्धो

---

परे जीवास्तेनैव सुखादिभिर्न युज्यन्ते चौपाधिकभेदादित्याह। तद्वदिति। श्लोकव्यावर्त्त्यामाशङ्कां दर्शयति। सर्वदेहेष्विति। एकात्मत्वे कर्त्तर्येकस्मिन् कर्त्तारः सर्वे भोक्तरि चैकस्मिन् भोक्तारः सर्वे भवेयुरित्यव्यवस्थान्तरमाह। क्रियेति। व्यवस्थानुपपत्त्याद्वैतमेष्टव्यमिति यदुक्तं प्रत्युत्तरत्वेन श्लोकमवतारयति। तान् प्रतीति। किमिदमैकात्म्ये साधर्म्यं किमेकस्मिन्जीवे व्यवस्थितेन सुखादिना जीवान्तराणां तद्वत्त्वं स्यादित्युच्यते किंवा सर्वोपाधिष्वात्मैकत्वात्तस्य स्वरूपेण सर्वसुखादिमत्त्वं स्यादित्यापाद्यते तत्राद्यं प्रत्याह। तद्वदिति। आत्मनः सर्वत्रैकत्वात्तस्य स्वरूपेण सर्वसुखादिमत्त्वमिति द्वितीयं पक्षं विपक्ष्यमाशङ्कते। नन्विति। सर्वत्रात्मैकत्वमुक्तमङ्गीकरोति। बाढमिति। तदेकत्वमुपपत्तिशून्यं कथमङ्गीकृतमित्याशङ्क्याह। ननु नेति। यदि सर्वत्रैकत्वं नियतमिष्यते तर्हि तत्र तत्र सुखित्वं दुःखित्वं च तस्य

मोक्षोऽर्थः पुरुषेषु भेदेन समवैति ततः प्रधानस्य पारार्थ्य
मात्मैकत्वेनोपपद्यत इति युक्ता पुरुषभेदकल्पना न च ।
सांख्यैर्बन्धो मोक्षो वार्थः पुरुषसमवेतोऽभ्युपगम्यते ।
निर्विशेषाश्च चेतनमात्रा आत्मानोऽभ्युपगम्यन्ते । अतः
पुरुषसत्तामात्रप्रयुक्तमेव प्रधानस्य पारार्थ्यं सिद्धं न तु
पुरुषभेदप्रयुक्तमिति । अतः पुरुषभेदकल्पनायां प्रधा
नस्य पारार्थ्यं हेतुः । न चान्यत्पुरुषभेदकल्पनाया
प्रमाणमस्ति सांख्यानाम् । परसत्तामात्रमेव चैतन्निमि
त्तीकृत्य स्वयं बध्यते मुच्यते च प्रधानम् । परश्चोपलब्धि
मात्रसत्तास्वरूपेण प्रधानप्रवृत्तौ हेतुर्न केनचिद्विशेषे
णेति । केवलमूढतयैव पुरुषभेदकल्पना वेदार्थपरित्यागश्च ।

---

चैकस्य प्राप्तमिति व्यवस्थासिद्धिरिति द्योतयति । यद्येक इति ।
आत्मस्वरूपस्य सर्वत्रैकत्वेऽपि कल्पितभेदाद्व्यवस्थासिद्धिरित्यभिप्रेत्य
किमिदं सांख्यस्य चोद्यं किं वा वैशेषिकादेरिति विकल्प्याद्यं प्रत्याह ।
न चेदमिति । किञ्चात्मानं दूषयता सांख्येन तद्भेदोऽभ्युपगम्यते ।
स च नाभ्युपगन्तुं शक्यते तन्मानाभावादित्याह । न चेति । प्रधानं हि
कस्यचिद्भोगमपवर्गं च कस्यचिदादधत् पुरुषभेदमिच्छति । तच्च पुरुष
भेदाभावेनोपपद्यते । तेनार्थापत्त्या पुरुषभेदं सिद्ध्यतीति शङ्कते ।
भेदेति । अर्थापत्तेरनुदयं वदन्नुत्तरमाह । नेत्यादिना । सङ्क्षिप्तमेवोक्तं
विवृणोति । यदि हीति । प्रधानस्य पारार्थ्यं सामर्थ्यादेव पुरुषे कश्चि-
दतिशयो भविष्यतीत्याशङ्क्यापसिद्धान्तप्रसङ्गान्मैवमित्याह । निर्विशेषा
इति । किञ्च प्रधानस्य पारार्थ्यं परं शेषित्वमपेक्षते । न तस्मिन्
भेदमपि काङ्क्षते । अतोऽन्यथाप्युपपत्तिरित्याह । अत इति । जन्ममर-
णाद्यव्यवस्थानुपपत्त्या पुरुषभेदकल्पनमपि न युक्तं व्यधिकरणत्वादिति

ये त्वाङ्वैशेषिकादय इच्छादय आत्मसमवायिन इति ।
तदप्यसत् । स्मृतिहेतूना संस्काराणामप्रदेशवत्त्वादात्मन्य-
समवायात् । आत्ममनःसंयोगाच्च स्मृत्युत्पत्तौ स्मृतिनि-
यमानुपपत्तिः । युगपद्वा सर्वस्मृत्युत्पत्तिप्रसङ्गः । न च
भिन्नजातीयाना स्पर्शादिहीनानात्मना मन आदिभि-
सम्बन्धो युक्तः । न च द्रव्याद्रूपादयो गुणाः कर्मसामा-
न्यविशेषसमवाया भिन्ना सन्ति । परेषा यदि ह्यत्यन्त-
भिन्ना एव द्रव्यात् स्युरिच्छादयश्चात्मनस्तथा सति द्रव्येण
तेषा सम्बन्धानुपपत्तिः । अयुतसिद्धाना समवायलक्षणः
सम्बन्धो न विरुध्यत इति चेत् । न । इच्छादिभ्योऽनि-

---

त्यत्वाह । न चेति ॥ न केवलं प्रमाणशून्या पुरुषभेदकल्पना किन्तु प्रयो-
जनशून्या चेत्याह । परेति ॥ ननु न पुरुषसत्तामात्रं निमित्तीकृत्य
प्रधानं प्रवर्त्तते । किन्त्वीश्वराधिष्ठितमिति सेश्वरादिमतमाशङ्क्य
तस्यापि पुरुषत्वाविशेषादुपलब्धिमात्रत्वमभ्युपेत्याह । परेति ॥ वेदार्थो
वेदप्रतिपाद्यमद्वैतं द्वितीयमुत्थापयति । ये त्विति ॥ बुद्धिसुखदुःखेच्छा
द्वेषप्रयत्नधर्माधर्मसंस्कारा नव विशेषगुणाः । ते च प्रत्येकमात्मसु व्यव
स्थया समवेताः सन्तीति मन्यन्ते । तथा व्यवस्थानुपपत्त्या प्रतिदेहमात्मभेद
सिद्धिरित्यर्थः । किं बुद्ध्यादयो रूपादिवदात्मव्यापिनः किंवा संयोगा-
दिवदेकदेशवर्त्तिनः । नाद्यः । ज्ञानादिगुणानामात्मव्यापिनामात्मव-
यवक्तः सर्वत्रिकपर्यायेण ज्ञानवादिव्यवहारजनकत्वप्रसङ्गादित्याह ।
तदप्यसदिति ॥ द्वितीये त्वेकदेशः सत्योऽसत्यो वा । प्रथमे घटादिवदा
त्मनः सावयवत्वात् कार्यत्वादिप्रसङ्गः । द्वितीये कल्पितैकदेशानामेव
ज्ञानादिगुणवत्त्वमात्मनस्तु न तद्वत्त्वं सिद्ध्यतीत्याह । स्मृतीति ॥

त्येव आत्मनो नित्यस्य पूर्वसिद्धत्वान्नायुतसिद्धत्वोपपत्तिः । आत्मना युतसिद्धत्वे चेच्छादीनामात्मगतमहत्त्ववदनित्यत्वप्रसङ्गः । स चानिष्टः । आत्मनोऽनिर्मोक्षप्रसङ्गात् । समवायस्य च द्रव्यादन्यत्वे सति दृष्टेव सम्बन्धान्तरं वाच्यम् । यथा द्रव्यगुणयोः समवायो नित्यसम्बन्ध एवेति न वाच्यमिति चेत् । तेषां च समवायसम्बन्धवतां नित्यसम्बन्धप्रसङ्गात् पृथक्त्वानुपपत्तिः । अत्यन्तपृथक्त्वे च द्रव्यादीनां स्पर्शवदस्पर्शद्रव्ययोरिव षष्ठ्यर्थानुपपत्तिः । इच्छाद्युपजनापायवद्गुणवत्त्वे चात्मनोऽनित्यत्वप्रसङ्गः । देहफलादिवत्सावयवत्वं विक्रियावत्त्वञ्च देहादिवदेवेति दोषाववरि-

---

युतिश्चेतन सत्कारा आत्मनात्स्यात्तदा यद्दर्शनितरेषामनुपलब्धार्थं तथात्मनि समवायाभावात् परस्य सिद्धान्तासिद्धिरिति शेषः । किञ्चात्मन संयोगासमवायिकारणात् ज्ञानानामुत्पत्तिरिष्टा । तथा च सति पूर्वक्षणसमये स्मृतिर्न भवत्येवेति नियमो नोपपद्यते । अदृष्टकारणसंयोगेनैव स्मृत्युपपत्तिसम्भवादित्याह । आत्मेति । किञ्चात्ममनसोः संयोगादेकस्मादेकस्याः स्मृतेः समुत्पत्तिसमये स्मृत्यन्तराण्यपि समुत्पद्येरन् । असमवायिकारणस्य तुल्यत्वात् । न च समुदयस्मिन्निमित्तकारणयौगपद्यादयुगपदनुत्पत्तिः । तेषामुद्बोधस्य चात्मनि विप्रतिपन्नत्वेन स्मृतिसम्भवासम्भवविभागासम्भवादित्यभिप्रत्याह । युगपदिति । किञ्च समानजातीयानां स्पर्शादिमतां च परस्परं सम्बन्धो दृष्टः । यथा मेषाणां मेषाणां रज्जुघटादीनां च तदुभयाभावादात्मना मनआदिभिः सम्बन्धासिद्धेर्नीतादसमवायिकारणाद् ज्ञानादिगुणोत्पत्तिसिद्धसीत्याह । नचेति । गुणादीनां चाजात्यस्य स्पर्शादिमत्त्वस्य चाभावेऽपि द्रव्येण सम्बन्धवदात्मनो मनआदिभिः सम्बन्धः सिद्ध्यति

रूपकार्यसमाख्याश्च भिद्यन्ते तत्र तत्र वै।
आकाशस्य न भेदोऽस्ति तद्वज्जीवेषु निर्णयः॥६॥

घटाकाशकरकाकाश इत्याद्याख्यास्तत्कृताश्च भिन्ना दृश्यन्ते तत्र तत्र वै व्यवहारविषय इत्यर्थः। सर्वोऽयमाकाशरूपादिभेदकृतो व्यवहारो न परमार्थ एव। परमार्थतस्त्वाकाशस्य भेदोऽस्ति। न चाकाशभेदनिमित्तो व्यवहारोऽस्त्यन्तरेण परोपाधिकृतं द्वारं यथैतत्। तद्वद्देहोपाधिभेदकृतेषु जीवेषु घटाकाशस्थानीयेष्वात्मसु निरूपणात्कृतो बुद्धिभिर्निर्णयो निश्चय इत्यर्थः॥६॥

अद्वैतस्य श्रुत्यादिविरोधाभावेऽप्यनुमानविरोधमाशङ्क्यानैकान्तिकत्वेनानुमानं दूषयति। रूपेति। श्लोकव्यावर्त्यामाशङ्कामाह। कथमिति। यथात्मभेदवादे तद्भेदनिमित्तो रूपादिव्यवहारस्तथैकस्मिन्नेवात्मन्यात्मैक्यपक्षे रूपादिव्यवहारो नोपपद्यते। तथा च विमता जीवात्मानस्ततो भिद्यन्ते भिन्ननामकत्वात्। भिन्नकार्यकरत्वाद्भिन्नरूपत्वाद्घटपटादिवदित्यनुमानविरुद्धमद्वैतमित्यर्थः। घटाकाशादिष्वनैकान्तिकत्वं विवक्षितत्वात्। श्लोकाक्षराणि व्युत्पादयति। उच्यत इत्यादिना। यथकादिसमाख्याश्च भिद्यन्त इति सम्बन्धः। तत्कृताश्चेत्यत्र तच्छब्देन विकल्पितो घटाकाशभेदोऽवगृह्यते। चकारोऽवधारणार्थः। घटाकाशादीनामुक्तभेदवत्त्वेऽपि विपक्षत्वाभावे कथमनैकान्तिकत्वमित्याशङ्क्याह। सर्वोऽयमिति। उक्तेऽर्थे तृतीयं पादं विभजते। न चेति। परोपाधिशब्देन घटकरकादिरुच्यते। दृष्टान्तमनूद्य दार्ष्टान्तिकं व्याचष्टे। तद्वदित्यादिना॥६॥

नाकाशस्य घटाकाशो विकारावयवौ यथा ।
नैवात्मनः सदा जीवो विकारावयवौ तथा ॥ ७ ॥

---

ननु तत्र परमार्थकृत एव घटाकाशादिषु रूपकार्यादिभेदव्यवहार इति । नैतदस्ति । यस्मात्परमार्थाकाशस्य घटाकाशो न विकारः । यथा सुवर्णस्य रुचकादिर्यथा वापां फेनबुद्बुदहिमादिर्नाप्यवयवः । यथा च वृक्षस्य शाखादिः । न तथाऽऽकाशस्य घटाकाशः । विकारावयवौ यथा तथा नैवात्मनः परस्य परमार्थसतो महाकाशस्थानीयस्य घटाकाशस्थानीयो जीवः सदा सर्वदा यथोक्तदृष्टान्तवन्न विकारो नाप्यवयवः । अत आत्मभेदकृतव्यवहारो मृषैवेत्यर्थः ॥ ७ ॥

---

घटाकाशादीनां विकारत्वाशङ्कामनूद्य परिहरति । नेत्यादिना । घटाकाशादिराकाशस्य विकारोऽवयवो वेत्यङ्गीकारात्तत्रापि भेदस्य तात्त्विकत्वान्न विरुध्यतेति श्लोकस्य व्यावर्त्यं चोद्यमुत्थापयति । नन्विति । आकाशस्य निर्विकारत्वं निरवयवत्वं च लोकसिद्धं गृहीत्वा परिहरति । नैतदस्तीति । तत्र वैधर्म्योदाहरणद्वयमाह । यथेति । घटाकाशादिराकाशाख्यस्य महाकाशस्यावयवो न भवतीत्यत्र व्यतिरेकदृष्टान्तमाह । यथा वृक्षस्येति । उक्तदृष्टान्तानां दार्ष्टान्तिकमाह । न तथेति । घटाकाशस्य महाकाशं प्रति विकारत्वमवयवत्वं च नास्तीत्युक्तम् । दृष्टान्तेनानूद्य दार्ष्टान्तिकं दर्शयन्नुत्तरार्धं व्याकरोति । यथेत्यादिना । आत्मैकान्तिकत्वेनानुमानस्याभानत्वं स्थिते फलितमाह । अत इति ॥ ७ ॥

मरणे सम्भवे चैव गत्यागमनयोरपि ।
स्थितौ सर्वशरीरेषु आकाशेनाविलक्षणः ॥९॥
संघाताः स्वप्नवत्सर्वे आत्ममायाविसर्जिताः ।

---

मात्मा अबुधारोपितमलैर्मलिनो भवतीत्यर्थः ॥८॥

पुनरप्युक्तमेवार्थं प्रपञ्चयति घटाकाशजन्मनाशगमनागमनस्थितिवत्सर्वशरीरेष्वात्मनो जन्ममरणादिराकाशेनाविलक्षणः प्रत्येतव्य इत्यर्थः ॥९॥

घटादिस्थानीयास्तु देहादिसंघाताः स्वप्नदृश्यदेहादिवन्मायाविकृतदेहादिवच्चात्ममायाविसर्जिता आत्मनो माया

---

नामबुद्धीनामर्थमाह । तद्वदिति । यो हि प्रत्यगात्मा विधातः सोऽयम् बुद्धानां मलिनो भवतीति सम्बन्धः । अबुद्धानामित्येतद्व्याचष्टे । प्रत्यगात्मेति । अविवेकिभिरध्यारोपितैरपि मलैः प्रत्यगात्मनो न वस्तुत्वं मलसंयुक्तं फलं तस्य माभव इत्यध्यतीत्याशङ्क्याह । न हीति ॥८॥

ननु जीवो मरणानन्तरं धर्मानुरोधेन स्वर्गं गच्छति । अधर्मवशाच्च नरकं प्रतिपद्यते । धर्माधर्मयोश्च भोगेन क्षये पुनरागत्य योनिविशेषं सम्भवति । तत्र यावद्भोगं स्थित्वा पुनरपि परलोकाय प्रतिष्ठते । एवमिहलोकपरलोकसञ्चरणव्यवहारविरुद्धमद्वैतमिति तत्राह । मरण इति । श्लोकस्य तात्पर्यमाह । पुनरपीति । आत्मनि सर्वो व्यवहारोऽविद्याकृतो वास्तवो नेत्युक्तोऽर्थः । आत्मनो हि गगनोपमस्य जन्मादेर्वस्तुतोऽसम्भवादविद्याकृतत्वेन गत्यादिरित्यर्थः ॥९॥

ननु संघातस्यान्वितानामुपाधीनां वस्तुत्वात्तदुपयुक्तभेदस्यापि तथात्वादात्मनोऽनुपपन्नमद्वयत्वमिति चेत्तत्राह । संघाता इति । देहा-

पृथिव्यामुदरे चैव यथाऽऽकाशः प्रकाशितः॥१२॥

मिति द्वयोर्द्वयोरद्वैतत्वात् परं ब्रह्म प्रकाशितम्। कस्मादित्याह। ब्रह्मविद्याख्यं मध्वमृतत्वं मोदनहेतुत्वा-द्विज्ञायते यस्मिन्निति मधुज्ञानं मधुब्राह्मणं तस्मिन्नि-त्यर्थः॥ किमिवेत्याह। पृथिव्यामुदरे चैव यथैक आकाशो-ऽनुमानेन प्रकाशितो लोके तद्वदित्यर्थः॥१२॥

पञ्चमाधिकरणात्मना यदेकं ब्रह्मानुगतं प्रत्यक्चैतन्यं मद्ब्रह्मेति जीवपरयोरैक्यं तैत्तिरीयश्रुतेस्तात्पर्यमुक्तं तथैव बृहदारण्यकश्रुते-रपि तात्पर्यमाह। द्वयोरिति। मधुब्राह्मणे चतुर्षु पर्य्यायेषु अधिदै-वाध्यात्मविभक्तयोः स्थानयोरयमेव स इति परं ब्रह्म प्रत्यक् प्रकाशि-तम्। अतोऽस्मिन् बृहदारण्यकश्रुतेरपि ब्रह्मात्मैक्ये तात्पर्यमित्यर्थः। तत्र दृष्टान्तमाह। पृथिव्यामिति। न केवलमैक्ये तैत्तिरीयश्रुतिरेव तात्पर्यं किन्तु बृहदारण्यकश्रुतेरपीत्याह। किंतु इति। अधिदैवं पृथिव्यादावध्यात्मञ्च शरीरे तेजोमयोऽमृतमयश्चैतन्यप्रधानोऽन्त-मयोऽमरणधर्मा पुरुषः पूर्णः पृथिव्यादौ शरीरे चान्तर्वर्त्ती यो विज्ञाता स पर एवात्मा। तेन स विज्ञाता सर्वं पूर्णमपरिच्छिन्नं ब्रह्मै-वेति परं ब्रह्मप्रकाशितमिति सम्बन्धः। अथवा तायस्यायामध्यारोपा सम्भवात् द्वयोर्द्वयोरिति कथमुच्यते तत्राह। अद्वैतत्वादिति। अद्वैतपर्य्यन्तं ब्रह्म प्रकाशितम्। द्वयोर्द्वयोरिति पुनरनुवादमात्र-मित्यर्थः। मधुज्ञाने सर्व्वत्र प्रकाशितं न ब्रह्म, इत्याशङ्क्य मधुज्ञान-शब्दार्थं व्युत्पादयति। कस्मादिना। शब्दस्य क्वचिदाश्रितत्वं दृष्ट-वदनुमीयते। तत्र शब्दाधिकरणं सामान्यतः सिद्धं पारिशेष्यादाकाश-मिति सिद्धमिति। तच्च कल्पनालाघवादेकमेवेति गम्यते। तथा च बहि-रन्तश्चैकमेवाकाशमनुमानप्रामाण्यादधिगतम्। तथाधिदैवमध्यात्मञ्च ब्रह्म प्रत्यग्भूतं सिद्धमित्युत्तरार्द्धं व्याचष्टे। किमिवेत्यादिना॥१२॥

जीवात्मनोरनन्यत्वमभेदेन प्रशस्यते ।
नानात्वं निन्द्यते यच्च तदेवं हि समञ्जसम् ॥१३॥

---

यद्युक्तितः श्रुतितश्च निर्धारितं जीवस्य परस्य चात्मनोरनन्यत्वमभेदेन प्रशस्यते स्तूयते शास्त्रेण व्यासादिभिश्च। यच्च सर्वप्राणिसाधारणं स्वाभाविकं शास्त्रबहिष्कृतैः कुतार्किकैर्विरचितं नानात्वदर्शनं निन्द्यते। न तु तद्द्वितीयमस्ति। द्वितीयाद्वै भयं भवति। उदरमन्तरं कुरुते। अथ तस्य भयं भवति। इदं सर्वम्। यदयमात्मा। मृत्योः स मृत्युमाप्नोतीत्यादिवाक्यैरन्यैश्च ब्रह्मविद्भिः। यच्चैतत्तदेवं हि समञ्जसं ऋज्ववबोध न्याय्यमित्यर्थः। यास्तु

---

इतश्चैकत्वे श्रुतीनां तात्पर्यमित्याह । जीवात्मनोरिति । अभेदेन प्रशंसितं ब्रह्म भवतीत्यादिना ब्रह्मभावफलवादेनेत्यर्थः । यत् प्रशस्यते तद्विधेयमित्यादिन्यायश्च । एकत्वदर्शने फलवादोपपत्तेरुपक्रमादेकत्वं प्रमाणतात्पर्यविषयमिति भावः । यच्चानेकत्वं सर्वप्राणिसाधारणं तन्निन्द्यमानं दृश्यते । यन्निन्द्यते तन्निषिध्यत इति न्यायान्नानात्वं शास्त्रार्थो न भवतीत्याह । नानात्वमिति । तदुभयमेकत्वप्रशसनं नानात्वनिन्दनं चैकत्वमेव शास्त्रीयमित्यभ्युपगमे सति युक्तमिति फलितमाह । तदेवं हीति । श्लोकाक्षराणि व्याचष्टे । यदिति । अनन्यत्वाभावशङ्कां व्यावर्त्य करणत्वं दर्शयति । अभेदेनेति । तत्प्रशस्यते शास्त्रेणेति तत्पदमादाय व्याख्येयम् । शास्त्रेणाभेदवेदनेन फलवादेनेत्यर्थः । व्यासपराशरादिभिश्च वेदार्थं व्याचक्षाणैरेकत्वं स्तूयते । वासुदेवः सर्वमिति स महात्मा सुदुर्लभः । एकः हरिः सर्वमिदं जनार्दनो नान्यत्ततः कारणकार्यजातमित्यादिवाक्यैरित्याह।

तार्किकपरिकल्पिताः कुदृष्टयस्ता अन्त्यो निरूप्यमाणा न घटानां प्राञ्चन्तीत्यभिप्रायः ॥१३॥

ननु श्रुत्यापि जीवपरमात्मनो पृथक्त्वं यत्प्रागुत्पत्तेरुत्पत्त्यर्थोपनिषद्वाक्येभ्य पूर्व्वं प्रकीर्त्तितं कर्म्मकाण्डे। अनेकधा कामभेदत इदंकामोऽदःकाम इति। परञ्च सदाधारपृथिवीद्यामित्यादिमन्त्रवर्णैः। तत्र कथं कर्म्मज्ञानकाण्डवाक्यविरोधे ज्ञानकाण्डवाक्यार्थस्यैवैकत्वस्य सामञ्जस्यमवधार्य्यत इति। अत्रोच्यते॥ यतो या इमानि

---

व्यासाऽभिधेति॥ द्वितीयार्द्धं विभजते। यत्रेति॥ तद्विन्द्यत इति दध्यन्द्रेनोपक्रमाद्द्रष्टव्यम्। अविद्यामोहितात्मानः पुरुषा भिन्नदर्शिनः। किन्तेन न कृतं पापं चौरेणात्मापहारिणेत्यादियावदर्थोपाद-योऽपि द्वैतदर्शनं निन्दन्तीत्याह। अन्यैश्चेति॥ एवमनेकत्वदर्शनस्य निन्दितत्वेन निषिद्धत्वान्नानेकत्वं शास्त्रीयमित्युक्त्वा चतुर्थपादार्थमाह। यश्चेतदिति॥ विषयभेदेन प्रशंसनं निन्दनञ्चेत्यर्थः। एवं हीति॥ द्वैतस्याशास्त्रीयत्वमद्वैतस्यैव तत्तात्पर्य्यगम्यत्वमित्यङ्गीकारे सतीत्यर्थः। भेददृष्टितामपि न्याय्यत्वाविशेषाद्भेददर्शननिन्दनस्य कुतो न्याय्यत्वमित्याशङ्क्याह। याश्चेति॥ या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः। सर्व्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृता इति मनुवचनादित्यर्थः। न्यायविरोधादपि भेदवादानामसमञ्जसत्वमित्याह। निरूप्यमाणा इति। वैशेषिकवैनाशिकादिकल्पना भेदानुसारिण्यः भेदश्च परस्पराश्रयतादिदोषदूषिता न प्रमीयते। तत भेदवादानामुत्प्रेक्षामूलानामसमञ्जसत्वमित्यर्थः॥१३॥

भेदवादानामुत्प्रेक्षामात्रमूलत्वं श्रुतिमूलत्वादित्याशङ्क्य परिहरति। जीवात्मनि॥ उत्पत्तिर्श्रुतयः सम्यक् ज्ञानं तदर्थोपनि

भविष्यद्वृत्त्या गौणं तन्मुख्यत्वं हि न युज्यते ॥१४॥

प्रत्ययादिवाक्यैर्जीवपरमात्मनोरेकत्वमेव प्रतिपिपादयिषितम् । तत्त्वमसि अन्योऽसावन्योऽहमस्मीति न स वेदेत्यादिभिः । अत उपनिषत्स्वेकत्वं श्रुत्या प्रतिपादयिषितं भविष्यतीति भाविनीमेकत्ववृत्तिमाश्रित्य लोके भेददृष्ट्यनुवादो गौण एवेत्यभिप्रायः । अथवा तदैक्षत । तत्तेजोऽसृजतेत्याद्युत्पत्तेः प्रागेकमेवाद्वितीयमित्येकत्वं प्रकीर्तितम् । तदेव च तत्सत्यं स आत्मा तत्त्वमसीत्येकत्वं

मृल्लोहविस्फुलिङ्गाद्यैः सृष्टिर्या चोदिताऽन्यथा।

भविष्यतीति तां नदिष्यद्वृत्तिमपेक्ष्य यज्जीवात्मनोः पृथक्त्वं यत्र क्वचिद्वाक्ये गम्यमानं तद्गौणम्। यथौदनं पचतीति तद्वत्॥ १४॥

ननु यद्युत्पत्तेः प्रागजं सर्वमेकमेवाद्वितीयं तथाप्युत्पत्तेरूर्ध्वं जातमिदं सर्वं जीवाश्च भिन्ना इति। मैवम्। अन्यार्थत्वादुत्पत्तिश्रुतीनाम्। पूर्वमपि परिहृत एवायं दोषः। स्वप्नवदात्ममायाविसर्जिताः सङ्घाताः घटाकाशोत्पत्तिभेदादिवज्जीवानामुत्पत्तिभेदादिरिति। इत एवोत्पत्तिभेदादिश्रुतिभ्य आकृष्येह पुनरुत्पत्तिश्रुतीनामै-

मेव प्रतिपिपादयिषितमिति पूर्वेण संबन्धः। एकत्वे श्रुतत्वात्तदर्थं सिद्धं तृतीयपादावष्टम्भेन फलितमाह। यत इति। श्लोकस्य व्याख्याय व्याख्यानान्तरमाह। यथेत्यादिना॥ १४॥

उत्पत्त्यादिश्रुतिषु ग्रहणशक्तिस्वभावेन उत्पत्त्यादिभेददर्शनाद्द्वैतानुपपत्तिरित्याशङ्क्याह। मृल्लोहेति। उत्पत्त्यादिश्रुतीनां स्वार्थनिष्ठत्वमुपेत्य व्याख्यातं शङ्कामुत्थापयति। नन्विति। तासां स्वार्थनिष्ठत्वाभावा दिदमयुक्तमिति परिहरति। मैवमिति। परिहृतत्वाच्च नेदं चोद्यं भाष्यकारमित्याह। पूर्वमपीति। यदि प्रकृतोत्पत्त्यादिश्रुतिभ्य उपक्रमोपसंहारैकरूप्य तात्पर्यलिङ्गमाक्ष्याद्याय कथा उत्पत्त्यादिश्रुत स्वार्थपरत्वं परिहृतं तर्हि पुनरुक्तमासो हया श्लोकादि व्याशङ्क्य। इत एवेति। उत्पत्त्यादिश्रुतीनां मिथ्यादृष्टिपरत्वं पूर्वमुक्तम्। इह तु तासां ब्रह्मात्मैक्ये तात्पर्यप्रतिपादनेच्छया पुनरुपन्यास स विशेषोऽस्तीत्युत्तरमाह। इह पुनरिति॥ पादत्रयगतान्यक्षराणि

उपायः सोऽवताराय नास्ति भेदः कथञ्चन॥१५॥

दं पारम्पर्य्यप्रतिपिपादयिषयोपन्यासः। मृल्लोहविस्फुलिङ्गादिदृष्टान्तोपन्यासैः सृष्टिर्या चोदिता प्रकाशिता अन्यथ च स सर्व्वः सृष्टिप्रकारो जीवपरमात्मैकत्वबुद्ध्यवतारायोपायोऽस्माकम्। यथा प्राणसंवादे वागाद्यासुरपाप्मवेधाद्याख्यायिका कल्पिता प्राणवैशिष्ट्यबोधावताराय तदप्यसिद्धमिति चेत्। न। शाखाभेदेष्वन्यथा च प्राणादिसंवाद श्रवणात्। यदि हि वादः परमार्थ एवाभूदेकरूप एव संवादः सर्व्वशाखास्वश्रोष्यद्विरुद्धानेकप्रकारेण नाश्रोष्यत्।

---

योजयति। अन्यदित्यादिना॥ यः शब्दगत्या प्रतीयते न स मुख्योऽर्थो भवति किन्तु तात्पर्य्यगम्यस्यैव मुख्यत्वमित्यत्र दृष्टान्तमाह। यथेति॥ वागादीनां प्राणानामहं श्रेयानिति मिथः सङ्घर्षे संवादरूपा याऽऽख्यायिका श्रूयते नासौ मुख्यार्था भवति। वागादीनामचेतनत्वात्। तथा सृष्ट्यादिश्रुतिरपि न स्वार्थे तात्पर्य्यवतीत्यर्थः॥ उदाहरणान्तरं सूचयति। वागादीति॥ देवासुरसङ्ग्रामे देवा असुरानभिभवितुमुपचक्रमिरे। वागादयो श्रोतृत्वेन वव्रिरे। तांश्च वागादीन् कल्याणवक्तृत्वेन पाप्मना असुरा विविधुरित्याद्याख्यायिका च न यथाश्रुतार्था। वागादीनां वागभावेनोद्गानासामर्थ्यात्। किन्त्वसुरधर्षितत्वात् प्राणोत्क्रान्तौ देहपातप्रसिद्धेश्च प्राणः श्रेष्ठो भवतीति प्राणवैशिष्ट्यनिश्चये बुद्ध्यवतारोपायत्वेन सा कल्पिता। तथैव प्रकृतेऽपि सृष्ट्यादिश्रुतेः स्वार्थे तात्पर्य्याभावात्तत्कार्य्यस्य तदव्यतिरेकेणाभावात्तदेवाभीष्टद्वैतं बुद्ध्यवतारोपायत्वेन सृष्ट्यादिप्रक्रिया कल्पितेत्यर्थः। देवताशब्दप्रयोगाच्चेतनत्वं वागादीनामिति मुख्यार्थत्व प्रवादादित्यपरस्य। अतोऽसिद्धमुदाहरणमिति

## आश्रमास्त्रिविधा हीनमध्यमोत्कृष्टदृष्टयः ।

---

यदि पर एवात्मा नित्यशुद्धबुद्धमुक्तस्वभाव एकः परमार्थः सन्नेकमेवाद्वितीयमित्यादिश्रुतिभ्योऽसदन्यत् किमर्थेयमुपासनोपदिष्टा । आत्मा वा अरे द्रष्टव्यः । य आत्माऽपहतपाप्मा स क्रतुं कुर्वीत । आत्मेत्येवोपासीतेत्यादिश्रुतिभ्यः । कर्माणि चाग्निहोत्रादीनि । शृणु तत्र कारणम् । आश्रमा आश्रमिणोऽधिकृताः । वर्णिनश्च मार्गगाः । आश्रमशब्दस्य प्रदर्शनार्थत्वात्त्रिविधाः । कथम् । हीनम-

---

तथेति ॥ प्रति कल्पं सृष्टिभेदस्येष्टत्वादुत्पत्तीनामपि प्रतिसर्गमन्यथात्वादुपवर्णनव्यवस्थया प्रर्थवत्त्वं स्यादिति शङ्कते । कल्पेति ॥ सिद्धे प्रमाणे व्यवस्था कल्प्यते । तदेव नास्त्यपि विप्रतिपत्तेरित्याह । नेत्यादिना ॥ तासां प्रयोजनवत्त्वं तथापि सिद्धमित्याशङ्क्याह । यथोक्तेति ॥ प्रयोजनान्तराभावं प्रकटयति । न हीति ॥ प्राणादिभावप्राप्तये ध्यानार्थं प्राणादिसङ्कीर्तनमिति शङ्कते । तथात्वेति ॥ तं यथा यथोपासते तदेव भवतीति श्रुतेः । *ध्यायिनामात्मकल्पनादिध्यानात्मप्राप्तिः फलं स्यात् ।* तन्नानिष्टमिति परिहरति । नेत्यादिना ॥ प्राणसंवादश्रुतीनां प्राणस्यै शिक्षामात्रार्थत्वमुपपाद्य दार्ष्टान्तिकमुपसंहरति । तस्मादिति ॥ उत्पत्त्यादिश्रुतीनामुत्पत्त्यादिपरत्वाभावे फलितमुक्तार्थपादावष्टम्भं न स्पष्टयति । अत इति ॥ १५ ॥

उत्पत्त्यादिश्रुतिविरोधमसह्य तं परिहृत्योपासनविध्यनुपपत्तिविरोधं परिहरति । आश्रमा इति ॥ आश्रमिणो वर्णिनश्च कार्यब्रह्मोपासका हीनदृष्टयः । कारणब्रह्मोपासका मध्यमदृष्टयः । अद्वितीयब्रह्मदर्शनशीलास्तूत्तमदृष्टयः । एवमेतेषु त्रिविधेषु मध्ये तेषां

उपासनोपदिष्टेयं तदर्थमनुकम्पया ॥१६॥

ध्यमोत्कृष्टदृष्टयः । हीना निकृष्टा मध्यमा उत्कृष्टा च दृष्टिर्दर्शनसामर्थ्यं येषां ते म [illegible] पेता इत्यर्थः । उपासनोपदिष्टेयं तदर्थं मन्दमध्यमदृष्ट्याश्रमाद्यर्थं कर्माणि च । न चात्मैक एवाद्वितीय इति निश्चितोत्तमदृष्ट्यर्थं दयालुना वेदेनानुकम्पया सन्मार्गगा.

मन्दानां मध्यमानाञ्च उत्तमदृष्टिप्रवेशार्थं दयालुना वेदेनोपासनोप दिष्टा । तथा चोपासनानुष्ठानद्वारेणोत्तमामेकत्वदृष्टिं क्रमेण प्राप्ना उत्तमेष्वन्तर्भविष्यन्तीत्यर्थः ॥ श्लोकव्याख्यानप्रसङ्गमाह । यदीति ॥ तस्यैव परमार्थत सत्त्वे प्रमाणमाह । एकमेवेति ॥ द्वैतप्रतीतेर्मिथ्या द्वैतविषयत्वेनाविरोधमाह । असदिति ॥ अद्वैतस्यैव वस्तुत्वे ध्यान विधिविरोधमाह । किमर्थेति ॥ उपासनोपदेशमेव विशदयति । आत्मेति ॥ तत्र हि निदिध्यासितव्य इत्युपासनोपदिश्यते । य आत्मे त्यादौ तु स विजिज्ञासितव्य इति ध्यानविधिः । स क्रतुमित्यत्र क्रतु स्त्वेन प्रमादिमानधिकारी परामृश्यते । अद्वैतस्यैव वस्तुत्वे कर्म विधिविरोधोऽपि प्रसरतीत्याह । कर्माणि चेति किमर्थान्युपदिष्टानीति सम्बन्धः । अद्वैतानधिकारिणोऽधिकार्यन्तरं प्रति विधिद्वय सार्थक मिति परिहरति । शृणुत्विति ॥ तत्रोपासनोपदेशकर्मोपदेशश्च इत्युक्तं ॥ तदेव कारणमवतारयोजनया प्रकटयति । आश्रमा इति ॥ आश्रमशब्देनाश्रमिणो गृह्यन्ता वर्णिनस्तु कथं गृह्येरन्नित्याशङ्क्याह । आश्रमेति ॥ शूद्रान् व्यावर्त्य त्रैवर्णिकानामेव ग्रहणार्थं मार्गगा इति विशेषणम् ॥ त्रैविध्यमेवाकाङ्क्षाद्वारा स्फोरयति । कथमित्यादिना । कार्यब्रह्मविषयत्वान्निकृष्टत्वम् । मध्यमत्व कारणब्रह्मविषयत्वात् ।

स्वसिद्धान्तव्यवस्थासु द्वैतिनो निश्चिता दृढम् ।

---

सन्तः कथमिमामुत्तमामेकत्वदृष्टिं प्राप्नुयुरिति । यन्मनसा न मनुते येनाहुर्मनो मतं तदेव ब्रह्म त्वं विद्धि । नेदं यदिदमुपासते तत्त्वमसि आत्मैवेदं सर्वमित्यादि-श्रुतिभ्यः ॥१६॥

शास्त्रोपपत्तिभ्यामवधारितत्वात् अद्वयात्मदर्शनं सम्यग्दर्शनं तद्बाह्यत्वान्मिथ्यादर्शनमन्यत् । इतश्च मिथ्यादर्शनं द्वैतिनां रागद्वेषादिदोषास्पदत्वात् कथं सिद्धान्तव्यवस्थासु स्वसिद्धान्तरचनानियमेषु कपिलकणादबुद्धादि-

---

उत्कृष्टत्वमद्वैतविषयत्वादिति द्रष्टव्यम् । एवं पूर्वार्द्धं व्याख्यायोत्तरार्द्धं व्याकरोति । उपासनेति ॥ कर्मोपदेशस्यापि तदर्थत्वमाह । कर्म्माणि चेति ॥ व्यावर्त्त्यां शङ्कां दर्शयति । न चेति ॥ वेदेनोपासनाद्युपदेशे मन्दानां मध्यमानाञ्च कथमनुग्रहः सिध्यतीत्याशङ्क्याह । अन्यागमा इति ॥ प्राप्नुयुरित्युपासनोपदिष्टा । कर्म्माणि चेति पूर्व्वेण सम्बन्धः । उपास्यं ब्रह्मैव न भवतीति प्रतिषेधात् मन्दमध्यमदृष्टिविषयत्वमुपासनस्य प्रतिभातीत्याह । यन्मनसेति ॥ अद्वैतदृष्टौ नात्मनोऽन्यात्मभेदाभिमानाभावादेव नोपासनं कर्म्म वा सम्भवतीत्याह । तत्त्वमसीति ॥१६॥

अद्वैतदर्शनस्योपासनादिविधिविरोधाभावेऽपि मतान्तरैर्विरोधोऽस्तीत्याशङ्क्य तेषां भ्रान्तिमूलत्वान्नैवमित्याह । स्वसिद्धान्तेति । श्लोकस्य तात्पर्यं वक्तुं भूमिकां करोति । शास्त्रेति ॥ तद्बाह्यत्वादित्यत्र तच्छब्देन शास्त्रोपपत्ती गृह्येते ॥ द्वैतदर्शनस्य मिथ्यादर्शनत्वे हेत्वन्तरपरत्वमवतारितस्य श्लोकस्य दर्शयति । इतश्चेति ॥ इतः शब्दार्थमेव दर्शयति । द्वैतिनामिति ।

अद्वैतं परमार्थो हि द्वैतं तद्भेद उच्यते।

केन हेतुना तैर्न विरुध्यत इत्युच्यते। अद्वैतं परमार्थो हि यस्माद्द्वैतं नानात्वमस्याद्वैतस्य भेदस्तस्य कार्यमित्यर्थः। एकमेवाद्वितीयम्। तत्तेजोऽसृजतेति श्रुतेः। उपपत्तेश्च। स्वचित्तस्पन्दनाभावे समाधौ मूर्च्छायां सुषुप्तौ चाभावात्। अतस्तद्भेद उच्यते द्वैतम्। द्वैतिनान्तु तेषां परमार्थतश्चोभयथापि द्वैतमेव। यदि च तेषां भ्रान्तानां द्वैतदृष्टिरस्माकमद्वैतदृष्टिरभ्रान्तानां तेनायं हेतुनास्मत्पक्षो न विरुध्यते तैः। इन्द्रो मायाभिः। न तु तद्द्वि-

---

द्वैतपक्षैरद्वैतपक्षस्य विषयद्वारके विरोधेऽधिगम्यमाने कथमविरोधसाधको युक्तिरित्याशङ्क्य स्वमतपर्यालोचनया तावदविरोधमाह। अद्वैतमिति। मिथ्याभूतेन द्वैतेनाद्वैतस्याविरोधेऽपि परमार्थभूतेन तेन विरोधः स्यादित्याशङ्क्य तथाविधं द्वैतमेव नास्तीति मत्वाह। तेषामिति। द्वैतिनः परमार्थत्वेनापरमार्थत्वेन च द्वैतमेव व्यवहारगोचरीभूतम् तच्च सम्प्रतिपन्ने तदन्मिथ्यात्वे एवं स्थिते न द्वैतेनाद्वैतस्य विरोधशङ्काशङ्को भवतीत्यर्थः। श्लोकप्रतिपेध्य प्रश्नं करोति। केनेति। श्लोकाक्षराणामर्थमाचक्षाणो हेतुमाह। उच्यत इति। द्वैतस्याद्वैतकार्यत्वे प्रमाणमाह। एकमेवेति। श्रुतिप्रामाण्याद्द्वैतस्याद्वैतकार्यत्वावगमात्कार्यस्य च कारणात् भेदेन सत्त्वनिषेधात्तदनन्यत्वमित्यवधारणाद्वैतदर्शनं द्वैतदर्शनेन विरुद्धमित्यर्थः। अद्वैतदर्शनं द्वैतदर्शनैरविरुद्धमित्यत्रैव युक्तिमाह। उपपत्तेश्चेति। तामेवोपपत्तिं सङ्क्षिप्य दर्शयति। स्वचित्तेति। सुषुप्त्यादावस्थायां स्वकीयचित्तस्पन्दनाभावे

अद्वैतं परमार्थो हि द्वैतं तद्भेद उच्यते ।

---

केन हेतुना तैर्न विरुध्यत इत्युच्यते । अद्वैतं परमार्थो हि यस्माद्द्वैतं नानात्वमद्वैतस्य भेदस्तस्य कार्यमित्यर्थः । एकमेवाद्वितीयम् । तत्तेजोऽसृजतेति श्रुतेः । उपपत्तेश्च । स्वचित्तस्पन्दनाभावे समाधौ मूर्च्छायां सुषुप्तौ चाभावात् । अतस्तद्भेद उच्यते द्वैतम् । द्वैतिनान्तु तेषां परमार्थतश्चोभयथापि द्वैतमेव । यदि च तेषां भ्रान्तानां द्वैतदृष्टिरस्माकमद्वैतदृष्टिरभ्रान्तानां तेनायं हेतुनास्मत्पक्षो न विरुध्यते तैः । इन्द्रो मायाभिः । न तु तद्द्वि-

---

द्वैतपक्षैरद्वैतपक्षस्य विषयद्वारके विरोधेऽधिगम्यमाने कथमविरोधवाचो युक्तिरित्याशङ्क्य स्वमतपर्यालोचनया तावदविरोधमाह । अद्वैतमिति ॥ मिथ्याभूतेन द्वैतेनाद्वैतस्याविरोधेऽपि परमार्थभूतेन तेन विरोधः स्यादित्याशङ्क्य तथाविधं द्वैतमेव नास्तीति मत्वाह । तेषामिति ॥ द्वैतिनां परमार्थत्वेनापरमार्थत्वेन च द्वैतमेव व्यवहारगोचरीभूतम् तच्च सम्प्रतिपन्नद्वैतवन्मिथ्येत्येवं स्थिते न द्वैतेनाद्वैतस्य विरोधः शक्यशङ्को भवतीत्यर्थः ॥ श्लोकप्रतिपाद्यं प्रश्नं करोति । केनेति ॥ श्लोकाक्षराण्यर्थमाचक्षाणो हेतुमाह । उच्यत इति ॥ द्वैतस्याद्वैतकार्यत्वे प्रमाणमाह । एकमेवेति ॥ श्रुतिप्रामाण्याद्द्वैतस्याद्वैतकार्यत्वावगमात्कार्यस्य च कारणात् भेदेन सत्त्वनिषेधात्तदनन्यमित्यवधारणाद्द्वैतदर्शनं द्वैतदर्शनेन विरुद्धमित्यर्थः । अद्वैतदर्शनं द्वैतदर्शनैरविरुद्धमित्यत्रैव युक्तिमाह । उपपत्तेश्चेति ॥ तामेवोपपत्तिं सङ्क्षिप्य दर्शयति । स्वचित्तेति ॥ सुषुप्त्याद्यवस्थायां स्वकीयचित्तस्पन्दनाभावे

तत्त्वतो भिद्यमाने हि मर्त्यताममृतं व्रजेत्॥१९॥
अजातस्यैव भावस्य जातिमिच्छन्ति वादिनः॥

मायया भिद्यते ह्येतत्तैमिरिकानेकचन्द्रवद्रज्जुः सर्पधारादिभिर्भेदैरिव न परमार्थतो निरवयवत्वादात्मनः। सावयवं ह्यवयवान्यथात्वेन भिद्यते। यथा मृद्घटादिभेदैः। तस्मान्निरवयवमजं नान्यथा कथञ्चन केनचिदपि प्रकारेण न भिद्यत इत्यभिप्राय.। तत्त्वतो भिद्यमाने ह्यमृतमजमद्वयं स्वभावत. सन्मर्त्यतां व्रजेत्। यथाऽग्निः शीतताम्। तच्चानिष्टं स्वभाववैपरीत्यगमनम्। सर्वप्रमाणविरोधात्। अजमव्ययमात्मतत्त्वं माययैव भिद्यते न परमार्थतः तस्मान्न परमार्थसद्द्वैतम्॥१९॥

ये तु पुनः केचिदुपनिषद्व्याख्यातारो ब्रह्मवादिनो वावदूका अजातस्यैवात्मतत्त्वस्यामृतस्य स्वभावतो जाति-

---

त्वाच्चन्द्रादिभेदवदित्यर्थः॥ विमतं तत्त्वतो भेदरहितम्॥ निरवयवत्वादजत्वाद्व्यतिरेकेण मृदादिवदित्याह। नेत्यादिना॥ निरवयवत्वेऽपि वस्तुनः स्फुटनधर्मत्वमाशङ्क्याह। सावयवं हीति॥ उक्तमनुमानं निगमयति। तस्मादिति॥ अन्यथा परमार्थत्वेनेत्यर्थः। पुनर्भङ्गुरूपमन्यथात्वं कार्यत्वधर्मत्वाद्यलादिरत्र प्रकारोऽभिमतः॥ विपक्षे दोषं वदन् द्वितीयार्द्धं विवृणोति। तत्त्वत इति॥ प्रसङ्गस्येष्टत्वमाशङ्क्य निराचष्टे। तच्चेति॥ विपर्ययवादमुपसंहरति। अजमिति॥ स्थिते त्रिवर्त्तवादे फलितमाह। तस्मादिति॥१९॥

स्वपक्षमुक्त्वा स्वयूथ्यपक्षमनुभाष्य दूषयति। अजातस्येति॥ अनुवादविभागं विभजते। ये त्विति॥ स्वभावत एवाजातस्य, स्वभावतः

कृतकेनामृतस्तस्य कथं स्थास्यति निश्चलः॥२२॥
भूततोऽभूततो वापि सृज्यमाने समा श्रुतिः।

स्वभावतोऽमृत इति प्रतिज्ञा यस्यैव। कथं तर्हि कृतकेनामृतस्तस्य स्वभावः कृतकेनामृतः स कथं स्थास्यति निश्चलोऽमृतस्वभावतया न कथञ्चित्स्थास्यति आत्मा जातिवादिनः सर्वदाऽजं नाम नास्त्येव सर्वमेतन्मर्त्यं। अतोऽनिर्मोक्षप्रसङ्ग इत्यभिप्रायः॥२२॥

नन्वजातिवादिनः सृष्टिप्रतिपादिका श्रुतिर्न सङ्गच्छते प्रामाण्यं। बाढं विद्यते सृष्टिप्रतिपादिका श्रुतिः। सा त्वन्यपरा। उपायः सोऽवतारायेत्यवोचाम। इदानीमुक्तेऽपि परिहारे पुनश्चोद्यपरिहारौ विवक्षितार्थं प्रति

---

स्वभावेनेति॥ पूर्वार्द्धं साध्याहारं योजयति। यस्येति॥ प्रागवस्थायामपि कारणस्यैव कार्याकारेण जन्मयोग्यतया मर्त्यतागमात्मनैव प्रतिज्ञा स्यादित्यर्थः। कथं तर्हि तस्य प्रतिज्ञा युक्तेत्याशङ्क्य कृतकेन मर्त्यविलक्षणेनामृतस्तस्य वादिनः स कारणाख्यो भावो भवतीति प्रतिज्ञा युक्तेत्याह। कथमित्यादिना॥ भवतु प्रलयावस्थायाममृतताख्यापरिणामेनामृतत्वं ततो वा किं स्यादित्याशङ्क्याह। कृतकेनेति॥ कृतकत्वस्य यत्कृतकं तदनित्यमिति विनाशित्वेन व्याप्तत्वादित्यर्थः। किञ्चास्यानवस्थाया कार्यमात्रं वस्तुत्वजं न प्राप्नोतीति ज्ञानाभावान्मोक्षो न स्यादित्याह। आत्मेति॥२२॥

परिणामवादस्य सृष्टिश्रुत्यनुसारेण लोकार्थत्वमाशङ्क्य निरस्यति। भूतत इति॥ परिणामवादे विवर्त्तवादे च सृष्टिश्रुतेरविशेषादद्वैताश्रु-

नेह नानेति चाम्नायादिन्द्रो मायाभिरित्यपि ।

---

कथं श्रुतिनिश्चय इत्याह । यदि हि भूत एव सृष्टिः स्यात्ततः सत्यमेव नाना वस्त्विति तदभावप्रदर्शनार्थमाम्नायो न स्यात् । अस्ति च नेह नानास्ति किंचनेत्यादिराम्नायो द्वैतभावप्रतिषेधार्थः । तस्मादात्मैकत्वप्रतिपत्त्यर्था कल्पिता सृष्टिरभूतैव प्राणसंवादवत् । इन्द्रो मायाभि-

---

भूतत इति । माया ह्येषा मया सृष्टेत्यादिवत् तत्तेजोऽसृजतेति श्रुतिः सत्त्वाभावादिति श्रुतिस्तु देवदत्तोऽग्रामोऽभवदिति । तन्न । न च तत्त्वं विशेषणमात्रोपलभ्यते । तेन मायामय्याः सृष्टिविद्यायामपि सृष्टिश्रुतिः श्लिष्टेत्यर्थः । गौणमुख्ययोर्मुख्ये कार्ये सम्प्रत्यय इति न्यायमाश्रित्य शङ्कते । नन्विति । अग्निर्माणवक इत्यत्र माणवकेऽग्निशब्दप्रयोगेऽप्यग्निमानयेत्यादिप्रयोगे प्रथमं वह्निप्रतीतेर्मुख्यमेव प्रथमं प्रतिभातीति मुख्यं पदव्युत्पत्तेर्मुख्यार्थतया सत्या सृष्टिरेष्टव्येत्यर्थः । मुख्यस्याङ्गीकारेऽपि सत्या सृष्टिर्न सिध्यति । सत्यासत्ये सत्यायाः सृष्टेः सृष्टिशब्दार्थत्वेनाप्रसिद्धत्वादिति परिहरति । नेत्यादिना । लौकिकानां मुख्यसृष्टेः सत्यसृष्टित्वेऽपि फलाभावान्न तत्र श्रुतितात्पर्यमित्याह । निष्प्रयोजनत्वाच्चेति । कथं वा सृष्टेरप्रसिद्धत्वमेव स्फुटयति । अविद्येति । गौणी स्वप्ने रथादिसृष्टिः । मुख्या जागरे घटादिसृष्टिः सर्वाप्यविद्यावस्थायामेव तस्यां सत्यामेव भावात् तदवस्थायां कादि सृष्टिः सम्भवति । तथा भूतस्यान्यथाभूतस्य स्वतः परतो वा वस्तुनोऽन्यथाभावसम्भवात्तद्व्यतिरेकेण च सृष्टेरयोगादित्यर्थः । वस्तुस्वरूपावबोधनया वास्तव्याः सृष्टेरश्लिष्टत्वे श्रुतिमनुकूलयति । यथाह्येति । सृष्टेरविद्याविद्यमानत्वेऽपि किं वस्तु विवक्षितमित्याशङ्क्योत्तरार्धं विभजते । तस्मादिति । निरवयवत्वं विभुत्वमित्यादियुक्तिः । तेनाद्वैतमेव श्रुतितात्पर्यगम्यं न द्वैतमिति फलितमाह । तद्द्वैतेति ॥२३॥

सम्भूतेरपवादाच्च सम्भवः प्रतिषिध्यते ।

---

त्वात्मैकत्वदर्शनमेव श्रुतिनिश्चितोऽर्थः । तत्र को मोहः कः शोकः एकत्वमनुपश्यत इत्यादिमन्त्रवर्णात् । मृत्योः स मृत्युमाप्नोतीति निन्दितत्वाच्च द्वैतादिभेददृष्टेः ॥२४॥

अन्धन्तमः प्रविशन्ति ये सम्भूतिमुपासत इति श्रुतेः सम्भूतेरुपास्यत्वापवादात्सम्भवः प्रतिषिध्यते । न हि परमार्थतः सम्भूतायां सम्भूतौ तदपवाद उपपद्यते । ननु विनाशेन सम्भूतेः समुच्चयविध्यर्थः सम्भूत्यपवादः । यथा-ऽन्धन्तमः प्रविशन्ति येऽविद्यामुपासते इति । सत्यमेव

---

मिथ्यात्वान्मायाशब्दस्य मिथ्यार्थत्वेनानुपपत्तिरित्यर्थः । तात्पर्यार्थमुक्त्वा तमेवाक्षरानुरोधेनाह । मायाभिरिति । पुरुरूप ईयत इति सम्बन्धः । मायामयी सृष्टिरित्यत्र हेत्वन्तरपरत्वेन तृतीयपादमवतारयति । अजायमान इति । अजायमानस्य बहुधा विजायमानत्वं विरुद्धमित्याशङ्क्य चतुर्थपादमुत्थापयति । तस्मादिति । अनृतस्य कथमेवंप्रकारस्तावत्‌मः स्यादित्याशङ्क्याह । तु मन्द इति । अवधारणरूपमर्थमेवाभिनयति । माययैवेति । तस्मादित्यमवधार्यते । तात्त्विके जन्मनि का सदुपपत्तिरित्याशङ्क्याह । न हीति । आत्मैकत्वज्ञानमेव दृष्टि-श्रुतितात्पर्यगम्यं दृष्टिस्तु तदपेक्षत्वादविपरीतेत्यत्र हेत्वन्तरमाह । फलवत्त्वाच्चेति ॥ तस्य फलवत्त्वे प्रमाणमाह । तत्रेति । एकत्वमाचार्योपदेशमनुपश्यत साक्षात्कुर्वतस्तस्यैकत्वसाक्षात्कारे सति शोकमोहोपलक्षितः संसारो न भवतीत्यर्थः । न केवलं विफलत्वाद्भेददृष्टिरविवक्षिता किन्तु निन्दितत्वेन निषिद्धत्वादनर्थकरत्वाच्चेत्याह । मृत्योरिति ॥२४॥

एकेन पुरुषेण सम्बध्यमाना अविद्यया समुच्चीयत इत्युच्यते। अतोऽन्यार्थत्वादमृतत्वसाधनं ब्रह्मविद्यामपेक्ष्य निन्दार्थ एव भवति सम्भूत्यपवादः। यद्यप्यशुद्धिवियोग हेतुरतन्निष्ठत्वात्। अत एव सम्भूतेरपवादात् सम्भूतेरापेक्षिकमेव सत्त्वमिति। परमार्थसदात्मैकत्वमपेक्ष्यामृताख्यः सम्भवः प्रतिषिध्यते। एवं मायानिर्म्मितस्यैव जीवस्याविद्यया प्रत्युपस्थापितस्याविद्यानाशे स्वभावरूपत्वात्परमार्थतः को न्वेनं जनयेत्। न हि रज्ज्वामविद्यारोपितं सर्पं पुनर्विवेकतो नष्टं जनयेत् कश्चित्। तथा न कश्चिदेनं जनयेदिति को

---

च्यपवादस्य समुच्चयविध्यर्थत्वे दृष्टान्तमाह। यथेति॥ अत्र खल्वविद्यायन्त्रितकर्मापवादो विद्याकर्म्मणोः समुच्चयविध्यर्थः स्थितो विद्याञ्चाविद्याञ्च यस्तद्वेदोभयं सहेति श्रवणादित्यर्थः। उक्तञ्चोद्यमनुजानाति। सत्यमिति। तर्हि सम्भूत्यपवादस्तदसत्त्वज्ञापको न भवतीत्युक्तं स्थितमेवेत्याशङ्क्य समुच्चयस्याविद्यायामवस्थितभवत्वाद्यदसत्त्वं सम्भूत्यादेर्निन्दाधीनमुक्तं तत्तदवस्थमेवेति व्याख्यानः समाह। तथापीति॥ यथाग्निहोत्रादेः शास्त्रीयस्य कर्म्मणोऽशास्त्रीयप्रवृत्तिरूपमृत्युतरणार्थत्वं तथा साधनाद्यैपचारूपमृत्युतरणार्थत्वं समुच्चयस्यापि वाच्यम्। तथा च सम्भूत्यादेरसत्त्वमविरुद्धमित्यर्थः। मृत्युतरणार्थत्वे संस्कारार्थत्वं कथमित्याशङ्क्याह। एवं हीति॥ कामचारकामवादकामभक्षणादिलक्षणस्वाभाविकप्रवृत्तिरूपाशुद्धिवियोगः संस्कारो यथा नित्याग्निहोत्रादि फलं तथा निष्कामेनानुष्ठितसमुच्चयफलं कामाद्याशुद्धिव्यावृत्तिरित्यर्थः॥ अविद्यया मृत्युं तीर्त्वेति मन्त्रे मृत्युतरणहेतुरविद्येति श्रवणात्। सम्भूत्यामृतमश्नुत इति च सम्भूतेरमृतत्वफलाभिलापात्कथं समुच्चयफलं मृत्योरतितरणमित्याशङ्क्याह। अत इति॥ यतो न सम-

सर्व्वमग्राह्यभावेन हेतुनाऽजं प्रकाशते ॥२६॥

---

पादितस्यात्मनो दुर्बोध्यत्वं मन्यमाना श्रुतिः पुनः पुनरुपायान्तरत्वेन तस्यैव प्रतिपिपादयिषया यद्यद्व्याख्यातं तत्सर्व्वं निह्नुते । ग्राह्यं जनिमद्बुद्धिविषयमपलपत्यर्थात् स एष नेति नेतीत्यात्मनोऽदृश्यतां दर्शयन्ती श्रुतिरुपायस्योपेयनिष्ठतामजानत उपायत्वेन व्याख्यातस्योपेयवद्ग्राह्यतामाभूदित्यग्राह्यभावेन हेतुना कारणेन निह्नुत इत्यर्थः। तत्रैवमुपायस्योपेयनिष्ठतामेव जानत उपेयस्य च नित्यैकरूपत्वमिति तस्य सबाह्याभ्यन्तरमजमात्मतत्त्वं प्रकाशते स्वयमेव ॥२६॥

---

व्याख्यातं मूर्त्तामूर्त्तादि सर्व्वमेव व्याख्यमग्राह्यं नेति नेतीति वीप्सया यतो निषेधति श्रुतिरतः स एष इत्युपक्रम्य प्रतिपादितस्यात्मतत्त्वस्य कूटस्थस्याविषयत्वेन प्रथमोपपत्तिरित्यर्थः । नेति नेतीति वीप्सा तात्पर्यमाह । सर्व्वेति ॥ रूपद्वयोपन्यासानन्तरं तन्निषेधानन्तरेण निर्व्विशेषवस्तुप्रतिपत्तेरयोगात्तत्प्रतिपत्त्या च पुरुषार्थपरिसमाप्तिगम्यमानादेशो निर्व्विशेषस्यात्मतत्त्वोपदेशस्यावसरः प्रस्तूयते । एवं प्रस्तुत्य नेति नेतीति वीप्सयाऽर्व्वस्य मूर्त्तामूर्त्तादिविशेषस्यारोपितस्य निषेधो दर्शितस्तेन चात्मा जिज्ञासितो विशिष्टो निर्दिष्ट इत्यर्थः । न चेदं मूर्त्तामूर्त्ताधिकारे प्रतिपादितमर्हति किमिति प्रवेशानन्तरं पुनः पुनरत्र प्रतिपाद्यते पुनरुक्तेरित्याशङ्क्य व्याख्यातमित्यादि व्याचष्टे । प्रतिपादितस्येति ॥ यद्यपि मूर्त्तामूर्त्तप्रकरणे प्रतिपादितमात्मतत्त्वं तथापि तस्य परमसूक्ष्मत्वात् दुर्ज्ञानत्वं मन्यते श्रुतिः । सा पुनरुपायविशेषमज्ञात्वाभिप्रायेण तस्यैव पुनः पुनः प्रतिपादनेच्छया यद्यदारोपितं तत्तदशेषमपह्नुत्यानिर्दिश्यमानमद्वयं निषेधतीत्यर्थः ॥ सर्व्वमित्यादि श्लोक-

सतो हि मायया जन्म युज्यते नतु तत्त्वतः ।

एवं हि श्रुतिवाक्यशतैः सबाह्याभ्यन्तरमजमात्मतत्त्वमद्वयं न ततोऽन्यदस्तीति निश्चितमेव । तद्युक्त्या चाधुनैतदेव पुनर्निर्द्धार्य्यत इत्याह । तत्रैतत् स्यात्सदा ग्राह्यमेव चेदसदेवात्मतत्त्वमिति । तन्न । कार्य्यग्रहणात् । यथा

बोधः स एष इति व्याचष्टे । बाह्यमिति । स एष इत्याद्या श्रुतिरदृश्यतामात्मनो विशेष निषेधमुखेन दर्शयन्ती यद् दृश्यं कार्य्यं मनसा वाचाञ्च गोचरीभूतं तदशेषमसदेव कथयति । सा हि परमार्थसदद्वयमिति न, यथा दृश्यस्य वस्तुत्वेनोपपद्यते तथा चानुपपत्तेर्दृश्यवर्गस्यावस्तुत्व सिद्धमित्यर्थः । ननु किमिति श्रुतिर्व्याख्यातं विशेषजातं निह्नुते षड्भवानन्यथापातादित्याशङ्क्याग्राह्यभावेनेत्यादि व्याकरोति । उपायस्येति । हे त्वा पेत्यादिना व्याख्यातस्य रूपप्रपञ्चस्याद्वितीयब्रह्मात्मभावपर्य्यवसायितामप्रतिपाद्यमानस्य ब्रह्मपदेशोपायत्वेनाभिमतस्यापि प्रपञ्चस्य वस्तुत्वेन ग्राह्यत्वाशङ्का या सा माभूदित्यशेषराहित्येनाद्वितीयब्रह्मस्वरूपनिर्द्धारणार्थमारोपितं प्रपञ्चं प्रतिषेधति श्रुतिरित्यर्थः । उपायस्य कल्पितत्वेन वस्तुत्वाभावादुपेयस्य च सदैकरूपत्वात् कथं तथाविधवस्तुप्रतिपत्तिरित्याशङ्क्याजमित्यादि व्याचष्टे । सतदोति । समारोपितस्य सर्व्वस्य निषेधादेव स्वात्मन्येव वस्तुत्वाभावनिश्चयादारोपितसर्वादेरधिष्ठानातिरेकेणाभावस्तदुपायस्य मूर्त्तादेरुपेयादद्वितीय ब्रह्मात्मतामेव प्रतिपद्यमानस्य ब्रह्मणश्च सदैकरूपत्वकूटस्थनित्यदृष्टिस्वभावत्वादि आमनन्त्यौपनिषदाधिकारिणः स्वयमेवान्यापेक्षामन्तरेणात्मतत्त्वमुक्तं विशेषणं प्रकाशि भवति । कल्पितस्य चोपायत्वं प्रतिबिम्बादिवदविरुद्धमित्यर्थः ॥१६॥

• आत्मतत्त्वमजमद्वितीयं परमार्थभूतम् । द्वैतन्तु मायाकल्पित

तत्त्वतो जायते यस्य जातं तस्य हि जायते॥२७॥

---

सतो मायाविनो मायया जन्मकार्य्यं एवं जगतो जन्मकार्य्यं गृह्यमाणं मायाविनमिव परमार्थं सन्तमात्मानं जगज्जन्म मायास्पदमेव गमयति । यस्मात्सतो हि विद्यमानात्कारणात् मायानिर्म्मितस्य हस्त्यादिकार्य्यस्येव जगज्जन्म युज्यते नासतः कारणात् । न तु तत्त्वत एवात्मनो जन्म युज्यते । अथवा सतो विद्यमानस्य वस्तुनो रज्ज्वादेः सर्पादिवन्मायया जन्म युज्यते न तु तत्त्वतो यथा तथाऽग्राह्यस्यापि सत एवात्मनो रज्जुसर्पवज्जगद्रूपेण मायया जन्म युज्यते । न तु तत्त्वत एवाजस्यात्मनो जन्म । यस्य पुनः परमार्थसदजमात्मतत्त्वं जगद्रूपेण

---

मसदिति प्रतिपादितम् । तत्रैव हेत्वन्तरमाह । सतो हीति ॥ यदात्मतत्त्वं सदा सदेकरूपं तस्य मायया जगदाकारेण जन्मयुक्तम् । मायाया दुर्निरूपार्थसमर्थनपटीयस्त्वात्परमार्थतत्त्वे कल्पमनेकरूपतया भेदमस्तु पारयति विरोधादित्यर्थः ॥ विपक्षे दोषमाह । तत्त्वत इति ॥ यस्य वादिनो मते मत्स्यैव परमार्थतो जगदात्मना जायते तस्याजस्य जायमानत्वप्रतिज्ञाया व्याहतत्वाज्जातस्यैव जायमानत्वे स्यादनवस्थेत्यर्थः । अद्वैतमावेदयन्त्या द्वैतनिषेधक श्रुत्या ह्यसत्त्वजडत्वादिपुरस्सरा च तथाविधया निर्द्धारितमर्थं श्लोकान्तरार्थकथनार्थमनुवदति ॥ एवमिति ॥ उक्तमेव वस्तु यत्नान्तरेण पुनर्निर्द्धारयितुमुत्तरमन्यमपश्चिदित्याह । अधुनेति ॥ पूर्वार्द्धं प्रश्नोत्तरत्वेन व्याख्याय यद्भवति । तत्त्वेति ॥ श्लोक सप्तम्या परामृश्यते । यत्र कदाचिदपि दृश्यते तदत्यन्तासदेव गगनविषाणादिवदेष्टव्यम् । प्रमाणाभावे प्रमेयासिद्धेरित्यर्थः ।

## असतो मायया जन्म तत्त्वतो नैव युज्यते ।

जायतेवादिनो न हि तस्य जातं जायत इति ग्रहीतुं शक्यं विरोधात् । ततस्तस्याजाज्जातं जायत इत्यापन्नम् । ततश्चानवस्थापाताज्जायमानत्वं न । तस्मादजमेकमेवात्मतत्त्वमिति सिद्धम् ॥२७॥

असद्वादिनामसतो भावस्य मायया तत्त्वतो वा न कथञ्चन जन्म युज्यते । अदृष्टत्वात् । न हि वन्ध्यापुत्रो

---

कार्यलिङ्गकानुमानवशादात्मतत्त्वस्याकारणत्वेन सत्त्वनिर्णयप्रसङ्गात् । नासत्त्वचोद्यमिति दूषयति । सतो हीति । सद्बुद्धोऽसमर्थं दृष्टान्तेन विवृणोति । यथेति । विमतं सदधिष्ठानं कार्यत्वात् सम्प्रतिपन्नवदित्यर्थः । उक्तेऽर्थे पूर्वार्द्धाक्षराणि योजयति । तस्मादिति । तत्त्वावकारणस्य सत्त्वमविवादमिति शेषः । नासत इति तस्य निःस्वभावत्वात्कारणत्वायोगादित्यर्थः । न त्विति । तथाभूतस्यान्यथाभूतस्य च जन्मयोगादित्यर्थः । सत इति पञ्चम्यन्तं पदं सद्भूता निमित्तकारणपरतया व्याख्यातं सम्प्रति सत इति षष्ठ्यन्तं परमार्थोपादानपरतया व्याख्यां करोति । यथ वेति । यथा रज्ज्वोः सर्पधारादाकारेण मायाकृतं जन्म तथैवाग्राह्यस्यापि सद्वस्त्वात्मतत्त्वस्य जगदात्मना जन्म मायामयं प्रतिपत्तव्यम् । जन्मरहितस्य वस्तुतो जन्मव्याघातादित्यर्थः । उत्तरार्द्धं विभजते । यस्येत्यादिना । मायिकं जन्म न तात्त्विकमिति स्थिते फलितमाह । तस्मादिति ॥२७॥

सत्पूर्वकं कार्यमिति न व्याप्तिः । असद्वादिभिरसतः सज्जन्माभ्युपगमादित्याशङ्क्याह । असत इति । न स्वतोऽसत्सद्भावो वा नासतः सदाकारेण जन्मेत्यर्थः । तत्र दृष्टान्तमाह । वन्ध्येति । पूर्वार्द्धं व्याक-

वन्ध्यापुत्रो न तत्त्वेन मायया वापि जायते ॥२८॥
यथा स्वप्ने द्वयाभासं स्पन्दते मायया मनः ।

मायया तत्त्वतो वा जायते । तस्मादसद्वादो दूरत एवानुपपन्न इत्यर्थः ॥ २८ ॥

कथं पुनः सतो माययैव जन्मेत्युच्यते । यथा रज्ज्वां विकल्पितः सर्पो रज्जुरूपेणावेक्ष्यमाणः सन् एवं मनः परमार्थविज्ञप्त्यात्मरूपेणावेक्ष्यमाणं सत् ग्राह्यग्राहकरूपेण द्वयाभासं स्पन्दते स्वप्ने मायया रज्ज्वामिव सर्पः ।

---

दोति । असद्वादिनामिति ॥ असतो निरूपस्य स्वरूपाभावादेव तत्त्वतोऽतत्त्वतो वा कार्य्याकारेण न युक्तं जन्मेत्यत्र हेतुमाह । असत्त्वादिति ॥ उत्तरार्द्धं व्याकुर्वन्नुक्तमेव दृष्टान्तेन स्पष्टयति । न हीति ॥ सद्वादो मायया सम्भवति । असद्वादस्तु तथापि नेति विशेषं दर्शयति । तस्मादिति ॥ कार्य्यकारणनिरूपणासत्त्वेति परामृश्यते ॥२८॥

सत एव मायया जन्मेत्युक्तमुपपादयति । यथेति ॥ सत एव मायया जन्मेत्युक्तम् ॥ अवस्थाद्वयेऽपि द्वैतस्य मनःस्पन्दितत्वस्वीकारादिति श्लोकव्यापारसंक्षेपमुत्थापयति । कथमिति ॥ अधिष्ठानरूपेण मनोऽपि सदिति सदृष्टान्तमुत्तरमाह । उच्यत इति ॥ मनसः सन्मात्रत्वेऽपि कथमनेकधा स्पन्दनमित्याशङ्क्य स्वप्नदृष्टान्तं व्याचष्टे । यथेति ॥ दार्ष्टान्तिकमाह । तथेत्यादिना ॥ मायाधीनं मनःस्पन्दनमवस्तुभूतमिति द्योतयितुमिवयुक्तं मनो ब्रह्म चेति कारणद्वयम् ॥२९

तर्हि द्वैतस्य सत्त्वमित्याशङ्क्य दृष्टान्तेन निराचष्टे ॥ अद्वयमिति ॥ दृष्टान्तभागं विभजते । रज्ज्वेति ॥ दृष्टान्ते चैतन्यातिरिक्तस्य

तथा जाग्रद्‌द्वयाभासं स्पन्दते मायया मनः॥२९॥
अद्वयञ्च द्वयाभासं मनः स्वप्ने न संशयः।
अद्वयञ्च द्वयाभासं तथा जाग्रन्न संशयः॥३०॥
मनोदृश्यमिदं द्वैतं यत् किञ्चित् सचराचरम्॥

---

तथा तद्वदेव जाग्रज्जागरिते स्पन्दते मायया मनः स्पन्दत इवेत्यर्थः ॥ २९ ॥

रज्जुरूपेण सर्प इव परमार्थत आत्मरूपेणाद्वयं सद्द्वयाभासं मनः स्वप्ने न संशयः। न हि स्वप्ने हस्त्यादि ग्राह्यं ग्राहकं चक्षुरादिद्वयं विज्ञानव्यतिरेकेणास्ति। जाग्रदपि तथैवेत्यर्थः। परमार्थसद्विज्ञानमात्राविशेषात् ॥३०॥

रज्जुसर्पवद्विकल्पनारूपं द्वैतरूपेण मन एवेत्युक्तम्। तत्र किं प्रमाणमित्यन्वयव्यतिरेकलक्षणमनुमानमाह। कथं तेन हि मनसा विकल्प्यमानेन दृश्यं मनोदृश्यमिदं द्वैतं सर्वं मन इति प्रतिज्ञा। तद्भावे भावात्तदभावेऽभावात्।

---

ग्राह्यग्राहकभेदेन मनःस्पन्दितस्यासत्त्वं साधयति। न हीति। तथैव जागरितेऽपि परमार्थात्मस्वरूपेण द्वयं सन्मनो ग्राह्यग्राहकद्वैताकारेणावभासते। यथा च परमार्थसतो विज्ञानमात्रात्स्वप्नजाग्रतोरविशेषाभावात्तस्मिन्नधिष्ठाने मायाकल्पितं मनः स्पन्दते। द्वयाकारविकल्पीकारात्। न कारणद्वयं मद्वितत्त्वमित्याह। जाग्रदपीति ॥ ३० ॥

मनोमात्रं द्वैतमित्यत्र प्रमाणमाह। मनोदृश्यमिति। इत्त

**मनसो ह्यमनीभावे द्वैतं नैवोपलभ्यते ॥३१॥**
**आत्मसत्यानुबोधेन न सङ्कल्पयते यदा ।**

---

मनसो ह्यमनीभावे निरुद्धे विवेकदर्शनाभ्यासवैराग्याभ्यां रज्ज्वामिव सर्पे लयङ्गते वा सुषुप्ते द्वैतं नैवोपलभ्यत इत्यभावात्सिद्धं द्वैतस्यासत्त्वमित्यर्थः ॥३१॥

कथं पुनरयं मनोभाव इति । उच्यते । आत्मैव सत्यमात्मसत्यं मृत्तिकावत् । वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमिति श्रुतेः । तस्य शास्त्राचार्योपदेशमन्ववबोध आत्मसत्यानुबोधः । तेन सङ्कल्प्याभावात्तया न सङ्क-

---

सत्तामनूद्य श्लोकतात्पर्यमाह । रज्ज्वामिति ॥ यथा रज्जुः सर्परूपेण विकल्प्यते तथा मनो द्वैतरूपेण विकल्पनात्मकम् । तच्चाविद्याकल्पितमित्युक्तेऽर्थे प्रमाणापेक्षायां विशिष्टमनुमानमुपन्यस्यतीत्यर्थः ॥ तदेव प्रश्नपूर्वकं प्रकटयन् प्रथमार्धाक्षराणि व्याचष्टे । कथमित्यादिना ॥ विमतं मनोमात्रं सत् । भावे नियतभावत्वात् । यथा मृद्भावे नियतभावो मृन्मात्रो घटादिरित्यनुमानमाचरयति । द्वैतमिति ॥ उक्तमेव व्यतिरेकं स्फोरयन् द्वितीयार्धं विभजते । मनसो हीति ॥ समाधिस्वापयोर्द्वैतस्यानुपलम्भेऽपि मानसत्त्वमित्याशङ्क्य मानाधीना मेयसिद्धिरित्यभिप्रेत्याह । इत्यभावादिति ॥३१॥

मनसो यदमनस्त्वमुक्तं तदुपपादयति । आत्मेति ॥ समाधिस्वापयोरननुभवेऽपि मनसः स्वरूपेण नित्यत्वादमनस्त्वमित्याक्षिपति । कथमिति ॥ सङ्कल्पो हि मनसो व्यावहारिकं रूपम् । सङ्कल्पश्च सङ्कल्प्यापेक्षत्वात् । तदभावे न भवति । सत्यात्मैक्यावगमे च सङ्कल्प्याभावान्मनसो मनस्त्वं न वर्तते तथापि स्फुरति चेदात्मैवेति न विवेकिदृष्ट्या मनो नामास्तीति श्लोकाक्षरैरुत्तरमाह । उच्यत इति ॥ तस्यैव सत्यत्वे

ब्रह्म ज्ञेयमजं नित्यमजेनाजं विबुध्यते ॥२३॥
निगृहीतस्य मनसो निर्विकल्पस्य धीमतः ।

तदिदं ब्रह्म ज्ञेयं औष्ण्यमग्नेरिवाग्निवदभिन्नं । तेनात्मस्वरूपेणाजेन ज्ञानेनाजं ज्ञेयमात्मतत्त्वं स्वयमेव विबुध्यते अवगच्छति नित्यप्रकाशस्वरूप इव सविता । नित्यविज्ञानैकरसघनत्वान्न ज्ञानान्तरमपेक्षत इत्यर्थः ॥२३॥

आत्मसत्यानुबोधेन सङ्कल्पमकुर्वत् बाह्यविषयाभावे निरिन्धनाग्निवत्प्रशान्तं निगृहीतं निरुद्धं मनो भवतीत्युक्तम्। एवञ्च मनसो ह्यमनीभावे द्वैताभावश्चोक्तः । तस्यैवं निगृहीतस्य निरुद्धस्य मनसो निर्विकल्पस्य सर्व्वकल्पनावर्जितस्य धीमतो विवेकवतः प्रचरणं प्रचारो यः स तु प्रचारविशेषेण ज्ञेयो योगिभिः । ननु सर्व्वप्रत्ययाभावे यादृश सुषुप्तिस्थस्य

नानुद्रष्टव्यमिति श्रुतेः । मनसश्चासत्त्वाङ्गीकारादित्यर्थ । स्वरूपभूतेन ज्ञानेनैवात्मनोऽवबोधसम्भवाद्वातिरिक्तं मनैस्यपेक्षेत्युत्तरमाह । उच्यत इति । ज्ञेयाभिन्नं ज्ञानमित्यत्र दृष्टान्तमाहरति । न हीति । सायन्नौ तदात्मकमौष्ण्यं न परिलुप्यते तथेत्युदाहरति । अग्न्युष्णवदिति ॥ प्रश्नार्थं ब्रह्मेत्यादिश्रुतिसङ्गृहार्थमादिपदम् । ज्ञेयाभिन्नमित्युक्तं स्फुटयति । तस्येवेति । आत्मनः स्वयमेवावगतिरूपत्वात्प्रमाणान्तरापेक्षत्वेनमर्थं दृष्टान्तेन स्फुटयति । नित्येति ॥२३॥

मोक्षसाधनस्य ध्यानफलं स्वर्गवत् न परोक्षं किन्तु दृष्टिवत्प्रत्यक्षं ॥ अतश्च प्रकृतध्यानफलस्य मनोनिरोधस्य प्रत्यक्षत्वं प्रसङ्गं करोति । निगृहीतस्येति । न तस्य विशेषत्व सुषुप्ते प्रसिद्धत्वादित्याशङ्काह । सुषुप्त इति । श्लोकाक्षराणि व्याकर्तुं हस्तं कीर्त्तयति । आत्मेति । तस्य

प्रचारः स तु विज्ञेयः सुषुप्तेऽन्यो न तत्समः ॥३४॥

---

मनसः प्रचारस्तादृश एव निरुद्धस्यापि प्रत्ययाभावाविशेषात्किं तत्र विज्ञेयमिति। अत्रोच्यते। नैवं। यस्मात्सुषुप्तेऽन्यः प्रचारोऽविद्यामोहतमोग्रस्तस्यान्तर्लीनानेकानर्थप्रवृत्तिबीजवासनावतो मनस आत्मसत्यानुबोधहुताशविप्लुष्टाविद्याद्यनर्थप्रवृत्तिबीजस्य निरुद्धस्यान्य एव प्रशान्तसर्वक्लेशरजसः स्वतन्त्रः प्रचारः। अतो न तत्समः। तस्माद्युक्तः स विज्ञातुमित्यभिप्रायः ॥३४॥

---

सत्यस्य प्रागुक्तानानुबोधेन सम्यग्ज्ञानेन ग्राह्यस्य विषयस्य सङ्कल्पस्याभावे निरालम्बनस्य प्रचारोऽप्यस्य च मनः सङ्कल्पकर्माभावान्निरुद्धं सम्भवतीत्यर्थः ॥३३॥ निर्विषयं मनः शाम्यतीत्यत्र दृष्टान्तमाह। निरिन्धनेति। निरुद्धे मनसि समस्तध्यात्मनो मनःस्पन्दितस्य द्वैतस्याभावमुक्तं स्मारयति। एवञ्चेति। एवं शब्दमनूद्य पादत्रयस्यार्थमाह। तस्येति। एव विषयाभावेनेति यावत्। आत्मसत्यानुबोधो विवेकस्तस्यार्थः। प्रत्यगात्मत्वेन पर्यवसानं प्रचारस्तस्य विद्वत्प्रत्यक्षत्वं विपश्चिता योगिभिरित्युक्तं। चतुर्थपादव्यावर्त्यमाशङ्कामाह। नन्विति। निरुद्धस्यापि मनसः प्रचार इति सम्बन्धः। विषयप्रत्ययाभावस्य निरोधस्वापे च विशेषाभावादिति हेत्वर्थः। तत्र प्रचारे प्रसिद्धे सतीति यावत्। चतुर्थपादमुत्तरत्वेनावतारयति। अत्रेति। निरुद्धस्य मनसः सुषुप्तस्य च प्रचारस्य तुल्यत्वात् न तत्र ज्ञातव्यमस्तीत्युक्तं प्रत्याह। नैवमिति। विद्याभावसाम्येऽपि मोहविषयस्य विनाभेन व्यावर्त्तयति तमोविशेषणम् अन्तर्लीना सूक्ष्मा अनेकानर्थफलानां प्रवृत्तीनां बीजभूता वासना यस्मिन्मनसि तस्येति सुषुप्तस्य विशेषणम्। आत्मैव सत्यस्तस्यानुबोधो यो आग्नात स एव हुताशोऽग्निस्तेन विप्लुष्टान्यविद्यादीन्यनेका-

लीयते हि सुषुप्ते तन्निगृहीतं न लीयते।
तदेव निर्भयं ब्रह्म ज्ञानालोकं समन्ततः ॥३५॥

प्रचारभेदे हेतुमाह। लीयते हि। यस्मात्सर्वाभिरविद्यादिप्रत्ययबीजवासनाभिः सह तमोरूपमविशेषरूपं बीजभावमापद्यते तद्विवेकविज्ञानपूर्वकं निरुद्धं निगृहीतं सत् न लीयते तमोबीजभावं नापद्यते तस्माद्युक्तः प्रचारभेदः सुषुप्तस्य समाहितस्य मनसः। यदा ग्राह्यग्राहकाविद्याकृतमलद्वयवर्जितं तदा परमद्वयं ब्रह्मैव तत्संवृत्तमित्यतस्तदेव निर्भयम्। द्वैतग्रहणस्य भयनिमित्तस्याभावात्। शान्तमभयं ब्रह्म। यद्विद्वान्न बिभेति कुतश्चन। तदेव विशेष्यते ज्ञप्तिर्ज्ञानमात्मस्वभावश्चैतन्यं तदेव ज्ञानमालोकः प्रकाशो यस्य तद्ब्रह्म ज्ञानालोकं विज्ञानैकर-

सर्वपर्यन्तप्रवृत्तीनां बीजानि यस्य तस्येति निरुद्धस्य विशेषणं प्रकर्षेण शान्तं सर्वक्लेशात्मकं रजो यस्येति तस्यैव विशेषणान्तरम्। एतन्मो ब्रह्मस्वरूपावस्थानात्मक इत्यर्थः। यथोक्तस्य प्रचारस्य सुषुप्तप्रचारविलक्षणस्य दृष्टान्तत्वे स्थिते फलितमाह। तस्मादिति ॥३४॥

मनसः सुषुप्तस्य समाहितस्य च प्रचारभेदोऽस्तीत्युक्तं तत्र हेतुमाह। लीयते हीति। समाहितस्य मनसो द्वैतवर्जितस्य स्वरूपं कथयति। तदेवेति। पूर्वार्द्धस्य तात्पर्यमाह। प्रचारेति। मनसः सुषुप्तस्य समाहितस्य चेति वक्तव्यम्। यस्मादित्यस्य तस्मादित्युत्तरेण सम्बन्धः। अविद्यादीत्यादिशब्देनास्मितारागादयो गृह्यन्ते। सुषुप्ते मनसो वासनाभिः सह लयप्रकारं कथयति। तमोरूपमिति। आपद्यत इति सम्बन्धः। जाग्रद्रूपमवस्थान्तरेऽपि तुल्यमित्यतो विशिनष्टि। अवि-

अजमनिद्रमस्वप्नमनामकमरूपकम् ।

---

अभयमित्यर्थः । समन्ततः समन्तात्सर्वतो व्योमवद्व्याप्तेरन्तर्बहिर्व्यापकमित्यर्थः ॥३५॥

जन्मनिमित्ताभावात्सबाह्याभ्यन्तरमजम् । अविद्यानिमित्तं हि जन्म रज्जुसर्पवदित्यवोचाम । सा चाविद्याऽऽत्मसत्यानुबोधेन निरुद्धा । यतोऽजं अत एवानिद्रम् । अविद्यालक्षणाऽनादिमायानिद्रा । स्वापात्प्रबुद्धोऽद्वयस्वरूपेणात्मना, अतोऽस्वप्नम् । अप्रबोधकृते ह्यस्य नामरूपे, प्रबोधाच्च ते रज्जुसर्पवद्विनष्टे । न नाम्नाऽभिधीयते ब्रह्म रूप्यते वा न

---

तेनेत्यादिना । एवमाद्यं पादं व्याख्याय व्याचष्टे । तदिति । पूर्वविभागविभजनेन फलितमाह । तस्मादिति । तदेव निर्भयं ब्रह्मेत्यस्यार्थमाह । यदेति । समाहितं मनो ग्राहकमित्यविद्याकृतं ग्रहणद्वयं तेन वर्जितं यदा तदेति सम्बन्धः । मनसो ब्रह्मत्वे निर्भयत्वं तस्य फलितमाह । स्मृत इति । तत्र हेतुमतः शब्देन सूचितमाह । द्वैतेति । तदुपशान्तं ब्रह्माभयमित्युक्ते तस्याभयत्वे प्रमाणं सूचयति । यद्विद्वानिति । ननु यथोक्तं ब्रह्म प्रकाशते न वा प्रकाशते । प्रकाशते चेद्घटादिवन्मेयत्वमद्वैतव्याघातः । न चेत् प्रकाशते पुरुषार्थत्वासिद्धिरिति तत्राह । तदेवेति । तस्य ब्रह्मत्वसिद्धये परिच्छिन्नत्वं व्यवच्छिनत्ति । समन्तत इति ॥३५॥

प्रकृतमेव प्रकारान्तरे निरूपयति । अजमित्यादिना । न च तस्मिन्निरूपाधिके ब्रह्मणि घटते कश्चिदप्युपचारोऽस्तीत्याह । नेति ॥ अजत्वमुपपादयति । जन्मेति । किं तज्जन्मनिमित्तं यदभावादजत्वमुपपाद्यते तदाह । विद्येति । कुतस्तर्हि तन्निवृत्त्या अजत्वसिद्धिरित्याह । सा चेति ॥ निमित्तनिवृत्त्या अजत्वसिद्धेर्युक्तमनिद्रत्वम् ॥ निद्रा

सकृद्विभातं सर्व्वज्ञं नोपचारः कथञ्चन ॥३६॥

---

केनचित्प्रकारेणेत्यनामकमरूपकञ्च तत्। यतो वाचो निवर्त्तन्त इत्यादिश्रुतेः। किञ्च सकृद्विभातं सदैव विभातं सदा भारूपमग्रहणान्यथाग्रहणाविर्भावतिरोभाववर्जितत्वात्। ग्रहणाग्रहणे हि रात्र्यहनी तमश्चाविद्यालक्षणं सदा ऽप्रभातत्वे कारणं तदभावात् नित्यचैतन्यभारूपत्वाच्च युक्तं सकृद्विभातमिति। अत एव सर्व्वञ्च तत् स्वरूपञ्चेति सर्व्वज्ञं। नेह ब्रह्मण्येवंविधे उपचरणमुपचारः कर्त्तव्यः। यथाऽन्येषामात्मस्वरूपव्यतिरेकेण समाधानाद्युपचारः। नित्यशुद्धबुद्धमुक्तस्वभावाद्ब्रह्मणः कथञ्चन न कथञ्चिदपि कर्त्तव्यसम्भवोऽविद्यानाशे इत्यर्थः॥३६॥

---

शब्देनाविद्याभिलापादित्याह। अत एवेति। विशेषणान्तरं साधयति। अविद्यालक्षणेति। उत्तरविशेषणद्वयं विवृणोति। अप्रबोधेति। ब्रह्मणो नामरूपवत्त्वाभावे प्रमाणमाह। यत इति। विशेषणान्तरमाह। किञ्चेति। सदाभारूपत्वे हेतुमाह। अग्रहणेति। जीवे ह्युपाधिस्थे अहंरूपग्रहणानुदये तिरोभावः कर्त्ताहमित्यन्यथाग्रहणोदये चाविर्भावो भवति तदभावाद्ब्रह्मस्वरूपमेव सदा ब्रह्मेत्यर्थः। श्रुत्याचार्य्योपदेशात् पूर्व्वं ब्रह्माग्रहणं तदुपदेशादूर्द्ध्वं तद्ग्रहणमिति प्रसिद्धे ब्रह्मण्यपि ग्रहणाग्रहणे स्यातामित्याशङ्क्याह। ग्रहणेति। यथा पश्चिमेतरया रात्र्यहनी न स्तः किन्तूदयास्तमयकल्पनया कल्प्येते तथा ब्रह्मस्वभावालोचनया ग्रहणाग्रहणे न विद्येते किन्तूपाधिद्वारा कल्प्येते। तेन ब्रह्मणः सदाभारूपत्वमविरुद्धमित्यर्थः। इतश्च निरुपाधिकं ब्रह्म सदा विभातमेषितव्यमित्याह। तमश्चेति। अप्रभातत्व

सर्वाभिलापविगतः सर्वचिन्तासमुत्थितः ।
सुप्रशान्तः सकृज्ज्योतिः समाधिरचलोऽभयः ॥३७॥

---

अनामकत्वाद्युक्तार्थसिद्धये हेतुमाह । अभिलप्यतेऽनेनेति अभिलापो वाक्करणं सर्वप्रकारस्याभिधानस्य तस्माद्विगतः । वागत्रोपलक्षणार्था सर्वबाह्यकरणवर्जित इत्येतत् । तथा सर्वचिन्तासमुत्थितः । चिन्त्यतेऽनयेति चिन्ता बुद्धिस्तस्याः समुत्थितोऽन्तःकरणविवर्जित इत्यर्थः । अप्राणो ह्यमनाः शुभ्र इति श्रुतेः । अक्षरात्परतः परः । यस्मात्सर्वविषयवर्जित अत. सुप्रशान्तः । सकृज्ज्योतिः सदैव ज्योतिरात्मचैतन्यस्वरूपेण समाधि. समाधिनिमित्तप्रज्ञावगम्यत्वात् । समाधीयतेऽस्मिन्निति वा समाधिः । अचलोऽविक्रियः । अत एवाभयो विक्रियाभावात् ॥३७॥

---

इति छेद ॥ तदभावो मनसोऽद्वैतं तत्र सम्बन्धाभाव । उक्तमेव हेतूकृत्य विशेषणान्तरं विभजयति । अत एवेति ॥ विदुषो निरुद्धमनसो ब्रह्मस्वरूपावस्थानमुक्तम् । ये तु विद्वांसोऽपि समाध्यादि कर्तव्यमापद्यन्ते तान् प्रत्याह । नेहेति । एवंविधत्वविरूपाधिकत्वमुपचारः समाध्यादि । निरुपाधिके ब्रह्मणि विदुषो न कर्तव्यमस्तीत्युक्तमर्थं वैधर्म्योदाहरणेन साधयति । यथेत्यादिना ॥ अन्येषामनात्मविदामिति यावत् । अविद्यादशायामेव सर्वो व्यवहारो विद्यादशायामविद्याया असत्त्वान्न कोऽपि व्यवहारः । बाधितानुवृत्त्या तु व्यवहाराभाससिद्धिरित्यर्थः ॥३६॥

विद्यानेव ब्रह्मण्यङ्गीकृत्य प्रकृतं ब्रह्म पुनिर्गुणत्वेन निर्दिशति । सर्वेति ॥ श्लोकस्य तात्पर्यमाह । अनामेति ॥ अन्तरिति प्रकृतपदोपादाने तर्हि सर्वकरणवर्जितत्वस्यैव विद्वत्वादुत्तरविशेषणमनर्थक-

**ग्रहो न तत्र नोत्सर्गश्चिन्ता यत्र न विद्यते।**

---

यस्मादुक्तेन समाधिरचलोऽभयं इत्युक्तम् अतो न तत्र तस्मिन् ब्रह्मणि ग्रहो ग्रहणम् उपादानं नोत्सर्ग उत्सर्जनं हानं वा विद्यते। यत्र हि विक्रिया तद्विषयत्वं वा तत्र हानोपादाने स्यातां न तत् द्वयमिह ब्रह्मणि सम्भवति। विकारहेतोरन्यस्याभावान्निरवयवत्वाच्च। अतो न तत्र हानोपादाने इत्यर्थः। चिन्ता यत्र न विद्यते। सर्व्वप्रकारैव चिन्ता न सम्भवति। यत्रामनस्त्वं कुतस्तत्र हानोपादाने इत्यर्थः। यदैवात्मसत्यानुबोधो जातस्तदैवात्मसंस्थं विषयाभावादग्न्युष्णवदात्मन्येव स्थितं

---

मिथ्याग्रहमाह। सर्व्वं वाध्येति॥ बाह्यकरणसम्बन्धराहित्यवदन्तःकरणसम्बन्धराहित्यं दर्शयति। तथेति॥ उभयविधकरणसम्बन्धवैधुर्य्येणात्मनः शुद्धत्वे प्रमाणमाह। अप्राण इति॥ कारणसम्बन्धराहित्यमाह। अजरादिति॥ तस्य परत्वं कार्य्यमेवत्वा द्रष्टव्यम्। उक्तं हेतुरूप्य विशेषणान्तरं विशदयति। यस्मादिति॥ अस्मिन् परस्मिन्नात्मनि समाधीयते निक्षिप्यते जीवस्तदुपाधिर्व्वेति समाधिः परमात्मा। समाधिनिमित्तया प्रज्ञया तस्यावगम्यत्वात् वा समाधिरवगन्तव्यम्॥ अत एवेत्युक्तं स्फुटयति। विक्रियेति॥३७॥

प्रकृते ब्रह्मण्यविक्रिये विधिनिषेधाधीनयोर्व्वैदिकयोर्व्वा लौकिकयोर्व्वा हानोपादानयोरनवकाशत्वमित्याह। ग्रहो नेति॥ मनोविषयत्वाभावाच्च ब्रह्मणि तयोरवकाशो नास्तीत्याह। चिन्तेति॥ यथोक्ते ब्रह्मणि ज्ञाते फलितमाह। आत्मेति॥ प्रकरणादौ प्रतिज्ञातमुपसंहरति। अजातीति॥ किमिति लौकिकौ वैदिकौ वा ग्रहोत्सर्गौ ब्रह्मणि न भवतस्तत्राह। यस्मादिति॥ उक्तमेवार्थमुपपादयति।

आत्मसंस्थं तदा ज्ञानमजाति समतां गतम् ॥३८॥
अस्पर्शयोगो वै नाम दुर्दर्शः सर्वयोगिभिः ।

ज्ञानम्। अजाति जातिवर्जितम्। समतां गतं परं साम्यमापन्नं भवति। यदादौ प्रतिज्ञातमतो वक्ष्याम्यकार्पण्यमजाति समतां गतमिति। इदं तदुपपत्तितः शास्त्रतश्चोक्तमुपसंह्रियते। अजाति समतां गतमित्येतस्मादात्मसत्यानुबोधात् कार्पण्यविषयमन्यत्। यो वा एतदक्षरं गार्ग्यविदित्वास्माल्लोकात् प्रैति स कृपण इति श्रुतेः। प्राप्यैतत् सर्वः कृतकृत्यो ब्राह्मणो भवतीत्यभिप्रायः ॥३८॥

यद्यपीदमित्थं परमार्थतत्त्वम् अस्पर्शयोगो नामायं

---

यत्र हीति। तत्रापि विक्रियाभावे हेतुमाह। विकारेति। तस्य विक्रियाविषयत्वाभावे हेतुं कथयति। निरवयवत्वाच्चेति। विक्रियायास्तद्विषयत्वस्य चाभावे फलितमाह। अत इति। द्वितीयं पादमवतार्य व्याचष्टे। चित्तेत्यादिना। तृतीयं पादं विभजते। यदैवेति। चतुर्थपादं व्याकरोति। अजातीति। नन्विदं प्रकरणादावुक्तं किमर्थं पुनरिहोच्यते तत्राह। यदादाविति। ननु यद्यप्यादौ पूर्वं तत्त्वज्ञानमुक्तं न त्वकार्पण्यं तत्कथमकार्पण्यं वक्ष्यामीत्युपक्रान्तस्यात्रोपसंहारः सम्भवतीत्याशङ्क्य तत्त्वज्ञानस्यैवाकार्पण्यरूपत्वादुक्तोपसंहारसिद्धिरित्याह। एतस्मादिति। तत्त्वज्ञानातिरिक्तं ज्ञानं कार्पण्यविषयमित्यत्र लिङ्गं दर्शयति। यो वा इति। तत्त्वज्ञानराहित्ये संसारापत्तिमुक्त्वा तद्वत्त्वे फलितमाह। प्राप्येति ॥३८॥

परमार्थभूतस्वरूपस्य ज्ञानकथनेन छेददैतदर्शनं किमिति तर्हि सर्वैरेव नाद्रियते तत्राह। अस्पर्शेति। परमार्थतत्त्वं कर्मनिष्ठानां

योगिनो बिभ्यति ह्यस्मादभये भयदर्शिनः ॥३९॥

सर्वसम्बन्धाख्यस्पर्शवर्जितत्वादस्पर्शयोगो नाम वै स्मर्यते प्रसिद्ध उपनिषत्सु । दुःखेन दृश्यत इति दुर्दर्शः सर्वयोगिभिर्वेदान्तविज्ञानरहितैः सर्वयोगिभिरात्मसत्यानुबोधायासलभ्य एवेत्यर्थः । योगिनो बिभ्यति ह्यस्मात्सर्वभयवर्जितादप्यात्मनाशरूपमिमं योगं मन्यमाना भयं कुर्वन्ति अभयेऽस्मिन् भयदर्शिनो भयनिमित्तात्मनाशदर्शनशीला अविवेकिन इत्यर्थः ॥३९॥

बहिर्मुखानां दुर्दर्शमित्यत्र हेतुमाह । योगिन इति । यदुक्तं तत्त्वज्ञानं स्वरूपावस्थानफलकमिति तदङ्गीकरोति । यद्यपीति । परमार्थतत्त्वं ब्रह्मेदं प्रत्यग्भूतम् । स्वं प्रागुक्तपरिपाट्या कूटस्थसच्चिदानन्दात्मकं यद्यपि तत्त्वज्ञानात् प्राप्यते तथापि मूढस्तदात्मनिष्ठा न भवन्तीति शेषः । यस्य तत्त्वानुभवस्य स्वरूपावस्थानं फलमुक्तं तमिदानीं विशिनष्टि । अस्पर्शेति । तत्र वर्णाश्रमादिधर्मेण पापादिमलेन च सम्बन्धो न भवत्यस्मादित्यद्वैतानुभवः स्पर्शः । स एव योगो जीवस्य ब्रह्मभावेन योजनादित्याह । सर्वेति । नामेति निपातस्य पर्यायं गृहीत्वा विवक्षितमर्थमाह । नामेत्यादिना । उपनिषत्सु न लिप्यते कर्मणा पापकेनेत्याद्यासु । दुःखं श्रवणमननादिलक्षणम् । योगिशब्दस्य ज्ञानिविषयत्वं व्यावर्तयति । वेदान्तेति । कैस्तर्हि यथोक्तस्यानुभवस्य लभ्य-

मनसो निग्रहायत्तमभयं सर्वयोगिनाम् ।
दुःखक्षयः प्रबोधश्चाऽप्यक्षया शान्तिरेव च ॥४०॥

---

येषां पुनर्ब्रह्मस्वरूपव्यतिरेकेण रज्जुसर्पवत्कल्पितमेव सर्वमिन्द्रियादि च न परमार्थतो विद्यते तेषां ब्रह्मस्वरूपाणामभयं मोक्षाख्या चाक्षया शान्तिः स्वभावत एव सिद्धा नान्यायत्ता नोपचारः कथञ्चनेत्यवोचाम। ये त्वतोऽन्ये योगिनो मार्गगा हीनमध्यमदृष्टयो मनोऽन्यदात्मव्यतिरिक्तमात्मसम्बन्धि पश्यन्ति तेषामात्मसत्यानुबोधरहितानां मनसो निग्रहायत्तमभयं सर्वेषां योगिनाम्। किञ्च दुःखक्षयोऽपि। न ह्यात्मसम्बन्धिनि मनसि प्रचलिते दुःखक्षयोऽस्त्यविवेकिनाम्। किञ्चात्मप्रबोधोऽपि मनोनिग्रहायत्त एव। तथाऽक्षयापि मोक्षाख्या शान्तिस्तेषां मनोनिग्रहायत्तैव ॥४०॥

---

उत्तमदृष्टीनामद्वैतदर्शनम् अद्वैतदृष्टिफलञ्च मनोनिरोधमुक्त्वा मन्ददृष्टीनां मनोनिरोधाधीनमात्मदर्शनमुपन्यस्यति। मनस इति। अभयनिमित्तमेवाभयनिवृत्तिसाधनमात्मदर्शनमुच्यते। सर्वयोगिनां सर्वेषां योगिनां कर्मानुष्ठाननिष्ठानां बुद्धिपुरःसरमित्यर्थः। मनोनिरोधाधीनं प्रशममनूद्य तत्फलं कैवल्यं कथयति। दुःखेति। श्लोकस्य विषयं परिशिनष्टि। येषामिति। अभयं भयराहित्यम् अनन्यासात्मकमित्यर्थः। उक्तलक्षणा शान्तिर्निरतिशयानन्दाभिव्यक्तिः स्वभावतो विद्यास्वरूपसामर्थ्यादित्यर्थः। विदुषां जीवन्मुक्तानां मुक्तिः सिद्धत्वात् न साधनापेक्षेत्याह। नान्यायत्तेति। तत् वाक्योपक्रममनुकूलयति।

उत्सेक उदधेर्यद्वत् कुशाग्रेणैकबिन्दुना ।
मनसो निग्रहस्तद्वद्भवेदपरिखेदतः ॥४१॥
उपायेन निगृह्णीयाद्विक्षिप्तं कामभोगयोः ।

मनोनिग्रहोऽपि तेषां उदधेः कुशाग्रेणैकबिन्दुना उत्सेचनेन शोषणव्यवसायवत् व्यवसायवतामनवसन्नान्तःकरणानामनिर्वेदादपरिखेदतो भवतीत्यर्थः ॥४१॥

किमपरिखिन्नव्यवसायमात्रमेव मनोनिग्रह उपायो नेत्युच्यते । अपरिखिन्नव्यवसायवान् सन् वक्ष्यमाणेनोपा-

---

नेत्यादिना ॥ उक्तेभ्यो ज्ञानवद्भ्योऽधिकारिभ्यो व्यतिरिक्तानधिकारिणोऽवतारयति । ये त्विति ॥ योगिनः सकलानुष्ठायिनस्तदनुष्ठानादेव सन्मार्गगामिनस्तेषामपि तत्त्वज्ञानं कथञ्चिदुपजातं चेदलं मनोनिग्रहेणेत्याशङ्क्याह । तेषामिति ॥ अभयं तदेव तत्त्वज्ञानम् ॥ दुःखनिवृत्तिरपि मनोनिग्रहमपेक्ष्य भवतीत्याह । किञ्चेति ॥ तदेव व्यतिरेकमुखेन स्फोरयति । न हीति ॥ इतश्च मनो निग्रहीतव्यमित्याह । किञ्चेति ॥ अभयमित्यत्र सूचितं स्पष्टं विवृणोति । आत्मेति ॥ इतश्च मनोनिग्रहोऽर्थवानित्याह । तथेति ॥ तेषां साधकानां मुमुक्षूणामिति यावत् ॥४०॥

कथं मुमुक्षूणां जिज्ञासूनां मनोनिग्रहः सिध्येदित्याशङ्क्याह । उत्सेक इति ॥ दृष्टान्तदार्ष्टान्तिकभूतश्लोकनिविष्टावर्धौ व्याचष्टे । मनोनिग्रहोऽपीति ॥ तेषां व्यवसायवताम् उद्योगभागिनामनुद्वेगवतामिति सम्बन्धः । चक्षुषो निमीलने तमो दृश्यते । तस्य च उन्मीलने घटाद्येवोपलभ्यते । न कदाचिदपि अक्ष्णोरुद्वेगपरिवर्जनात् । प्रागुदीरितानां मनोनिग्रहः सम्भवति तदाह । अपरिखेदत इति ॥४१॥

सुप्रसन्नं लये चैव यथा कामो लयस्तथा ॥४२॥
दुःखं सर्वमनुस्मृत्य कामभोगान्निवर्त्तयेत् ।

येन कामभोगविषयेषु विक्षिप्तं मनो निगृह्णीयात् निरुन्ध्यात् आत्मन्येवेत्यर्थः । किञ्च लीयतेऽस्मिन्निति सुषुप्तो लयस्तस्मिन् लये च सुप्रसन्नम् आयासवर्जितमपि इत्येतत् निगृह्णीयादित्यनुवर्त्तते । सुप्रसन्नञ्चेत् । कस्मान्निगृह्यत इति । उच्यते । यस्माद्यथा कामोऽनर्थहेतुस्तथा लयोऽपि । अतः कामविषयस्य मनसो निग्रहवल्लयादपि निरोद्धव्यमित्यर्थः ॥४२॥

कः स उपाय इति । उच्यते । सर्वं द्वैतम् अविद्याविजृम्भितं दुःखमेवेत्यनुस्मृत्य कामभोगात् कामनिमित्तो

---

समाधिं कर्त्तुं तत्त्वसाक्षात्कारप्रतिबन्धका । लयविक्षेपसुखरागास्तेभ्यो मनसो वक्ष्यमाणोपायेन निग्रहं कुर्यात् । अन्यथा समाधिसाफल्यानुपपत्तेरित्याह । उपायेनेति । प्रागुक्तादुपायादेव मनोनिग्रहे परिपक्वे श्रवणादिविध्यानर्थक्यमिति मन्वान पृच्छते किमिति । पूर्वोक्तोपायवत श्रवणाद्यनुष्ठितो मनोनिग्रहद्वारा तत्त्वज्ञानसिद्धिरित्युत्तरमाह । नेत्युच्यत इति । तृतीयपादं व्याचष्टे । किञ्चेति । लीयते स्थानद्वयमिति शेषः । चतुर्थपादमाकाङ्क्षाद्वारा विवृणोति । सुप्रसन्नमित्यादिना ॥४२॥

उपायेन निगृह्णीयादित्युक्तम् । तमेवोपायं वैराग्यरूपमुपदिशति । दुःखमिति । ध्यानाभ्यासाख्यमुपायान्तरमुपन्यस्यति । अजमिति । अपरस्यश्लोकार्धमाकाङ्क्षां निक्षिपति । क स इति । तत्र पूर्वार्धं व्याकरोति । उच्यत इत्यादिना । वैराग्यभावना तत्र तत्र

**अजं सर्वमनुस्मृत्य जातं नैव तु पश्यति॥४३॥**
**लये सम्बोधयेच्चित्तं विक्षिप्तं शमयेत्पुनः ।**

---

भोगेच्छाविषयः । तस्मात् विमुखतं मनो निवर्त्तयेत् वैराग्यभावनया इत्यर्थः । अजं ब्रह्म सर्वमित्येतत् शास्त्राचार्य्योपदेशतोऽनुस्मृत्य तद्विपरीतं द्वैतजातं नैव तु पश्यति । अभावात् ॥४३॥

एवमनेन ज्ञानाभ्यासवैराग्यद्वयोपायेन लये सुषुप्ते लीनं सम्बोधयेन्मनः । आत्मविवेकदर्शनेन योजयेत् । चित्तं मन इत्यनर्थान्तरम् । विक्षिप्तञ्च कामभोगेषु शमयेत् पुनः । एवं पुनः पुनरभ्यस्यतो लयात् सम्बोधितं विषयेभ्यश्च व्यावर्त्तितं नापि साम्यापन्नम् अन्तरालावस्थं सकषायं सरागं बीजसंयुक्तं मन इति विजानीयात् ।

---

द्वैतविषये दोषानुसन्धानेन वैतृष्ण्यभावना । तया कामभोगात् मनो निरोद्धव्यमित्यर्थः । द्वितीयार्द्धं ज्ञानाभ्यासविषयं व्याकरोति । अजमित्यादिना ॥४३॥

ज्ञानाभ्यासवैराग्याभ्यां लयाद्विक्षेपाच्च व्यावर्त्तितं मनो रागप्रतिबद्धं श्रवणमनननिदिध्यासनाभ्यासप्रसूतसम्प्रज्ञातसमाधिपर्य्यन्तेन यतोऽपि प्रतिबन्धाद्व्यावर्त्तनीयमित्याह । लय इति ॥ श्लोकाक्षराणि व्याकरोति । एवमित्यादिना ॥ ज्ञानाभ्यासः श्रवणाद्यावृत्तिर्विषयेषु अनित्यत्वादिदोषदर्शनेन वैतृष्ण्यं वैराग्यं लयो निद्रा सम्प्रबोधनमेवाभिनयति । आत्मेति ॥ मनसि प्रकृते किमिति चित्तमुच्यते तत्राह । चित्तमिति ॥ विक्षिप्तं विप्रसृतं शमयेत् व्यावर्त्तयेत् इति यावत् पुनरित्यत्र विवक्षितमर्थमाह । एवमिति ॥ उभयतो व्यावर्त्तितं

सकषायं विजानीयात् समप्राप्तं न चालयेत् ॥४४॥
नास्वादयेत् सुखं तत्र निःसङ्गः प्रज्ञया भवेत् ।

---

ततोऽपि यत्नतः साम्यमापादयेत् । यदा तु समप्राप्तं भवति समप्राप्त्यभिमुखी भवतीत्यर्थः । ततस्तत् न विचालयेत् विषयाभिमुखं न कुर्यादित्यर्थः ॥४४॥

समाधिस्थस्य योगिनो यत् सुखं जायते तन्नास्वादयेत् तत्र न रज्येतेत्यर्थः । कथं तर्हि निःसङ्गः निस्पृहः प्रज्ञया विवेकबुद्ध्या यदुपलभ्यते सुखं तदविद्यापरि-

---

मनस्तर्हि निर्विशेषब्रह्मरूपतां गतमित्याशङ्क्याह । नापीति । अन्तरालावस्थमनसः स्वरूपं तृतीयपादावष्टम्भेन सूचयति । सकषायमिति । रागस्य बीजत्वं पराचीनविषयप्रवृत्तिं प्रति प्रतिपत्तव्यम् ॥ यथोक्तं मनो ज्ञात्वा किं कर्त्तव्यमित्यपेक्षायामाह । ततोऽपीति । अन्तरालावस्था पञ्चम्या परामृश्यते । लयावस्थादि दृष्टान्तयितुमपिशब्दः । यत्नतः सम्प्रज्ञातसमाधेरिति यावत् । साम्यमसम्प्रज्ञातसमाधिमित्यर्थः । चतुर्थपादस्यार्थमाह । यदा त्विति । समाधिद्वयद्वारेण मनो निर्विशेषं परिपूर्णं ब्रह्मरूपं प्राप्य समस्तत्वात्तया समापत्तेदमाप्रतिबन्धः स्यादित्याशङ्क्याह । समप्राप्तेति । ततो निर्विशेषवस्तुप्राप्त्याऽभिमुख्यादनन्तरमित्यर्थः । किं तन्मनसश्चालनं यत्प्रतिषिध्यते तत्राह । विषयेति ॥४४॥

समाधिस्थायां यत्सुखमुत्पद्यते तद्विषयाभिलाषादपि मनो निरोद्धव्यमित्याह । नास्वादयेदिति ॥ तत्रेति समाध्यवस्थोच्यते । किन्तु तस्यामवस्थायां सुखं तदुपलभ्यते तदज्ञानविजृम्भितं मिथ्यैवेति प्रज्ञया विवेकविज्ञानेन निस्पृहः सन् भावयेदित्याह । निःसङ्ग इति ॥ किञ्च वशितां प्राप्तोऽपि वैराग्याद्युपायेन निश्चलं प्रत्यगात्मप्रवणं प्रसाधितं

निश्चलं निश्चरत् चित्तं एकीकुर्यात् प्रयत्नतः ॥४५॥
यदा न लीयते चित्तं न च विक्षिप्यते पुनः ।

---

कल्पितं सर्वमेवेति विभावयेत् । ततोऽपि सुखरागान्निगृह्णीयात् इत्यर्थः । यदा पुनः सुखरागान्निवृत्तं निश्चलस्वभावं सन्निश्चरद्बहिर्निर्गच्छद्भवति चित्तं ततस्ततो नियम्योक्तोपायेन आत्मन्येवैकीकुर्यात् प्रयत्नतः । चित्स्वरूपसत्तामात्रमेवापादयेदित्यर्थः ॥४५॥

यथोक्तेन उपायेन निगृहीतं चित्तं यदा सुषुप्ते न

---

तद्यदि स्वभावानुसारेण बहिर्निर्गन्तुमिच्छेत्तदा सम्प्रज्ञातसमाधेरसम्प्रज्ञातसमाधिपर्यन्तात् प्रयत्नात् तदात्मन्येवैकीकृत्य तन्मात्रमापाद्य परिशुद्धपरिपूर्णब्रह्मात्मना स्वयं तिष्ठेत् इत्याह । निश्चरदिति ॥ प्रथमपादाक्षराणि योजयति । समाधिस्थित इति ॥ तस्य समाध्यवस्थायामिति शेषः ॥ द्वितीयपादमाकाङ्क्षाद्वारा विवृणोति । कथमित्यादिना ॥ निःस्पृहो यथोक्ते सुखे अनुरागरहितः सन्नित्यर्थः । विवेकरूपा या बुद्धिः प्रागुक्तकस्य रज्जुसर्पवत् कल्पितत्वमित्येवमात्मिका तया भावयेदिति सम्बन्धः ॥ भावनाप्रकारमभिनयति । यदित्यादिना ॥ प्रथमार्द्धस्याक्षरार्थमुक्त्वा तात्पर्यार्थं निगमयति । ततोऽपीति ॥ उत्तरार्द्धं विभजते । यदेत्यादिना ॥ पूर्वोक्तसमाध्यनुरोधादात्मन्येव निश्चलस्वभावं सच्चित्तं यथोक्तं सुखरागनिमित्तं तदुपायरागनिमित्तं वा निश्चरत् भवतीति सम्बन्धः । तच्च चित्तं बाह्यविषयाभिमुख्यादुक्तोपायेन प्राणायामादीना व्यावर्त्यात्मन्येव परस्मिन् ब्रह्मणि प्रयत्नतः सम्प्रज्ञातसमाधिवशादेकीकुर्यात् । असम्प्रज्ञातसमाधियुक्तं परिपूर्णं ब्रह्मैवापादयेदित्यर्थः ॥ तदेव स्फुटयति । चित्स्वरूपेति ॥४५॥

. . ,कदा पुनरिदं चित्तं ब्रह्मभावमापद्यते तदाह ।* यदेति ॥

**अजमजेन ज्ञेयेन सर्व्वज्ञं परिचक्षते ॥४७॥**
**न कश्चिज्जायते जीवः सम्भवोऽस्य न विद्यते।**

तच्चाकथ्यं न शक्यते कथयितुम्। अत्यन्तासाधारणविषयत्वात्। सुखमुत्तमं निरतिशयं हि तत् योगिप्रत्यक्षमेव। न जातमित्यजम्। यथा विषयम् अजेनानुत्पन्नेन ज्ञेयेनाव्यतिरिक्तं सत् स्वेन सर्व्वज्ञरूपेण सर्व्वज्ञं ब्रह्मैव सुखं परिचक्षते कथयन्ति ब्रह्मविदः ॥४७॥

सर्व्वोऽप्ययं मनोनिग्रहादिर्मृल्लोहादिवत्सृष्टिरुपासना चोक्ता परमार्थस्वरूपप्रतिपत्त्युपायत्वेन न परमार्थसत्येति। परमार्थसत्यं तु न कश्चित् जायते जीवः कर्त्ता भोक्ता च नोत्पद्यते केनचिदपि प्रकारेण। अतः स्वभावतोऽज-

त्वादपि पुरुषार्थत्वसिद्धिरित्याह। सर्व्वेति॥ [ निरतिशयानन्दाऽभिव्यक्तिनिरवद्यानर्घोच्छिन्नचित्तेशस्त्रण मोक्षमाप्नुते ॥ तत्कथमिद मस्त्वित्याशङ्क्याह। अनिर्व्वाच्यमिति॥ तस्य क्षीरखण्डादिमाधुर्य्य मदस्य स्वानुभवमात्राधिगम्यत्वादकाथ्यत्वमाह। नश्यति॥ यदुक्त परमार्थसुखमिति तदिदानीमुपपादयति। सुखमिति। तर्हि सर्व्वं पामेव तत् भयादित्याशङ्क्याह। योगीति॥ ज्ञानस्याऽजातत्व वैधर्म्यं दृष्टान्तमाह। यथेति॥४७॥

उक्तानामुपायाना परमार्थसत्यत्व सत्यद्वैतहानि। अन्यथा तद प्रमितिरित्याशङ्क्याह। न कश्चिदिति॥ तत्र व्रतमाह। सम्भवो ऽस्येति॥ श्लोकाक्षराणि व्याकर्त्तुं भूमिकां व्याकरोति। सर्व्वोऽपीति॥ व्यवहारिकसत्यत्वमेवोपायाना न परमार्थसत्यत्वमित्यङ्गीकृत्य पार मार्थिकसत्यस्वप्रतिपत्त्युपायत्वेनैवोक्तेत्याह। चदिति॥ यदुक्त तर्न॰

एतत्तदुत्तमं सत्यं यत्र किञ्चिन्न जायते ॥४८॥
इति गौडपादीयकारिकायामद्वैताख्यं तृतीयं प्रकरणम् ॥ ३ ॥ ॐ तत्सत् ॥

---

स्याऽस्यैकस्य। तत्र सम्भवः कारणं न विद्यते ऽस्ति। यस्मान्न विद्यतेऽस्य कारणं तस्मान्न कश्चिज्जायते जीव इत्येतत्। पूर्वेषूपायत्वेनोक्तानां सत्यानामेतदुत्तमं सत्यं यस्मिन् सत्यस्वरूपे ब्रह्मण्यणुमात्रमपि किञ्चिन्न जायते इति ॥४८॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्यस्य श्रीशङ्करभगवतः कृतौ गौडपादीयभाष्ये आगमशास्त्रविवरणेऽद्वैताख्यतृतीयप्रकरणभाष्यम् ॥३॥ ओं तत्सत् ॥

---

विग्रहादीनां परमार्थत्वे द्वैतहानिरिति तत्राह। नैत्यादिना। तेषाम परमार्थत्वे कथमद्वैतप्रतिपत्तिरित्यपि न व्यवहारिकसत्यानामपि तत्प्रमितिहेतुत्वस्य प्रतिबिम्बदुपपत्तेरिति भावः। 'उपायानां' व्यवहारिकसत्यत्वेनैव पारमार्थिकं सत्यत्वं किं न स्यादिति तत्राह। परमार्थेति। तदेव स्फुटयति। कस्येति। स्वभावतोऽजस्य हेतुकथाऽयुक्ता। तत्रैव हेत्वन्तरमाह। यत इति। हेत्वन्तरमेव स्फुटयति। यस्मादिति। उत्तरार्द्धं व्याचष्टे। पूर्वेष्विति। पूर्वेषु श्लोकेष्विति यावत्। इतिशब्दो द्वैतप्रकरणपरिसमाप्तिं द्योतयति ॥४८॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्य भगवदानन्दज्ञानविरचितायां गौडपादभाष्यटीकायां तृतीयप्रकरणं समाप्तम् ॥ ३ ॥ ओं तत्सत् ॥ हरिः ओं ॥

## ज्ञानेनाकाशकल्पेन धर्मान् गगनोपमान्।

ओंकारनिर्णयद्वारेण आगमतः प्रतिज्ञातस्याद्वैतस्य बाह्यविषयभेदवैतथ्याच्च सिद्धस्य पुनरद्वैते शास्त्रयुक्तिभ्यां साक्षान्निर्धारितस्यैतदुत्तमं सत्यमित्युपसंहारः कृतः। अन्ते तस्यैतस्यागमार्थस्याद्वैतदर्शनस्य प्रतिपक्षभूता द्वैतिनो वैनाशिकाश्च तेषां चान्योन्यविरोधाद्रागद्वेषादिक्लेशास्पदं दर्शनमिति मिथ्यादर्शनत्वं सूचितम्। क्लेशानास्पदत्वात् सम्यग्दर्शनमित्यद्वैतदर्शनं स्तूयते। तदिह विस्तरेणान्योन्यविरुद्धतया असम्यग्दर्शनत्वं प्रदर्श्य तत्प्रतिषेधेनाद्वैतदर्शनसिद्धिरुपसंहर्तव्या। आवीतन्यायेनेत्यलातशान्तिरारभ्यते। तत्राद्वैतदर्शनसम्प्रदायकर्त्तुरद्वैतस्वरूपेणैव नम-

आद्यन्तमध्यमङ्गला ग्रन्थाः प्रचारिणो भवन्तीत्यभिप्रेत्यादावोङ्कारोच्चारणवदन्ते परदेवताप्रणामवत् मध्येऽपि परदेवताद्रूपमुपदेष्टारं प्रणमति। ज्ञानेति॥ पूर्वोत्तरप्रकरणसम्बन्धसिद्ध्यर्थं पूर्वप्रकरणत्रये वृत्तमर्थं क्रमादनुद्रवति। ओंकारेति॥ अद्वैत इत्यद्वैतोपलक्षितं तृतीयं प्रकरणमुच्यते। चतुर्थं प्रकरणमवतारयितुमुपयुक्तमर्थान्तरमनुवदति। तस्येति॥ द्वैतिनो भेदवादिनो वैनाशिकव्यतिरिक्ता उच्यन्ते वैनाशिका नैरात्म्यवादिनो रागद्वेषादीत्यादिशब्देनातिरिक्तक्लेशोपादानम्। पक्षान्तराणां मिथ्यादर्शनत्वसूचनं कुतोऽपगम्यते तत्राह। क्लेशेति॥ पातनिकामेव कृत्वा अनन्तरप्रकरणप्रवृत्तिं प्रतिजानीते। तदिहेति॥ तदसम्यग्दर्शनत्वमिति सम्बन्धः। आवीतन्यायो व्यतिरेकन्यायः। यथा यत्कृतकं तदनित्यमित्यन्वयादनित्यत्वेऽवगतेऽपि यन्नानित्यं न तत्कृतकमिति व्यतिरेकोऽपि व्यभिचार

अस्पर्शयोगो वै नाम सर्वसत्त्वसुखो हितः ।

प्रधानं पुरुषोत्तममित्यभिप्रायः । उपदेष्टृनमस्कारमुखेन ज्ञानज्ञेयज्ञातृभेदरहितं परमार्थतत्त्वदर्शनमिह प्रकरणे प्रतिपिपादयिषितं प्रतिपक्षप्रतिषेधद्वारेण प्रतिज्ञातं भवति ॥१॥

अधुनाऽद्वैतदर्शनयोगस्य नमस्कारस्तत्स्तुतये, स्पर्शनं स्पर्शसम्बन्धो न विद्यते यस्य योगस्य केनचित्कदाचिदपि सोऽस्पर्शयोगो ब्रह्मस्वभाव एव वै नामेति । ब्रह्मविदामस्पर्शयोग इत्येवं प्रसिद्ध इत्यर्थः । स च सर्वसत्त्वसुखो भवति । कश्चिदत्यन्तसुखसाधनविशिष्टोऽपि दुःखस्वरूपः यथा तपः अयन्तु न तथा किन्तर्हि सर्वसत्त्वानां सुखः ।

आश्रमे नरनारायणाधिष्ठिते नारायणं भगवन्तमभिप्रेत्य तपो महदतप्यत । ततो भगवानतिप्रसन्नस्तस्मै विद्यां प्रदादिति प्रसिद्धं परमगुरुत्वं परमेश्वरे इति भावः । ननु प्रकरणे प्रारभ्यमाणे प्रतिपाद्ये प्रमेये वक्तव्ये किमित्युपदेष्टा नमस्क्रियते तत्राह । उपदेष्ट्रिति ॥१॥

इदानीमद्वैतदर्शनयोगस्तुतये तन्नमस्कारं प्रस्तौति । अस्पर्शेति । श्लोकस्य तात्पर्यमाह । अधुनेति । तस्य च स्तुति तत्साधनेषु प्रवृत्तावुपयुज्यते । सम्प्रत्यक्षराणि व्याकुर्व्वन् अस्पर्शयोगशब्दं व्याकरोति । स्पर्शनमिति । योगस्यान्यसम्बन्धप्रसङ्गाभावात् कथमस्पर्शत्वमित्याशङ्क्याह । ब्रह्मेति । निपातयोरर्थं कथयति । वै नामेति । सर्वेषां सत्त्वानां देहभृतां सुखयतीति व्युत्पत्त्या सुखहेतुत्वं ब्रह्मस्वभावस्य सुखविशेषणेन दर्शयति । सत्त्वेति । सुखहेतावपि ब्रह्मस्वभावे विपश्चिता विशेषं दर्शयति । भवतीति । हितविशेषणस्य तात्पर्यमाह । तथेह भवतीत्यादिना ॥ तस्य हितत्वे हेतुमाह ।

न भवत्यमृतं मर्त्यं न मर्त्यममृतं तथा।
प्रकृतेरन्यथाभावो न कथञ्चिद्भविष्यति ॥७॥
स्वभावेनामृतो यस्य धर्मा गच्छन्ति मर्त्यताम्।
कृतकेनामृतस्तस्य कथं स्थास्यति निश्चलः ॥८॥
सांसिद्धिकी स्वाभाविकी सहजा अकृता च या।

---

उक्तार्थानां श्लोकानामिहोपन्यासः परवादिपक्षाणामन्योन्यविरोधख्यापितानुमोदनप्रदर्शनार्थः ॥७।८॥

यस्माल्लौकिक्यपि प्रकृतिर्न विपर्येति कासावित्याह सम्यक्सिद्धिः संसिद्धिस्तत्र भवा सांसिद्धिकी यथा योगिनां सिद्धानामणिमाद्यैश्वर्यप्राप्तिः प्रकृतिः सा भूतभविष्यत्-

---

परिणामिब्रह्मवादे यदजस्त्वमादिभिर्ब्रह्म प्रणमुच्यते तदप्यनुपपन्नमेवेति मत्वाह। न भवतीति॥ अमृतं हि ब्रह्म न तद्रूपे स्थितं मर्त्यं भवितुमर्हति। स्थितरूपविरोधात्। न च मर्त्यं कार्यं स्वरूपस्थिते प्रलयावस्थायाममृतं ब्रह्म सम्पद्यते। नष्टेऽपि स्वरूपे तस्यैवाभावान्नान्यथात्वमित्यभिप्रेत्याह। प्रकृतेरिति॥ किञ्च यस्य परिणामवादिनः स्वभावेनामृतः सन् परमात्माख्यो धर्मः प्रसिद्धितो भावो मर्त्यतां कार्यभावमापत्त्या गच्छति। तस्य कृते केन समुच्चयानुष्ठानेनाऽमृतो जातो मुक्तो वक्तव्य। स च कथं निश्चलः स्यात् पारयति। यत्कृतकं तदनित्यमिति न्यायविरोधादित्याह। स्वभावेनेति॥ पुनरुक्तिमाशङ्क्य प्रत्यादिशति। उक्तार्थानामिति॥७।८॥

प्रकृतेरन्यथाभावो न कथञ्चिदित्युक्तं तत्र प्रकृतिशब्दार्थं कथयति। सांसिद्धिकीति॥ लोकाकाराणि व्याकुर्वन् प्रकृतेरन्यथात्वभावे हेतुमाह। यस्मादिति॥ तस्मादजामृतस्वभावा प्रकृतिर्न विपर्येतीति

ख्याप्यमानामजातिन्तैरनुमोदामहे वयम् ।
विवदामो न तैः सार्द्धमविवादं निबोधत ॥५॥
अजातस्यैव धर्म्मस्य जातिमिच्छन्ति वादिनः ।
अजातो ह्यमृतो धर्म्मो मर्त्यतां कथमेष्यति ॥६॥

तैरेवं ख्याप्यमानामजातिमेवमस्त्वित्यनुमोदामहे केवलं न तैः सार्द्धं विवदामः पक्षप्रतिपक्षग्रहणेन । यथा तेऽन्योन्यमित्यभिप्रायः । अतस्तमविवादं विवादरहितं परमार्थदर्शनमनुज्ञातमस्माभिर्निबोधत हे शिष्याः ॥५॥

सदसद्वादिनः सर्वे यान्ति पुरस्तात्कृत भाष्यश्लोक ॥६॥

यदि प्रतिवादिभिरुक्तत्वादजातिरपि भवता अभ्युपेयेत्याशङ्क्याह । ख्याप्यमानामिति । प्रतिवादिभिः सह विवादाभावे फलितमाह । अविवादमिति । तदेवाह । विवदाम इत्यादिना । अद्वैतवादिनो द्वैतवादिभिर्विवादाभावे वैपरीत्यमाह । यथा त इति । चतुर्थपादार्थमाह । अत इति ॥५॥

जातस्यैव जन्मनाऽनभ्युपगमादजातस्यैव पदार्थस्य जन्म सद्वादिनोऽसद्वादिनश्च सर्वेऽपि वादिनोऽभ्युपगच्छन्तीति प्रपञ्चमनुवदति । जातस्येति । तत्र विवादोऽस्त्येव पदार्थाऽभ्युपगमादिति । अजातो धर्मोऽमृतः ते वादिनो द्वैतिनस्तत्र समाह । मर्त्यतामिति । अत्र विवादे श्लोकान्तराणि व्याख्यातत्वान्न पुनर्व्याख्यानमपेक्षितमित्याह । पुरस्तादिति ॥६॥

न भवत्यमृतं मर्त्यं न मर्त्यममृतं तथा ।
प्रकृतेरन्यथाभावो न कथञ्चिद्भविष्यति ॥७॥
स्वभावेनामृतो यस्य धर्मो गच्छन्ति मर्त्यताम् ।
कृतकेनामृतस्तस्य कथं स्थास्यति निश्चलः ॥८॥
सांसिद्धिकी स्वाभाविकी सहजा अकृता च या ।

---

उक्तार्थानां श्लोकानामिहोपन्यासः परवादिपक्षाणामन्योन्यविरोधख्यापितानुमोदनप्रदर्शनार्थः ॥७॥८॥

यस्माल्लौकिक्यपि प्रकृतिर्न विपर्येति काऽसावित्याह सम्यक्सिद्धिः संसिद्धिस्तत्र भवा सांसिद्धिकी यथा योगिनां सिद्धानामणिमाद्यैश्वर्यप्राप्तिः प्रकृतिः सा भूतभविष्यत्-

---

परिणामिब्रह्मवादे यदमृतं ब्रह्म तदपि भिन्नं यदुच्यते तदप्यनुपपन्नमेवेति प्रत्याह । न भवतीति ॥ अमृतं हि ब्रह्म न तद्रूपे स्थितं मर्त्यभावमर्हति । स्थितरूपविरोधात् । न च मर्त्यं कार्यं स्वरूपस्थिते प्रलयावस्थायाममृतं ब्रह्म सम्पद्यते । दृष्टेऽपि स्वरूपे तस्यैव भावान्नान्यथात्वमित्यभिप्रेत्याह । प्रकृतेरिति ॥ किञ्च यस्य परिणामवादिनः स्वभावेनामृतः सन् परमात्माख्यो धर्मिशब्दितो भावो मर्त्यतां कार्यभावमापद्य गच्छति । तस्य कृते केन समुच्चयानुष्ठानेनाऽमृतो जातो मुक्तो वक्तव्यः । स च कथं निश्चलः स्यात् पारयति । यद्-कृतकं तदनित्यमिति न्यायविरोधादित्याह । स्वभावेनेति ॥ पुनरुक्तिमाशङ्क्य प्रत्यादिशति । उक्तार्थानामिति ॥७।८॥

प्रकृतेरन्यथाभावो न कथञ्चिदित्युक्तं तत्र प्रकृतिशब्दार्थं कथयति । सांसिद्धिकीति ॥ श्लोकाक्षराणि व्याकुर्वन् प्रकृतेरन्यथात्वभावे हेतुमाह । यस्मादिति ॥ तस्मादजामृतस्वभावा प्रकृतिर्न विपर्येतीति

प्रकृतिः सेति विज्ञेया स्वभावं न जहाति या॥९॥
जरामरणनिर्मुक्ताः सर्वे धर्माः स्वभावतः।

कालयोरपि योगिनां न विपर्येति तथैव सा। यथा स्वाभाविकी द्रव्यस्वभावत एव सिद्धा। यथाऽग्न्यादीनामुष्णप्रकाशादिलक्षणा सापि न कालान्तरे व्यभिचरति देशान्तरे च तथा सहजा आत्मना सहैव जाता यथा पक्ष्यादीनामाकाशगमनादिलक्षणा। अन्यापि या काचिदकृता केनचिन्न कृता यथाऽपां निम्नदेशगमनादिलक्षणा। अन्यापि या काचित्स्वभावं न जहाति सा सर्वा प्रकृतिरिति विज्ञेया। लोके मिथ्याकल्पितेषु लौकिकेष्वपि वस्तुषु प्रकृतिर्नान्यथा भवति किमुताऽजस्वभावेषु परमार्थवस्तुष्वमृतत्वलक्षणा प्रकृतिर्नान्यथा भवतीत्यभिप्रायः॥९॥

किंविषया पुनः सा प्रकृतिर्यस्या अन्यथाभावो

किमु वक्तव्यमिति योजना। कैमुतिकन्यायद्योतनार्थोऽपिशब्दः। विषयं हेतुं स्फुटयितुं प्रश्नपूर्वकं विभजते। कायेत्यादिना। साङ्ख्ययोगमतमुद्धाय परिहरति सर्वेति। सिद्धानामणिमाद्यैश्वर्यभाजां सामग्रीसम्पन्नानां या काचित् स्वभावं न जहाति घटस्य घटत्वं पटस्य पटत्वमित्यादिकेति यावत्। सांसिद्धिकप्रकृतिमुदाहृत्य प्रकृतेरन्यथा [illegible] सिध्यति॥९॥

सांसिद्धिकीमिव जीवानां प्रकृतिं दर्शयितुं प्रक्रमते। जरेति॥

जरामरणमिच्छन्तश्च्यवन्ते तन्मनीषया॥१०॥
कारणं यस्य वै कार्य्यं कारणं तस्य जायते।

वादिभिः कल्प्यते कल्पनायां वा को दोष इत्याह। जरामरणनिर्मुक्ताः। जरणादिसर्वविक्रियावर्जिता इत्यर्थः। के? सर्वे धर्म्माः सर्वे आत्मान इत्येतत् स्वभावतः प्रकृतितः। एवं स्वभावाः सन्तो धर्म्मा जरामरणमिच्छन्त इवेच्छन्तो रज्ज्वामिव सर्पमात्मनि कल्पयन्तश्च्यवन्ते स्वभावतश्चलन्तीत्यर्थः। तन्मनीषया जन्ममरणचिन्तया तद्भावभावितत्वदोषेणेत्यर्थः॥१०॥

कथं सज्जातिवादिभिः साङ्ख्यैरनुपपन्नमुच्यत इत्याह वैशेषिकः। कारणं मृद्वदुपादानलक्षणं यस्य वादिनो वै कार्य्यं कारणमेव कार्य्याकारेण परिणमते यस्य वादिन

आत्मनो हि सर्वविक्रियारहिताः स्वभावतो भवन्तीत्यर्थः। तेषामुक्तप्रकृतेरन्यथात्वे का क्षतिरित्याशङ्क्याह। जरामरणमिति॥ सर्वविक्रियाशून्ये आत्मनि विक्रियाकल्पनायां तद्भावनया स्वभावहानिः स्यादित्यर्थः॥ श्लोकाक्षराणि व्याकर्त्तुं शङ्कां दर्शयति। किंविषयेति॥ आश्रयविषयो विषयशब्दः॥ प्रकृतं प्रकृतेरन्यथानिरूपणमित्याशङ्क्याह। यस्मा इति। प्रश्नान्तरं प्रकरोति। कल्पनायामिति॥ तत्र पूर्वार्द्धमुत्तरत्वेन व्याकरोति। आहेत्यादिना। उत्तरार्द्धं विभजते। एवं स्वभावा इति॥१०॥

प्रासङ्गिकं परित्यज्य साङ्ख्यपक्षे वैशेषिकादिभिरुच्यमानं दूषणमभ्युपगतमनुभाषते। कारणमिति। कारणस्य जायमानत्वे का हानिरित्याशङ्क्याह। जायमानमिति॥ सावयवत्वाच्च प्रधानस्य नित्य-

जायमानं कथमजं भिन्नं नित्यं कथञ्च तत्॥११॥
कारणाद्यद्यनन्यत्वमतः कार्यमजं यदि।

इत्यर्थः। तस्याऽजमेव सत्प्रधानादि कारणं महदादि कार्यरूपेण जायत इत्यर्थः। महदाद्याकारेण चेज्जायमानं प्रधानं कथमजमुच्यते तैर्विप्रतिषिद्धं चेदं जायतेऽजञ्चेति। नित्यञ्च तैरुच्यते। प्रधानं भिन्नं विदीर्णं स्फुटितमेकदेशेन सत्कथं नित्यं भवेदित्यर्थः। न हि सावयवं घटादि एकदेशस्फुटनधर्मि नित्यं दृष्टं लोक इत्यर्थः। विदीर्णञ्च स्यादेकदेशेनाजं नित्यञ्चेति। एतद्विप्रतिषिद्धं तैरभिधीयत इत्यभिप्रायः॥११॥

उक्तस्यैवार्थस्य स्पष्टीकरणार्थमाह। कारणादजात्कार्यस्य यद्यनन्यत्वमिष्टं त्वया ततः कार्यमजमिति प्राप्तम्।

---

त्यनुपपत्तिरित्याह। भिन्नमिति। श्लोकस्य तात्पर्यमाह। कथमिति। तत्र प्रथमपादार्थं दर्शयति। योऽजमिति। कारणमित्यादिना तदेव स्पष्टयति। कार्यरूपेणेति। द्वितीयपादं विभजते। जायत इति। प्रधानादीत्यादिशब्देन तदवयवाः सत्त्वादयो गृह्यन्ते। महदादीत्यादिपदेनाहङ्कारादिग्रहणम्। तृतीयपादं व्याकरोति। महदाद्येति। विप्रतिषेधं विशदयति। जायत इति। चतुर्थपादार्थमाह। भिन्नञ्चेति। विमतमनित्यं सावयवत्वाद्घटादिवदित्यभिप्रेत्य दृष्टान्तं साधयति। न हीति। साध्यश्रुतिविरुद्धमनुमानमित्यभिप्रायेणाह। विदीर्णञ्चेति॥११॥

किञ्च। कार्यकारणयोरभेदे किं कारणाभिन्नं कार्यं किं वा कार्याभिन्नं कारणमिति विकल्पाद्यमनुवदति। कारणादिति। अतो-

अशक्तिरपरिज्ञानं क्रमकोपोऽथ वा पुनः ।
एवं हि सर्वथा बुद्धैरजातिः परिदीपिता ॥१९॥

---

अथैतन्न शक्यते वक्तुमिति मन्यसे सेयमशक्तिरपरिज्ञानम्। तत्त्वाविवेको मूढतेत्यर्थः। अथ वा योऽयं त्वयोक्तः क्रमः हेतोः फलस्य सिद्धिः फलाच्च हेतोः सिद्धिरितीतरेतरानन्तर्य्यलक्षणस्तस्य कोपो विपर्य्यासोऽन्यथा'भाव' स्यादित्यभिप्रायः। एवं हेतुफलयोः कार्य्यकारणभावानुपपत्तेरजातिः सर्व्वस्यानुत्पत्तिः परिदीपिता प्रकाशिताऽन्योन्यपक्षदोषं ब्रुवद्भिर्वादिभिर्बुद्धैः पण्डितैरित्यर्थः ॥१९॥

---

वक्तव्यमित्याह। यदीति। श्लोकाक्षराणि योजयति। अथमन्त्यादिना ॥१८॥

हेतुफलयोरिदं पूर्व्वमिदं पश्चादिति न ज्ञायते। परस्पराश्रयात्ते अतस्तेद् पूर्व्वं निम्नमिति वक्तुमशक्यमित्याह। अशक्तिरिति। उत्तराधरे हेतुफलापरिज्ञानं तर्हि कथमशक्तिरूपक तन्निमित्तस्यानम प्रतिभाभिधानीयमापततीत्यर्थः। किञ्च यदि क्रमस्य नियतपूर्व्वापर भावात्मनोऽपरिज्ञानं तदा पूर्व्वं कारणमुत्तरं कार्य्यमिति प्रतिज्ञा हीयेत। तथा च प्रतिज्ञातानिर्व्वाहात्मकमापद्यतेत्याह। क्रमेति। अन्योन्यपक्षप्रतिक्षेपमुखेन सतो ऽसतश्च जन्मनो प्रत्याख्याते। क्रमाक्रमाभ्यामुत्पत्तेरनुपपत्तेरजातिरेवाशुद्धाभिप्रेता वादिभिरादर्शिता भवतीत्युपसंहरति। एवं हीति। प्रत्यर्धं पादं व्याकरोति। यथोक्ता रीत्या। क्रमपक्षे पूर्व्वनियमदमेतत्पक्षेन परामृश्यते। द्वितीयपादं योजयति। अथ वेत्यादिना। द्वितीयार्द्धं विवृणोति। एवमिति ॥१९॥

बीजाङ्कुराख्यो दृष्टान्तः सदा साध्यसमो हि सः।

ननु हेतुफलयोः कार्यकारणभाव इत्यस्माभिरुक्तं शब्दमात्रमाश्रित्य छलमिदं त्वयोक्तं पुत्राज्जन्म पितुर्यथा विषाणवच्चासम्बन्ध इत्यादि। न ह्यस्माभिरसिद्धाद्धेतोः फलसिद्धिः असिद्धाद्वा फलाद्धेतुसिद्धिरभ्युपगता किन्तर्हि बीजाङ्कुरवत्कार्यकारणभावोऽभ्युपगम्यत इति। अत्रोच्यते। बीजाङ्कुराख्यो यो दृष्टान्तः स साध्येन तुल्यो ममेत्यभिप्रायः। न तु प्रत्यक्षः कार्यकारणभावो बीजाङ्कुरयोरनादिः न पूर्वस्य पूर्वस्याऽपरवदादिमत्त्वाऽभ्युपगमात्। यथेदानीमुत्पन्नोऽपरोऽङ्कुरो बीजादिमान् बीजस्याऽपरमन्यस्मादङ्कुरादिति क्रमेणोत्पन्नत्वादादिमत्। एवं

बीजाङ्कुरयोरिव हेतुफलयोरन्योन्यं कार्यकारणभावाभ्युपगमाद्योऽस्याश्रयत्वमित्याशङ्क्याह। बीजेति। दृष्टान्तस्य साध्यसमत्वेऽपि साधकत्वमस्तीत्याशङ्क्याह। न हीति। श्लोकापोद्यं चोद्यमुद्भावयति। नन्विति। शब्दमात्रं विवक्षितार्थशून्यम्। शब्दमात्रमाश्रित्य छलप्रयोगमेवोदाहरति। पुत्रादिति। आदिशब्देन फलादुत्पद्यमानस्य न ते हेतुः प्रसिध्यतीत्यादि गृह्यते। कार्यकारणभावो हेतुफलयोरित्यत्रानभिप्रेतमर्थं कथयति। न हीति। तत्रैव प्रश्नपूर्वकमभिप्रेतमर्थमुदाहरति। किन्तर्हीति। दृष्टान्तासम्प्रतिपत्त्या परिहरति। अत्रेति। मायावादिमते कश्चिदपि कार्यकारणभावस्य वस्तुभूतस्यासम्प्रतिपत्तेर्ममेत्युक्तम्। प्रत्यक्षावष्टम्भेन दृष्टान्तं साधयन्नाशङ्कते। नन्विति। किं बीजाङ्कुरव्यक्त्योरिह कार्यकारणत्वमिष्यते किं वा बीजाङ्कुरसन्तानयोरिति विकल्प्याद्यं दूषयति। न पूर्वस्येति। तदेव प्रपञ्चयति। यथेत्यादिना। बीजव्यक्तेरङ्कुरव्यक्तेश्चोक्तप्रकारेणानादि-

स्वतो वा परतो वापि न किञ्चिद्वस्तु जायते।
सदसत्सदसद्वाऽपि न किञ्चिद्वस्तु जायते॥२२॥

---

केनचिदपि प्रकारेण जन्म सम्भवति। न तावत्स्वयमेवा-ऽपरिनिष्पन्नात्स्वरूपात् स्वमेव जायते यथा घटस्तस्मा-देव घटात्। नापि परत अन्यस्मादन्यो यथा घटात्पटः पटात् पटान्तरं तथा नोभयतः। विरोधात्। यथा घटपटाभ्यां घटः पटो वा जायते। ननु मृदो घटो जायते पितुश्च पुत्रः सत्यम् अस्ति जायत इति प्रत्यय' शब्दश्च मूढानां तावेव शब्दप्रत्ययौ विवेकिभिः परीक्ष्येते

किं सत्यमेव तौ उत इत्येवेति यावता परीक्ष्यमाणे। शब्द-
प्रत्ययविषयं वस्तु घटपटादिलक्षणं शब्दमात्रमेव तत्।
वाचारम्भणमिति श्रुतेः। सच्चेन्न जायते सत्त्वात् मृत्पि-
ण्डादिवत्। यद्यसत्तथापि न जायते न विद्यत अस-
त्त्वादेव शशविषाणवत्। अथ सदसत्तथापि जायते
विरुद्धस्यैकस्यासम्भवात्। अतो न किञ्चिद्वस्तु जायत इति
सिद्धम्। येषां पुनर्जनिरेव जायत इति क्रियाकारक-
फलैकत्वमभ्युपगम्यते क्षणिकत्वञ्च वस्तुनः। ते दूरत एव
न्यायापेताः। इदमित्थमित्यवधारणक्षणान्तरानवस्थानात्
अननुभूतस्य स्मृत्यनुपपत्तेश्च ॥२२॥

---

जायमानो दृश्यते। तथा जायमानं चास्मादन्यस्माच्च भवतीत्युप-
पन्नमित्यर्थः। अन्यत्व सत्यपि जन्यजनकभावस्य प्रत्यक्षत्वात्सामर्थ्ये शक्यते
प्रतिक्षेप्तुमिति शङ्कते। नन्विति ॥ किं प्रत्यक्षानुसारिणौ शब्दप्रत्यया-
वविवेकिनामिष्येते किं वा विवेकिनामिति विकल्पमाद्यमङ्गीकरोति।
सत्यमिति ॥ द्वितीयं प्रत्याह। तावेवेति ॥ इत्येवेति परीक्ष्यमाणे
इतीति सम्बन्धः। तत्र जन्मशब्दधीविषयं वस्तु शब्दमात्रमेव। वाचा-
रम्भणश्रवणात्परमार्थतो यावता विद्यते। तस्मादसत्यालम्बनत्वमेव
शब्दप्रत्यययोरेष्टव्यमिति योजना ॥ चतुर्थं शिथिलयति। सच्चेदिति ॥
पञ्चमं निराकरोति। यद्यीति ॥ षष्ठं प्रत्यादिशति। अथेत्यादिना ॥
षण्णां विकल्पानां निरासे फलितं निगमयति। अतो नेति ॥ क्रियाका-
रकफलनानात्वपक्षे च जन्मानुपपत्तिदोषमुक्त्वा पक्षान्तरमनूद्य दूषयति।
येषां पुनरिति ॥ बौद्धानां न्यायारम्भेन वस्तु व्यवस्थापयतः कुतो
न्यायबाह्यत्वमित्याशङ्क्याह। इदमिति ॥ इदमा वस्तु परामृष्टम्।
इत्थमिति क्षणिकत्व विवक्षितम्। एवमवधारणावच्छिन्ने क्षणे वस्त्व-
न्तरेकक्षणातिरिक्ते वस्तुनोऽवस्थानाभावाच्च तस्मिन्ननुभव, स्मिष्यती-

**प्रज्ञप्तेः सनिमित्तत्वमिष्यते युक्तिदर्शनात् ।**

---

न हि विज्ञानमात्रे संक्लेशवे युक्तः । अन्यथादर्शनादित्यभिप्रायः ॥२४॥

अत्रोच्यते बाढम् एवं प्रज्ञप्तेः सनिमित्तत्वं द्वयसंक्लेशोपलब्धियुक्तिदर्शनादिष्यते त्वया । स्थिरीभव तावत्त्वं युक्तिदर्शनं वस्तुनस्तथात्वाभ्युपगमे कारणमित्यत्र ब्रूहि किन्तत इति । उच्यते । निमित्तस्य प्रज्ञप्त्यालम्बनाभिमतस्य तव घटादेरनिमित्तत्वमनालम्बनत्वं वैचित्र्याहेतुत्वमिष्यतेऽस्माभिः कथं भूतदर्शनात् परमार्थदर्शनादित्येतत् । न हि घटो यथाभूतमृद्रूपदर्शने सति तद्व्यतिरेकेणास्ति । यथाऽश्वान्महिषः पटो वा तन्तुव्यतिरेकेण ।

---

हेत्वभावमाह । न हीति । अन्यत्र दाहच्छेदादिव्यतिरिक्ते चन्दनपङ्कलेपादावित्यर्थः ॥२४॥

द्वाभ्यामर्धाभ्यां पूर्वपक्षिणा बाह्यार्थवादे प्राप्ते विज्ञानवादमुद्भावयति । प्रज्ञप्तेरिति । वस्तु का नाम वस्तुव्यतिरिक्तमित्याशङ्क्याह । निमित्तस्येति । मतान्तरे प्राप्ते तन्निराकरणमुच्यते । विज्ञानवादिनेति । श्लोकस्य तात्पर्यमाह । अत्रेति । तत्र पूर्वार्धं विभजते । बाढमित्यादिना । द्वैतिनस्तव तर्कप्रधानतास्य प्रतीतिमात्रशरणस्य युक्तेति मत्वाह । स्थिरीभवेति । वस्तुनो बाह्यस्यार्थस्य तथात्वं प्रज्ञप्तिविषयत्वं तस्याभ्युपगमे कारणं प्रागुक्तयुक्तिदर्शनमित्येतस्मिन्नर्थे त्वं स्थिरीभवेति योजना । विचारदृष्टिमेवावष्टभ्याहं वर्मी कितत्तो दूषणं ब्रूहीति पृच्छति । ब्रूहीति । तत्रोत्तरार्धं सिद्धान्ती व्याकुर्वन्नुत्तरमाह । उच्यत इत्यादिना । घटादेर्वैचित्र्याहेतुत्वे प्रश्नपूर्वकं हेतुमाह । कथमित्यादिना । परमार्थदर्शनं प्रपञ्चयति । न हीति । तत्र वैधर्म्यदृष्टान्तमाह ।

चित्तं न संस्पृशत्यर्थं नार्थाभासं तथैव च ।
अभूतो हि यतश्चार्थो नार्थाभासस्ततः पृथक् ॥२६॥

यस्मान्नास्ति बाह्यं निमित्तम् अतश्चित्तं न स्पृशत्यर्थं बाह्यालम्बनविषयम्, नाप्यर्थाभासं चित्तत्वात्स्वप्नचित्तवत् । अभूतो हि जागरितेऽपि स्वप्नार्थवदेव बाह्यः शब्दाद्यर्थो यत उक्तहेतुत्वाच्च नाप्यर्थाभासश्चित्तात्पृथक् । चित्तमेव हि घटाद्यर्थवदवभासते यथा स्वप्ने ॥२६॥

---

युक्तमर्थोपपत्तिद्वयं कथं निरसनीयमित्याह । एतेनेति । तत्त्वदर्शिना स्फुरणातिरिक्तवस्त्वनुपलम्भप्रदर्शनेन वैचित्र्यदर्शन दुःखोपलब्धिश्च प्रयुक्ता । तेनानुपपद्यमानार्थोपपत्तिद्वयस्यानुत्थानम् । व्यवहारदृष्ट्या तु पूर्वं भ्रमसमारोपितसर्ववदेव संवेदने वैचित्र्यं दुःखव्यवहाराङ्गमित्यन्यथाप्युपपत्तिरित्यर्थः ॥२५॥

ज्ञानस्य सालम्बनत्वप्रसिद्धेस्तद्दृष्ट्या अर्थाभावे ज्ञानमपि न स्यादित्याशङ्क्याह । चित्तमिति । न हि स्फुरणं सकर्मकं तस्य सकर्मकत्वप्रसिद्ध्यभावात् । जानातेस्तु सकर्मकत्वं क्रियाफलत्वकल्पनया ज्ञेयमिति भावः । चित्तस्यार्थस्पर्शित्वाभावेऽपि तदाभासस्पर्शित्वं स्यादित्याशङ्क्याह । नार्थेति । तत्र हेतुमाह । अभूत इति । प्रथमपादं व्याचष्टे । यस्मादिति । विमतं चित्तमर्थाभासमपि न स्पृशति चित्तत्वात् सम्प्रतिपन्नवदिति द्वितीयं पादं विभजते । नापीति । न हि दृष्टान्ते तस्यार्थाभासस्पर्शित्वं तस्यैव तदात्मना भानादित्यर्थः । तृतीयपादं व्याकरोति । अभूतो हीति । विमतोऽर्थो मृषा भवति धर्मित्वात् सम्प्रतिपन्नवदित्यनुमानान्न ज्ञानस्यालम्बनमित्यर्थः । विमतोऽर्थः स्वविषयज्ञानजनको न भवति भ्रान्तिविषयत्वात् सम्प्रतिपन्नवदित्युक्तमनुमानं स्मारयति । उक्तेति । अर्थजन्यत्वाभावे विज्ञानस्यार्थाभासजन्यत्वं स्यादित्याशङ्क्य चतुर्थपादार्थमाह । नापीति ॥२६॥

निमित्तं न सदा चित्तं संस्पृशत्यध्वसु त्रिषु ।
अनिमित्तो विपर्य्यासः कथं तस्य भविष्यति ॥२७॥

ननु विपर्य्यासस्तर्हि असति घटादौ घटाद्याभासता चित्तस्य तथा च सत्यविपर्य्यासः क्वचिद्वक्तव्य इति । अतोच्यते । निमित्तं विषयमतीतानागतवर्त्तमानाध्वसु त्रिष्वपि सदा चित्तं न स्पृशेदेव हि । यदि हि क्वचित्संस्पृशेत्सोऽविपर्य्यासः परमार्थत इति । अतस्तदपेक्षयाऽसति घटे घटाभासता विपर्य्यासः स्यात् न तु तदस्ति कदाचिदपि चित्तस्यार्थसंस्पर्शनम् । तस्मादनिमित्तो विपर्य्यासः कथं तस्य चित्तस्य भविष्यति न कथञ्चिद्विपर्य्यासोऽस्तीत्यभिप्राय । अयमेव हि स्वभावश्चित्तस्य । यदुतासति निमित्ते घटादौ तद्वदवभासनम् ॥२७॥

---

ज्ञानस्य सालम्बनत्वाभावे तस्य तथात्वमपि भ्रान्तिर्भवेत् । भ्रान्तिश्चाभ्रान्तिप्रतियोगिनीत्यन्यथाख्यातिमतमाशङ्क्याह । निमित्तमिति । कालत्रयेऽपि ज्ञानस्य वस्तुतोऽर्थस्पर्शित्वाभावे तद्वासनाभावात् तत्सत्यता नान्यथाख्यातिं सिध्यति । भ्रान्तिस्तु विचारदशायामपि भविष्यतीत्याह । अनिमित्त इति । श्लोकस्यावर्त्तनीमाशङ्कां दर्शयति । नन्विति । यदि घटादिरालम्बनोऽर्थो न स्पृश्यते तर्हि तस्मिन्नसत्येव तदाभासत्वाज्ज्ञानस्य विपर्य्यास । अतस्मिंस्तद्बुद्धिरूपत्वात् । विपर्य्यासे च लोकते क्वचिदप्यविपर्य्यासो वक्तव्य । भ्रान्तेरभ्रान्तिपूर्वकत्वस्यान्यथाख्यातिवादिभिरिष्टत्वादित्यर्थः । तत्र पूर्वार्द्धयोजनया परिहरति । अतोेति । उक्तमेवार्थमुत्तरार्द्धयोजनार्थं साधयति । यदीति । अर्थस्पर्शाभावादसत्येव भ्रान्तरसति घटादौ घटाद्याभासता ज्ञानस्य कथं निरूढेत्याशङ्क्याह । अयमेवेति । स्वभावमव्यक्ता

तस्मान्न जायते चित्तं चित्तदृश्यं न जायते।

प्रज्ञप्तेः सनिमित्तत्वमित्याद्येतदन्तं विज्ञानवादिनो बौद्धस्य वचनं बाह्यार्थवादिपक्षप्रतिषेधपरमाचार्य्येणानुमोदितम्। तदेव हेतुं कृत्वा तत्पक्षप्रतिषेधाय तदिदमुच्यते तस्मादित्यादि। यस्मादसत्येव घटादौ घटाद्याभासता चित्तस्य विज्ञानवादिनाऽभ्युपगता तदनुमोदितमस्माभिरपि भूतदर्शनात् तस्मात्तस्यापि चित्तस्य जायमानावभासताऽसत्येव जन्मनि युक्ता भवितुमित्यतो न जायते चित्तम्। यथा चित्तदृश्यं न जायते अतस्तस्य चित्तस्य ये जातिं पश्यन्ति विज्ञानवादिनः क्षणिकदुःखशून्यत्वानात्मत्वादि च। तेनैव चित्तेन चित्तस्वरूपं द्रष्टुमशक्यं पश्यन्तः खे वै पश्यन्ति ते पदं पक्ष्यादीनाम्। अत इतरे-

विद्योच्यते। न हि भ्रान्तिरभ्रान्तिपूर्व्विकेति नियमः। सविषयाया भ्रान्तेः णामविद्यात्वाभ्युपगमादित्यर्थः ॥२७॥

बाह्यार्थवादिपक्षमेव विज्ञानवादिमुखेन प्रतिक्षिप्य विज्ञानवादिनमिदानीमपवदति। तस्मादिति॥ प्रतिक्षणं विज्ञानस्य जन्म दृश्यते विज्ञानवादिभिरित्याशङ्क्याह। तस्येति॥ उक्तमर्थोत्कीर्तनपूर्व्वकं श्लोकस्य तात्पर्य्यमाह। प्रज्ञप्तेरिति॥ तत्र बाह्यार्थवादिनो बाह्योऽर्थो विज्ञानवदस्तीति पक्षप्रतिषेधमुखेनाप्रवृत्तं तत्पुनराचार्य्येण भवत्वेवमित्यभ्यनुज्ञातम्॥ बाह्यार्थवाददूषणस्य स्वमतेऽपि सम्मतत्वादित्याह। बाह्यार्थ इति॥ बाह्यार्थवाददूषणानुमोदनप्रयोजनमाह। तदेवेति॥ असत्येव घटादौ घटाद्याभासत्वं विज्ञानस्य यदुक्तं तदेव हेतुत्वेनोपादाय विज्ञानवादनिषेधार्थं बाह्यार्थपक्षदूषणमनुमोदितमित्यर्थः॥ सम्प्रति विज्ञानवादमपवदति। तदिदमिति॥ तस्मादित्यादि व्याचष्टे।

प्रकृतेरन्यथाभावो न कथञ्चिद्भविष्यति ॥२८॥
अनादेरन्तवत्त्वञ्च संसारस्य न सेत्स्यति ।

जातं तत्फलोपसंहारार्थोऽयं श्लोक । अजातं यच्चित्तं ब्रह्मैव जायत इति वादिभि परिकल्प्यते तदजातं जायते यस्मादजातिः प्रकृतिस्तस्य ततस्तस्मादजातरूपायाः प्रकृतेरन्यथाभावो जन्म न कथञ्चिद्भविष्यति ॥२८॥

अयञ्चापर आत्मन संसारमोक्षयो परमार्थसद्भाववादिना दोष उच्यते । अनादेरतीतकोटिरहितस्य संसारस्यान्तवत्त्वं समाप्तिर्न सेत्स्यति युक्तितः सिद्धिं नोपयास्यति। न ह्यनादिः सन्नन्तवान् कश्चित्पदार्थो दृष्टो लोके । बीजाङ्कुरसम्बन्धनैरन्तर्यविच्छेदो दृष्ट इति चेत् । न। एकवस्तु-

अनन्तता चादिमतो मोक्षस्य न भविष्यति ॥३०॥
आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा ।
वितथैः सदृशाः सन्तोऽवितथा इव लक्षिताः ॥३१॥
सप्रयोजनता तेषां स्वप्ने विप्रतिपद्यते ।
तस्मादाद्यन्तवत्त्वेन मिथ्यैव खलु ते स्मृताः ॥३२॥

---

भावेनापोदितत्वात् । तथाऽनन्तताऽपि विज्ञानप्राप्तिकालप्रभवस्य मोक्षस्यादिमतो न भविष्यति । घटादिष्वदर्शनात् । घटादिविनाशवदवस्तुत्वाददोष इति चेत् । तथा च मोक्षस्य परमार्थसद्भावप्रतिज्ञाहानिः । असत्त्वादेव शशविषाणस्येवादिमत्त्वाभावश्च ॥३०॥

वैतथ्ये कृतव्याख्यानौ श्लोकाविह संसारमोक्षाभावप्रसङ्गेन पठितौ ॥३१॥३२॥

---

योऽनादिभावः सोऽनन्तवानिति व्याप्तिरात्मनि व्यभिचरतीत्याह । न हीति । बीजाङ्कुरयोर्हेतुफलभावेन सम्बन्धस्य नैरन्तर्यं सन्तानस्तस्यानादिभावत्वेऽपि विच्छेददर्शनात्स्य दृष्टत्वादनैकान्तिकतेति शङ्कते । बीज । भावत्वविशेषणात्स्य तत्रावर्तनान्न व्यभिचारशङ्केति दूषयति । नैकेति द्वितीयार्धं व्याचष्टे । तथेति । यदादिमत्त्वं तत्र नाशवत्त्वमिति व्याप्तिभूमिमाह । घटादिष्विति । यथा कृतकाऽपि घटादिध्वंसो नित्यस्तथा बन्धध्वंसोऽपि भविष्यतीत्यनैकान्तिकत्वमाशङ्कते । घटादीति । मोक्षस्याभावत्वे सति परमार्थसत्त्वप्रतिज्ञा भज्यतेति दूषयति । तथा चेति । किञ्च प्रागभावः सत्ता समवायरूपं कार्यत्वं तन्नापि मोक्षस्याभावे न सिद्ध्यतीत्याह । असत्त्वादिति ॥३०॥

अस्तु तर्हि मोक्षस्याद्यन्तवत्त्वं तत्राह । आदाविति । यदि स्वप्नोदकादि स्वप्ने तथा वस्तुतो नास्तीति तावत् । वितथैरेव

सर्वे धर्मा मृषा स्वप्ने कायस्यान्तर्निदर्शनात् ।
संवृतेऽस्मिन् प्रदेशे वै भूतानां दर्शनं कुतः ॥२३॥
न युक्तं दर्शनं गत्वा कालस्यानियमाद्गतौ ।

निमित्तस्यानिमित्तत्वमिष्यते भूतदर्शनादित्ययमर्थः प्रपञ्च्यते एतैः श्लोकैः ॥२३॥

जागरिते गत्वागमनकालौ नियतौ देशः प्रमाणतो

मरीच्युदकादिभिः सादृश्यमाद्यन्तवत्त्वम् । वितथा मोक्षादयो न परमार्थसन्तो भवितुमर्हन्ति आद्यन्तवत्त्वान्मरीच्युदकादिवदित्यर्थः ॥ कथं तर्हि मोक्षादीनामपि तथात्वमपेक्ष्याशङ्क्याह । अवितथा इति ॥ लक्षिता मूढैरविचारकैरिति शेषः । कूपरोदकादीनां स्नानपानादिप्रयोजनानुपलम्भान्मोक्षस्वर्गादीनान्तु सुखादिप्राप्तिप्रयोजनप्रतिलम्भाच्च मोक्षादिवैतथ्यमित्याशङ्क्याह । सप्रयोजनतेति ॥ तथा मोक्षादीनामिति यावत् । पुनरुक्तिशङ्कां वारयति । वैतथ्य इति ॥२१॥२२॥

किञ्च येन हेतुना स्वप्नस्य मिथ्यात्वमिष्टं तस्य जागरितेऽपि तुल्यत्वात्तस्मादिरहितं संविन्मात्रं तत्त्वमेष्टव्यमिति विवक्षित्वाह । सर्वेति ॥ यदि देहान्तर्दर्शनान्मिथ्यात्वं स्वप्नस्येष्टं तर्हि वैराजदेहे दृश्यस्य जागरितस्य दर्शनात् मिथ्यात्वं दुर्वारमित्यर्थः । किञ्च योग्यदेशवैधुर्यान्मिथ्यात्वं स्वप्नस्य यद्यभीष्टं तर्हि संवृते प्रदेशे प्रत्यग्भूते सच्चिदानन्दैकरसे भूतानां विद्यमानानां दर्शनं न कुतोऽपि स्यात् अच्छायोऽनवकाशत्वादित्याह । संवृत इति ॥ अवतारितश्लोकस्थितानामुत्तरश्लोकानां तात्पर्याभावमित्याशङ्क्यात्मनानां तात्पर्यमाह । निमित्तस्येति ॥२३॥

उक्तमेवार्थं प्रपञ्चयति । न युक्तमित्यादिना ॥ स्वप्नदेशान्तरगतौ नियतकालाभावाच्च गत्वा दर्शनमिष्टं यथा पटलादूर्ध्वमर्चिरादिमार्गेण गत्वा सद्ब्रह्मदर्शनमयुक्तं कालानवच्छिन्नत्वादित्यर्थः । किञ्च यद्देशस्थः

प्रतिबुद्धश्च वै सर्वस्तस्मिन् देशे न विद्यते ॥३४॥
मित्राद्यैः सह संमन्त्र्य सम्बुद्धो न प्रपद्यते ।
गृहीतञ्चापि यत्किञ्चित्प्रतिबुद्धो न पश्यति॥३५॥

---

यस्तस्यानियमात् नियमस्याभावात् स्वप्ने न देशान्तरगमनमित्यर्थः ॥३४॥

मित्राद्यैः सह संमन्त्र्य तदेव मन्त्रणं प्रतिबुद्धो न प्रपद्यते। गृहीतञ्च यत्किञ्चित् हिरण्यादि न प्राप्नोति। गतश्च न देशान्तरं गच्छति स्वप्ने ॥३५॥

---

यत्र पश्यति प्रतिबुद्धस्तस्मिन्देशे नास्तीति मिथ्यात्वमभीष्टम्। यथा यस्मिन्देशे स्थित स्वप्नमनुभवति स्वप्नभावे प्रतिपन्नस्तस्मिन्देश नास्ति परिपूर्णमखिलरूपेणावस्थानादतो जागरितस्यापि मिथ्यात्वमेष्टव्यमित्याह। प्रतिबुद्धश्चेति। श्लोकस्य तात्पर्यार्थं कथयति। जागरित इति ॥३४॥

स्वप्ने चावस्तुकः कायः पृथगन्यस्य दर्शनात्।
यथा कायस्तथा सर्वं चित्तदृश्यमवस्तुकम्॥३६॥
ग्रहणाज्जागरितवत्तद्धेतुः स्वप्न इष्यते।

---

स्वप्ने चाटन् दृश्यते यः कायः सोऽवस्तुकस्ततोऽन्यस्य स्वापदेशस्थस्य पृथक्कायान्तरस्य दर्शनात्। यथा स्वप्नदृश्यः कायोऽसंस्तथा सर्वं चित्तदृश्यमवस्तुकं जागरितेऽपि चित्तदृश्यत्वादित्यर्थः। स्वप्नसमत्वादसज्जागरितमपीति प्रकरणार्थः॥३६॥

इतश्चासत्त्वं जाग्रद्वस्तुनो जागरितवज्जागरितस्येव ग्रहणाद् ग्राह्यग्राहकरूपेण स्वप्नस्य तज्जागरितं हेतुरस्य स्वप्नस्य हेतुर्जागरितकार्यमिष्यते। तद्धेतुत्वाज्जागरितकार्यत्वात्तस्यैव स्वप्नदृश एव सज्जागरितं न त्वन्येषाम्।

---

किञ्च स्वप्नावस्थायां येन देहेन नद्यादिषु पर्यटति स मिथ्या पृथग्भूतस्य निश्चलस्य दर्शनात्। तथा जागरिते यो न परिव्राजकादिशरीरेण लोकस्य पूज्यो हेयो वा दृश्यते स मिथ्या कथ्यते। पृथगेव कूटस्थब्रह्मात्मशरीरस्यानुभवादित्याह। स्वप्ने चेति॥ किञ्च यथा स्वप्नदेहो मिथ्या तथा चित्तदृश्यं जडं सर्वमवस्तु च मिथ्याभूतमेवेति तथ्यमित्याह। यथेति॥ पूर्वार्द्धगतान्यक्षराणि योजयति। स्वप्ने इति॥ उत्तरार्द्धगतानि व्याकरोति। यथेत्यादिना॥ प्रकरणार्थमुपसंहरति। स्वप्नेति॥३६॥

यथा जागरितं तथा स्वप्नो दृश्यते। तथा स्वप्नस्य जागरितकार्यत्वाच्च स्वप्नद्रष्टा तस्यैव जागरितं सदिति स्वप्नवत्तन्मिथ्यात्वमित्याह। ग्रहणादिति॥ किञ्च जागरितस्य विद्यमानत्वमनेकसाधारणत्वं वस्तुनो नास्ति स्वप्नकारणत्वात् किन्तु तथा भासमानत्वमित्याह।

तद्धेतुत्वात्तु तस्यैव सज्जागरितमिष्यते ॥३७॥
उत्पादस्याप्रसिद्धत्वादजं सर्वमुदाहृतम् ।
न च भूतादभूतस्य सम्भवोऽस्ति कथञ्चन ॥३८॥

---

यथा स्वप्न इत्यभिप्रायः । यथा स्वप्नः स्वप्नदृश एव सन् साधारणविद्यमानवस्तुवदवभासते तथा तत्कारणत्वात्साधारणविद्यमानवस्तुवदवभासनं न तु साधारणं विद्यमानवस्तु स्वप्नवदेवेत्यभिप्रायः ॥३७॥

ननु स्वप्नकारणत्वे जागरितवस्तुनो न स्वप्नवदवस्तुत्वम् । अत्यन्तचलो हि स्वप्नो जागरितन्तु स्थिरं लक्ष्यते । सत्यमेवमविवेकिनां स्यात् विवेकिनान्तु न कस्यचित् वस्तुन उत्पादः प्रसिद्धोऽतोऽप्रसिद्धत्वादुत्पादस्यात्मैव सर्वमित्यजं सर्वमुदाहृतं वेदान्तेषु सबाह्याभ्यन्तरो ह्यज इति । यदपि

---

तद्धेतुत्वादिति । जागरितस्य स्वप्नो प्रत्यवे हेत्वन्तरमाह । दर्शयति । इतश्चेति । इतःशब्दार्थमेव स्फोरयन् पूर्वार्द्धं ... जागरितवदिति । उत्तरार्द्धं योजयति । तद्धेतुत्वादिति । यदि प्रमाणादि बाध्यत्वं स्वप्नस्य मिथ्यात्वं जागरितस्य पुनस्तदनुपलम्भात् परमार्थेन सत्त्वम् । कार्यस्य मिथ्यात्वे कारणस्यापि मिथ्यात्वमिति मानाभावात् । न हि सर्वं साधारणं विद्यमानं वस्तु जागरिते मिथ्या भवितुमर्हति मित्याशङ्क्याह यथेत्यादिना ॥ ३७ ॥

कार्यकारणभावेऽपि स्वप्नजागरितयोर्न मिथ्यात्वमविशिष्टमत्यन्तवैलक्षण्यादित्याशङ्क्याह । तत्र दर्शयति । यद्यपि कार्यकारणत्वं सत्यासत्ययोरिव स्वप्नजागरितयोरिष्टं तद् दुरूहमित्याह । न चेति । स्वाभाविकमर्थान्तरमाह । नन्विति । किमिदं वैलक्षण्यमविवेकिनां

असज्जागरिते दृष्ट्वा स्वप्ने पश्यति तन्मयः ।

---

मन्यसे जागरितात्ततोऽसत्स्वप्नो जायत इति तदसत् । न भूताद्विद्यमानादभूतस्यासतः सम्भवोऽस्ति लोके । न ह्यसतः शशविषाणादेः सम्भवो दृष्टः कथञ्चिदपि ॥३८॥

ननु उक्तं त्वयैव स्वप्नो जागरितकार्य्यमिति तत्कथमुत्पादो प्रसिद्ध इत्युच्यते । शृणु तत्र यथा कार्य्यकारणभावोऽस्माभिरभिप्रेत इति असद्विद्यमानं रज्जुसर्पवद्विकल्पितं वस्तु जागरिते दृष्ट्वा तद्भावभावितस्तन्मयः स्वप्ने जागरितवद्ग्राह्यग्राहकरूपेण विकल्पयन् पश्यति

---

प्रतिभाति किं वा विवेकिनामिति विकल्पद्वयमङ्गीकरोति । मन्यस इति ॥ द्वितीयं प्रत्याह । विवेकिनान्त्विति ॥ द्वितीयभागमाकाङ्क्षाद्वारा विभजते । यद्यपीत्यादिना ॥ सम्भवो नामतोऽस्तीत्येतद् दृष्टान्तेन साधयति । न ह्यसत इति । कथञ्चिदपि सतोऽसतो वेत्यर्थः ॥३८॥

यदुक्तमुत्पादस्याप्रसिद्धत्वं तदयुक्तम् । स्वप्नजागरितयोस्तत्कार्य्यकारणत्वाङ्गीकरणादित्याशङ्क्याह । असदिति ॥ जागरिते दृष्टस्य स्वप्ने दर्शनात् ॥ जागरितस्य स्वप्नम्प्रति कारणत्वं चेत्तर्हि स्वप्ने दृष्टस्य जागरितेऽपि दर्शनात्तस्य जागरितम्प्रति कारणत्वं किं न स्यादित्याशङ्क्याह । असत्स्वप्नेऽपीति ॥ श्लोकव्याख्यामाशङ्कामुखापयति । नन्विति ॥ पूर्व्वापरविरोधे चोदिते परिहारे कथ्यमाने मनःसमाधानं प्रार्थ्यते । शृण्विति ॥ तमेव प्रकारं प्रकटयन्नक्षराणि योजयति । असदिति ॥ तुच्छत्वं व्यवच्छिनत्ति । रज्ज्विति ॥ दर्शनस्याभासत्वं सूचयति । विकल्पितमिति ॥ यथा जाग्रद्दृष्टस्य विशेषस्य स्वप्ने दर्शनाज्जागरितवासनाधीनः स्वप्नो जागरितकार्य्यत्वेन व्यवह्रियते तथा स्वप्ने दृष्टस्य जागरितेऽपि दर्शनात्तत्कार्य्यत्वं जागरितस्य प्राप्तमित्याशङ्क्य द्वितीयार्द्धं व्याचष्टे । तथेति ॥ यत्तु स्वप्नजागरितयोरुक्तं कार्य्य-

असत्स्वप्नेऽपि दृष्ट्वा च प्रतिबुद्धो न पश्यति ॥३९॥
नास्त्यसद्धेतुकमसत् सदसद्धेतुकन्तथा ।

---

तथा सत्स्वप्नेऽपि दृष्ट्वा च प्रतिबुद्धो न पश्यति अविकल्पयन् च शब्दात्। तथा जागरितेऽपि दृष्ट्वा स्वप्ने न पश्यति कदाचिदित्यर्थः। तस्माज्जागरितं स्वप्नहेतुरुच्यते न तु परमार्थसदिति कृत्वा ॥३९॥

परमार्थतस्तु न कस्यचित्केनचिदपि प्रकारेण कार्य्यकारणभाव उपपद्यते कथं नास्त्यसद्धेतुकमसच्छशविषाणादि हेतुः कारणं यस्यासत एव खपुष्पादेस्तदसद्धेतुकमसन्न विद्यते। यथा सदपि घटादिवस्तु। असद्धेतुकं शशविषाणादिकार्य्यं नास्ति। तथा सच्च विद्यमानं घटादि-

सच्च सद्धेतुकं नास्ति सद्धेतुकमसत्कुतः ॥४०॥
विपर्य्यासाद्यथा जाग्रदचिन्त्यान् भूतवत् स्पृशेत्।
तथा स्वप्ने विपर्य्यासाद्धर्मांस्तत्रैव पश्यति ॥४१॥

---

वस्त्वन्तरं कार्यं नास्ति। सत्कार्य्यमसत्कुत एव सम्भवति। न चान्यः कार्य्यकारणभावः सम्भवति शक्यो वा कल्पयितुम्। अतो विवेकिनामसिद्ध एव कार्य्यकारणभावः कस्यचिदित्यभिप्रायः ॥४०॥

पुनरपि जाग्रत्स्वप्नयोरसतोरपि कार्य्यकारणभावाशङ्कामपनयन्नाह। विपर्यासादविवेकतो यथा जाग्रज्जागरितेऽचिन्त्यान् भावान् शक्यचिन्तनीयान् रज्जुसर्पादीन् भूतवत्परमार्थवत्स्पृशेत् स्पृशन्निव विकल्पयेदित्यर्थः। कश्चिद्यथा तथा स्वप्ने विपर्य्यासाद्धस्त्यादीन् पश्यन्निव विकल्पयति तत्रैव पश्यति न तु जागरितादुत्पद्यमाना-दित्यर्थः ॥४१॥

---

कारणत्वं यथा कथा च प्रक्रियया प्रतिपादयितुमुचितम् अन्यथा प्रसिद्ध प्रकोपादित्यादि विवृणोति। कथमिति। अनिर्वाच्य मायामयं कार्य-कारणत्वं प्रतीतिमात्रसिद्धमयौक्तिकमविचारसिद्धमित्यभिसन्धा-याद्यं पादं विभजते। नास्तीत्यादिना। द्वितीयं पादं व्याचष्टे। तथे-त्यादिना। तृतीयं पादं व्याकरोति। तथा सदिति। चतुर्थपादार्थ-माह। असदिति। अस्तु तर्हि प्रकारान्तरेण कार्यकारणभाव इत्या-शङ्क्य योग्यानुपलब्धिविरुद्धत्वान्मैवमित्याह। न चेति ॥४०॥

स्वप्नजागरितयोर्वस्तुतो नास्ति कार्यकारणत्वमित्यत्रैव हेत्वन्तर-माह। विपर्य्यासादिति। श्लोकस्य तात्पर्यमाह। पुनरपीति। अक्षरार्थं कथयति। विपर्यासादित्यादिना। कश्चिदित्यस्य पूर्वेण

उपलम्भात् समाचारादस्ति वस्तुत्ववादिनाम् ।
जातिस्तु देशिता बुद्धैरजातेस्त्रसतां सदा ॥४२॥

---

यापि बुद्धैरद्वैतवादिभिर्जातिर्देशितोपदिष्टा । उपलम्भनमुपलम्भस्तस्मादुपलब्धेरित्यर्थः । समाचाराद्वर्णाश्रमादिधर्मसमाचरणाच्च ताभ्यां हेतुभ्यामस्ति वस्तुत्ववादिनामस्ति वस्तुभाव इत्येवं वदनशीलानां दृढग्राहवतां श्रद्दधानानां मन्दविवेकिनामर्थोपायत्वेन सा देशिता जातिस्तां गृह्णन्तु तावत् । वेदान्ताभ्यासिनान्तु स्वयमेवाजाद्वयात्मविषयो विवेको भविष्यतीति न तु परमार्थबुद्ध्या । ते हि श्रोत्रियाः । स्थूलबुद्धित्वादजातेः । अजातिवस्तुनः सदा त्रसन्त्यात्मनाशं मन्यमाना अविवेकिन इत्यर्थः ॥४२॥

---

क्रियापदेन सम्बन्धः । दृष्टान्तमनूद्य दार्ष्टान्तिकमाह । यथेत्यादिना ॥४१॥

नन्वद्वये कार्यकारणत्वस्याप्रसिद्धत्वे कथं जन्मादिसूत्रमनुसृत्य जगत्कारणं ब्रह्म सूचितमित्याशङ्क्याह । उपलम्भादिति ॥ अविवेकिनां विवेकोपायत्वेन कार्यकारणत्वमुपेत्य सूत्रकारप्रवृत्तिरित्यर्थः । श्लोकाक्षराणि व्याचष्टे । यापीत्यादिना ॥ अस्ति वस्तुभावो द्वैतस्येति यत् । कार्यकारणभावमुपेत्य जन्मोपदिष्टामद्वैतवादिना मन्दविवेकिषु विवेकोपायत्वेन कथं तदुपदेशः स्यादित्याशङ्क्याह । तामिति ॥ यदा तु ब्रह्मणः सकाशादेव जगदुत्पत्तिरभ्युपेता तदा तदतिरेकेण जगतोऽभावात् ब्रह्मैव सर्वमिति निश्चितम् । तद्विषयं च वेदान्तेषु पौर्वापर्यपर्यालोचितेषु तदभ्यासिनां तेषां तदभ्यासप्रसादादेव कूटस्थाद्वितीयवस्तुविवेकोदयात् सद्वस्तुतोऽभिप्रायाद्द्वैतवादिभिर्जातिरुपदिष्टा न तु द्वैतस्य श्रुतितो न्यायतश्च निरूपयितुमश

अजातेस्त्रसतान्तेषामनुपलम्भाद्वियन्ति ये।
जातिदोषा न सेत्स्यन्ति दोषोऽप्यल्पो भविष्यति॥४३॥
उपलम्भात् समाचारान्मायाहस्ती यथोच्यते।

उपायः सोऽवताराये त्युक्तम्। ये, चैवमुपलम्भात् समाचाराद्वाऽजातेरजातिवस्तुनस्त्रसन्तो ऽस्ति वस्त्विति अद्वयात्मनो वियन्ति विरुद्धं यान्ति द्वैतं प्रतिपद्यन्त इत्यर्थः। तेषामजातेस्त्रसतां श्रद्दधानानां सन्मार्गावलम्बिनां जातिदोषा जात्युपलम्भकृता दोषा न सेत्स्यन्ति सिद्धिं नोपयास्यन्ति। विवेकमार्गप्रवृत्तत्वात्। यद्यपि कश्चिद्दोषः स्यात् सोऽप्यल्प एव भविष्यति। सम्यग्दर्शनाप्रतिपत्तिहेतुक इत्यर्थः॥४३॥

ननूपलम्भसमाचारयोः प्रमाणत्वाद्दस्त्वेव द्वैतं वस्त्विति।

अतस्तु परमार्थतत्त्वं गृहीत्वा जातिरुपदिष्टेत्यजातिरेव पारमार्थिकी त्यर्थः। चतुर्थपादार्थमाह। ते इति॥४२॥

उपलम्भात् समाचारादस्ति वस्तु तथोच्यते ॥४४॥
जात्याभासं चलाभासं वस्त्वाभासं तथैव च ।
अजाचलमवस्तुत्वं विज्ञानं शान्तमद्वयम् ॥४५॥

---

लोपलम्भसमाचारयोर्व्यभिचारात् । कथं व्यभिचार इत्युच्यते । उपलभ्यते हि मायाहस्ती हस्तीव हस्तिवत् समाचर्यते बन्धनारोहणादिहस्तिसम्बन्धिभिर्धर्मैर्हस्तीति चोच्यते । असन्नपि यथा तथैवोपलम्भात् समाचाराद् द्वैतं भेदरूपमस्ति वस्त्वित्युच्यते । तस्मान्नोपलम्भसमाचारौ द्वैतवस्तुसद्भावे हेतू भवत इत्यभिप्रायः ॥४४॥

किम्पुनः परमार्थसद्वस्तु यदास्पदा जात्याद्यसद्बुद्धय इत्याह । जाति जायत इति जात्याभासम् । तद्यथा देवदत्तो जायत इति । चलाभासं चलमिवाभासत इति । यथा स एव देवदत्तो गच्छतीति । वस्त्वाभासं वस्तु द्रव्यं धर्मि तद्वदाभासत इति वस्त्वाभासम् । यथा स एव देवदत्तो गौरो दीर्घ इति । जायते देवदत्तः स्पन्दते दीर्घो गौर इत्येवमवभासते । परमार्थ-

---

श्लोकव्यावर्त्यामाशङ्कामनूद्य दूषयति । नेत्यादिना । व्यभिचार-स्थानमिह मायाहस्ति परिहरति । कथमित्यादिना । उपलम्भसमाचारौ मायामये हस्तिनि वस्तुत्वाभावेऽपि भवतः । तथा द्वैतेऽपि न तयोरस्ति वस्तुत्वसाधकत्वमित्युपसंहरति । तस्मादिति ॥४४॥

भूतदर्शनावष्टम्भेन विज्ञानस्याभिमतमुक्तमेतदन्यश्लोकैर्वि-पश्चितम् । सम्प्रति भूतदर्शनमुपसंहरति । जात्याभासमिति । श्लोकावयवार्थमाकाङ्क्षाद्वारा विवृणोति । किं पुनरित्यादिना । गौर-

ऋजुवक्रादिकाभासमलातस्पन्दितं यथा ।
ग्रहणग्राहकाभासं विज्ञानस्पन्दितं तथा ॥४७॥
अस्पन्दमानमलातमनाभासमजं यथा ।
अस्पन्दमानं विज्ञानमनाभासमजं तथा ॥४८॥

---

यथोक्तं परमार्थदर्शनं प्रपञ्चयिष्यन्नाह । यथा हि लोके ऋजुवक्रादिप्रकाराभासमलातस्पन्दितमुल्काचलनं तथा ग्रहणग्राहकाभासं विषयाभासमित्यर्थः । किन्तद्विज्ञानस्पन्दितम् । स्पन्दितमिव स्पन्दितमविद्यया । न ह्यचलस्य विज्ञानस्य स्पन्दनमस्ति । अजाचलमिति ह्युक्तम् ॥४७॥

अस्पन्दमानं स्पन्दनवर्जितं तदेवालातमृज्वाद्याकारेणाजायमानम् । अनाभासमजं यथा तथाऽविद्यया स्पन्दमानमविद्योपरमे अस्पन्दमानं जात्याद्याकारेणानाभासमजमचलम्भविष्यतीत्यर्थः ॥४८॥

---

विज्ञानमजमचलमेव जात्याभासमित्युक्तं तदिदानीं दृष्टान्तेन प्रपञ्चयति । ऋजुवक्रादीति । अप्रच्युतपूर्वरूपस्यालातस्य नानाकारावभासो विवर्त्तस्तद्वद्विज्ञानस्य स्पन्दितत्वं श्लोकस्य तात्पर्यमाह । यथोक्तमिति । तत्र दृष्टान्तभागं व्याचष्टे । यथा हीति । दार्ष्टान्तिकं योजयति । तथेति । किमित्यविद्यामन्तरेण मुख्यमेव स्पन्दनं विज्ञानस्य नेष्यते तत्राह । न हीति । निरवयवस्य विभुनो विज्ञानस्य वस्तुतश्चलनाधिकरणत्वस्याविद्यमानमेव स्पन्दनमित्यत्र वाक्योपक्रमानुकूल्यं कथयति । अजेति ॥४७॥

विज्ञानं शान्तमित्युक्तं दृष्टान्तेन स्पष्टयति । अस्पन्दमानमिति ।

अलाते स्पन्दमाने वै नाभासा अन्यतोभुवः।
न ततोऽन्यत्र निस्पन्दान्नालातं प्रविशन्ति ते ॥४९॥
न निर्गता अलातात्ते द्रव्यत्वाभावयोगतः।

किञ्च तस्मिन्नेवालाते स्पन्दमाने ऋजुवक्राद्याभासा अलातादन्यतः कुतश्चिदागत्यालात एव भवन्तीति नान्यतोभुवः। न च तस्मान्निस्पन्दादलातादन्यत्र निर्गताः। न च निस्पन्दमलातमेव प्रविशन्ति ते ॥४९॥

किञ्च न निर्गता अलातात्ते। आभासा गृहादिव

श्लोकाक्षराणि व्याकरोति। स्पन्दमानमित्यादिना। तथाविधाये-त्यलातविधयेति छेदः ॥४८॥

अलातदृष्टान्ते कथं ऋजुवक्रादीनामसत्त्वमित्याशङ्कायां निरूपणासहत्वादित्याह। अलात इति। यदा खल्वलातं स्पन्दमानमवतिष्ठते तदा तस्मिन्नन्यतो देशान्तरादागत्याभासा भवन्तीति न शक्यं वक्तुमृजुवक्राद्याभासानां देशान्तरादागमनस्यानवगमात्। यदा तदेवालातं निस्पन्दं स्पन्दनवर्जितं वर्तते तदा ततोऽन्यत्राभासा भवन्तीत्यपि न युक्तं वक्तुमनुपलम्भाविशेषात्। न चाभासास्तस्मिन्नेवालाते लीयन्ते तदनुपादानत्वात्। यदि हि स्पन्दनिमित्तमलातमुपादानं तदा निमित्ताभावमात्रान्नैमित्तिकाभावादस्पन्दे ऋजुवक्राद्याकारा स्पन्दनाभावेऽप्यलाते भवेयुरित्यर्थः। एतस्मिन् दृष्टान्ते दृष्टान्तानामाभासाना मिथ्यात्वमेवाभिव्याह। किञ्चेति। हेत्वन्तरमेव स्फुटयन् पूर्वार्धाक्षराणि व्याचष्टे। तस्मिन्नेवेति। आभासानां देशान्तरादागमनस्यानुपलम्भो हेतुः कर्तव्यः। अनुपलब्धिरेव हेतुरस्य तृतीयपादार्थमाह। न चेति। चतुर्थपादार्थमाह। न च निस्पन्दमिति ॥४९॥

ऋजुवक्राद्याभासानां दृष्टान्ते निर्गमनप्रवेशयोरसम्भवं साधयति। नेत्यादिना। दृष्टान्तनिविष्टाभासवद्दार्ष्टान्तिकेऽपि ऋज्वाद्या-

न निर्गता विज्ञानात्ते द्रव्यत्वाभावयोगतः।
कार्य्यकारणताभावाद्यतोऽचिन्त्याः सदैव ते॥५२॥
द्रव्यं द्रव्यस्य हेतुः स्यादन्यदन्यस्य चैव हि।

---

णताभावात् जन्यजनकत्वानुपपत्तेरभावरूपत्वादचिन्त्यास्ते यतः सदैव। यथाऽसत्सु ऋज्वाद्याभासेषु ऋज्वादिबुद्धिर्दृष्टाऽलातमात्रे तथाऽसत्स्वेव जात्यादिषु विज्ञानमात्रे जात्यादिबुद्धिर्मृषैवेति समुदायार्थः॥५१॥५२॥

अजमेकमात्मतत्त्वमिति स्थितं तत्र यैरपि कार्य्यकारणभावः कल्प्यते तेषां द्रव्यं द्रव्यस्यान्यस्यान्यद्धेतुः कारणं स्यान्न तु तस्यैव तत्। नाप्यद्रव्यं कस्यचित्कारणं

एवं हेतुफलाजातिं प्रविशन्ति मनीषिणः ॥५४॥
यावद्धेतुफलावेशस्तावद्धेतुफलोद्भवः ।
क्षीणे हेतुफलावेशे नास्ति हेतुफलोद्भवः ॥५५॥
यावद्धेतुफलावेशः संसारस्तावदायतः ।

---

फलाजातिं प्रविशन्ति अध्यवस्यन्ति । आत्मनि हेतुफलयोरभावमेव प्रतिपद्यन्ते ब्रह्मविद इत्यर्थः ॥५४॥

ये पुनर्हेतुफलयोरभिनिविष्टास्तेषां किं स्यादित्युच्यते । धर्माधर्माख्यहेतोरहं कर्त्ता मम धर्माधर्मौ तत्फलं कालान्तरे क्वचित्प्राणिनिकाये जातो भोक्ष्ये इति यावद्धेतुफलयोरावेशो हेतुफलाग्रह आत्मन्यध्यारोपणं तच्चित्ततेत्यर्थः । तावद्धेतुफलयोरुद्भवो धर्माधर्मयोस्तत्फलस्य चानुच्छेदेन प्रवृत्तिरित्यर्थः । यदा पुनर्मन्त्रौषधिवीर्येणेव ग्रहावेशो यथोक्ताद्वैतदर्शनेनाविद्योद्भूतहेतुफलावेशोऽपनीतो भवति तदा तस्मिन् क्षीणे नास्ति हेतुफलोद्भवः ॥५५॥

---

दयो यथोक्ता हेतवः । बाह्या धर्मा घटादयो नात्मनः । न च धर्मशब्दितानां जीवानां चित्तशब्दिताम् परस्मादात्मनो जन्मेति युक्तम् । तेषां प्रतिबिम्बकल्पानां बिम्बभूतब्रह्ममात्रत्वादित्यादित्यभिप्रेत्याह । विज्ञानेति ॥ उपसंहारं योजयति । एवमिति ॥५४॥

न फलाद्धेतुर्जायते नापि फलं हेतोरिति तत्त्वदर्शनोपदिष्टम् । इदानीं मुमुक्षूणां तदभिनिवेशत्यागार्थं तदभिनिवेशभावाभावयोर्दोषगुणौ दर्शयति । यावदिति ॥ श्लोकाक्षरार्थाकाङ्क्षामुदीरयन्पुरःसरं विवृणोति । ये पुनरित्यादिना ॥५५॥

क्षीणे हेतुफलावेशे संसारं न प्रपद्यते ॥५६॥
संवृत्या जायते सर्व्वं शाश्वतं नास्ति तेन वै।

यदि हेतुफलोद्भवस्तदा को दोष इत्युच्यते यावत्सम्यग्दर्शनेन हेतुफलावेशो न निवर्त्ततेऽक्षीणः संसारस्तावदायतो दीर्घो भवतीत्यर्थः। क्षीणे पुनर्हेतुफलावेशे संसारं न प्रपद्यते कारणाभावात् ॥५६॥

नन्वजादात्मनोऽन्यस्याभावे तत्कथं हेतुफलयोः संसारस्य चोत्पत्तिविनाशावुच्येते त्वया। शृणु। संवृत्या संवरणं संवृतिरविद्याविषयो लौकिकव्यवहारस्तया संवृत्या जायते सर्व्वं तेनाविद्याविषये शाश्वतं नित्यं नास्ति

अभिनिवेशप्रशमे हेतुफलोद्भवे किं भवति तदाह। यावदिति। अभिनिवेशनिवृत्तौ तदनुद्भवे वा किं स्यादित्याशङ्क्याह। क्षीण इति। आकाङ्क्षापूर्व्वकं पूर्व्वार्द्धं योजयति। यदीति। उत्तरार्द्धं व्याचष्टे। क्षीणे पुनरिति ॥५६॥

कूटस्थमद्वितीयमात्मतत्त्वमिष्यते कुतो जन्मनाशौ व्यवह्रियेते तत्राह। संवृत्येति। अविद्यया सर्व्वस्य जायमानत्वे सत्यविद्याविषये नित्यं नाम नास्त्येवेत्याह। शाश्वतमिति। परमार्थतस्तु सर्व्वमज कूटस्थमात्मैवेति तेन कल्पितं विना विनाशो नास्त्येव हेतुफलादेरित्याह। सद्भावेनेति। पूर्व्वापरविरोधमाशङ्कते। नन्विति। न तावदात्मनो जन्मविनाशौ तस्य कूटस्थत्वान्नापि ततोऽन्यस्य तौ युक्तौ तस्यासिद्धत्वादित्यर्थः। तथा च हेत्वादेरन्यस्य जन्मनाशौ न त्वया वक्तव्याविति शेषः। उच्यमाने समाधाने मनःसमाधानमर्थयते। शृण्विति। तत्र पूर्व्वभागाक्षरार्थं कथयति। संवृत्येत्यादिना। अविद्याविषये नित्यस्य वस्तुनो ऽभावे कल्पितमाह। अत इति। द्विती-

**जन्म मायोपमं तेषां सा च माया न विद्यते ॥५८॥**
**यथा मायामयाद्बीजाज्जायते तन्मयोऽङ्कुरः ।**
**नासौ नित्यो न चोच्छेदी तद्वद्धर्मेषु योजना ॥५९॥**
**नाजेषु सर्वधर्मेषु शाश्वताशाश्वताभिधा ।**

---

तर्हि नैव सा च माया न विद्यते मायेत्यविद्यमानस्याख्ये-त्यभिप्रायः ॥५८॥

कथं मायोपमत्वं तेषां धर्माणां जन्मनः ? यथा मायामयाद्बीजाज्जायते तन्मयो मायामयोऽङ्कुरो मायावदङ्कुरो नित्यो न चोच्छेदी विनाशी वा । एवमेव धर्मेषु जन्मनाशादियोजनायुक्तिः । न तु परमार्थतो धर्माणां जन्म नाशो वा युज्यत इत्यर्थः ॥५९॥

परमार्थतस्त्वात्मस्वजेषु नित्यैकरसविज्ञप्तिमात्रसत्ताकेषु शाश्वतोऽशाश्वत इति वा नाभिधा नाभिधानं प्रवर्तत इत्यर्थः । यत्र येषु वर्ण्यन्ते यैरर्थास्ते वर्णाः शब्दा न प्रवर्तन्तेऽभिधातुं प्रकाशयितुं न प्रवर्तन्ते इत्यर्थः । इदमेव-

---

तृतीयपादं योजयति । वस्त्विति । प्रष्टव्यं जन्मेति शेषः । चतुर्थपादार्थमाकाङ्क्षाद्वारा स्फोरयति । मायेत्यादिना ॥५८॥

जन्म मायोपमं तेषामित्युक्तं तदपि दृष्टान्तावष्टम्भेन साधयति । यथेत्यादिना । श्लोकाक्षराण्याकाङ्क्षा दर्शनं योजयति । एवमित्यादिना ॥५९॥

यदुक्तं यद्भावेन चाजं सर्वमिति तदुपपादयति । नाजेष्विति । आत्मनि नित्यानित्यकथा नावतरतीत्यत्र हेतुमाह । यत्रेति । श्लोकस्य पूर्वार्धं व्याचष्टे । परमार्थतस्त्विति । द्वितीयार्धमाददाति । यत्रेति ।

यत्र वर्णा न वर्त्तन्ते विवेकस्तत्र नोच्यते ॥६०॥
यथा स्वप्ने द्वयाभासं चित्तं चलति मायया ।
तथा जाग्रद्द्वयाभासं चित्तं चलति मायया ॥६१॥
अद्वयञ्च द्वयाभासं चित्तं स्वप्ने न संशयः ।
अद्वयञ्च द्वयाभासं तथा जाग्रन्न संशयः ॥६२॥
स्वप्नदृक् प्रचरन् स्वप्ने दिक्षु वै दशसु स्थितान् ।

---

मिति विवेको विशेषता तत्र नित्योऽनित्य इति नोच्यते । यतो वाचो निवर्त्तन्त इति श्रुतेः ॥६०॥

यत्पुनर्वाग्गोचरत्वं परमार्थतोऽद्वयस्य विज्ञानमात्रस्य तन्मनसः स्पन्दनमात्रं न परमार्थत इत्युक्तार्थौ श्लोकौ ॥६१॥६२॥

इतश्च वाग्गोचरस्याभावो द्वैतस्य स्वप्नान् पश्यतीति स्वप्नदृक् प्रचरन् पर्य्यटन् स्वप्ने स्वप्नस्थाने दिक्षु वै

---

त्यादिना ॥ तत्रेति प्रकृतेषु धर्म्मेष्विति यावत् । आत्मनश्च नित्यानित्यकथाभावे शब्दगोचरत्वं द्वैतस्य प्रमाणमाह । यत्र इति ॥६०॥

आत्मनः शब्दागोचरत्वे कथमसौ व्याख्यातृभिः शब्दैरेव प्रतिपादितः । गोचरत्वाभ्युपगम्य चित्तस्पन्दनमात्रमविचारसुन्दरं प्रतिपाद्यप्रतिपादकरूप द्वैतमिति सदृष्टान्तमाह । यथेति ॥ स्वप्ने प्रतिपाद्यप्रतिपादकद्वैतस्य चित्तस्पन्दितमात्रत्वेऽपि जागरिते कथं तथा स्यादित्याशङ्क्याह । अद्वयञ्चेति ॥ पौनरुक्त्यं श्लोकयोरापद्यगदाङ्गान्तरभिरामार्थत्वाम्नेरमिति मन्वानः सम्माह । यत्पुनरिति ॥६१॥६२॥

वाचो गोचरीभूतस्य द्वैतस्यासत्त्वे हेत्वन्तरमाचचाणो दृष्टान्तमाचष्टे । स्वप्नदृगिति ॥ यान् पश्यति ते न विद्यन्त इत्यनिगमुत्तरत्र

लक्षणाशून्यमुभयं तन्मते नैव गृह्यते ॥६७॥

किञ्चिद्वस्त्विति चोच्यते चित्तं वा चित्तं चैत्यं वा । किन्त-द्वस्त्विति विवेकिनोच्यते । न हि स्वप्ने हस्ती हस्तिचित्तं वा विद्यते तथेहापि विवेकिनामित्यभिप्रायः । कथं लक्षणाशून्यं लक्ष्यतेऽनयेति लक्षणा प्रमाणं प्रमाणशून्यमुभयं चित्तं चैत्यं द्वयं यतः तन्मते नैव तच्चित्ततयैव तत् गृह्यते । न हि घटमतिं प्रत्याख्याय घटो गृह्यते नापि घटं प्रत्याख्याय घटमतिः । न हि तत्र प्रमाणप्रमेयभेदः शक्यते कल्पयितुमित्यभिप्रायः ॥६७॥

यथा स्वप्नमयो जीवो जायते म्रियतेऽपि च।
तथा जीवा अमी सर्वे भवन्ति न भवन्ति च॥६८॥
यथा मायामयो जीवो जायते म्रियतेऽपि च।
तथा जीवा अमी सर्वे भवन्ति न भवन्ति च॥६९॥
यथा निर्म्मितको जीवो जायते म्रियतेऽपि वा।
तथा जीवा अमी सर्व्वे भवन्ति न भवन्ति च॥७०॥

---

मायामयो मायाविना यः कृतः निर्म्मितको मन्त्रौषध्यादिभिर्निष्पादितः। स्वप्नमायानिर्म्मितका अण्डजादयो जीवा यथा जायन्ते म्रियन्ते च तथा मनुष्यादिलक्षणा अविद्यमाना एव चित्तविकल्पनामात्रा इत्यर्थः॥ ६८॥६९॥७०॥

---

तर्हि लौकिकानां परीक्षकाणाञ्च प्रमाणप्रमेयविभागप्रवृत्तिरित्याशङ्क्य चतुर्थपादार्थमाह। तस्मात्तेनेति॥ तदेव प्रपञ्चयति। न हीति॥ घटे किं प्रमाणमित्युक्ते ज्ञानमित्युत्तरमतिप्रसङ्गाच्चापि घटज्ञानमन्योन्याश्रयप्रसङ्गादतो न घटतज्ज्ञानयोर्मानमेयभावः सम्भवतीत्यर्थः॥६७॥

दृश्यानामण्डजादीनां दर्शनातिरिक्तानामसत्त्वानुमानस्य भेदग्राहकप्रमाणबाधं परिहृत्य दर्शनातिरेकेण तेषामसत्त्वे जन्मादिप्रत्ययबाधः स्यादित्याशङ्क्य परिहरति। यथेत्यादिना॥ मायामयस्य निर्म्मितकस्य च जीवस्य विशेषं बुभुत्समानं प्रत्याह। मायेति॥ संविदतिरेकेणाण्डजादीनां परमार्थतः सत्त्वाभावानुमानस्य न जन्मादिप्रतिभासबाधः। सत्त्वाभावेऽपि स्वप्नादिषु जन्मादिविकल्पसाङ्कर्योपलम्भादिति श्लोकत्रयस्य तात्पर्यमाह। स्वप्नेत्यादिना॥६८॥६९॥७०॥

न कश्चिज्जायते जीवः सम्भवोऽस्य न विद्यते ।
एतत्तदुत्तमं सत्यं यत्र किञ्चिन्न जायते ॥७१॥
चित्तस्पन्दितमेवेदं ग्राह्यग्राहकवद्द्वयम् ।
चित्तं निर्विषयं नित्यमसङ्गं तेन कीर्तितम् ॥७२॥
योऽस्ति कल्पितसंवृत्या परमार्थेन नास्त्यसौ ।

---

व्यवहारसत्यविषये जीवानां जन्ममरणादिः स्वप्नादिजीववदित्युक्तम् उत्तमं तु परमार्थसत्यं न कश्चिज्जायते जीव इति । उक्तार्थमन्यत् ॥७१॥

सर्वं ग्राह्यग्राहकवत् चित्तस्पन्दितमेव, द्वयं चित्तं परमार्थत आत्मैवेति निर्विषयं तेन निर्विषयत्वेन नित्यमसङ्गं कीर्तितम् । असङ्गो ह्ययं पुरुष इति श्रुतेः । सविषयस्य हि विषये सङ्गः । निर्विषयत्वाच्चित्तमसङ्ग इत्यर्थः ॥७२॥

ननु निर्विषयत्वेन चेदसङ्गत्वं चित्तस्य न निःसङ्गता

---

यस्तु जन्मादि सत्यमिति मन्यते तं प्रति प्रागुक्तं स्मारयति । न कश्चिदिति । इत्यनुवादपूर्वकं श्लोकतात्पर्यमाह । व्यवहारेति । अक्षराणि न व्याख्येयानि व्याख्यातत्वादित्याह । उक्तार्थमिति ॥७१॥

संवेदनस्य कल्पितद्वयापेक्षत्वेऽपि दृश्यत्वान्न दृग्व्यतिरेकेण सत्त्वमिति स्वप्नदृष्टान्तेनोक्तमिदानीं तस्य तु संवेदनस्य विषयसम्बन्धाभावादात्मैव संवेदनमित्याह । चित्तेति । अक्षरार्थं कथयति । सर्वमित्यादिना । निर्विषयत्वेनासङ्गत्वे सिद्धे श्रुतिमपि संवादयति । असङ्गो हीति । श्रुतिसिद्धमसङ्गत्वं साधयति । सविषयस्येति ॥७२॥

निर्विषयत्वेन चित्तस्यासङ्गत्वमसङ्गतं तदसङ्गतं मात्मादेरपि

अजः कल्पितसंवृत्या परमार्थेन नाप्यजः।
परतन्त्राभिनिष्पत्त्या संवृत्या जायते तु सः॥७४॥

ननु शास्त्रादीनां संवृतित्वे अज इतीयमपि कल्पना संवृतिः स्यात्। सत्यमेवं शास्त्रादिकल्पितसंवृत्यैवाज इत्युच्यते। परमार्थेन नाप्यजः। यस्मात् परतन्त्राभिनिष्पत्त्या परशास्त्रसिद्धिमपेक्ष्य योऽज इत्युक्तः स संवृत्या जायते। अतोऽज इतीयमपि कल्पना परमार्थविषयेनैव क्रमत इत्यर्थः॥७४॥

शास्त्रादिभेदकल्पनायाः संवृतिसिद्धत्वे तदधीनात्मन्यजत्वकल्पनापि संवृतिसिद्धैव स्यादित्याशङ्काङ्गीकरोति। अज इति। कल्पितमात्मन्यजत्वमित्यत्र हेतुमाह। परतन्त्रेति। परिणामवादप्रसिद्धजन्मना भ्रान्त्याऽऽत्मा जायते जन्मनश्च विभ्रमत्वे तन्निषेधस्याजत्वस्यापि तथात्वं युक्तमित्यर्थः। श्लोकव्यावर्त्यामाशङ्कामाह। नन्विति। शास्त्रादिभेदस्य कल्पितत्वे तन्निषेधात्मकमात्मन्यजत्वमपि कल्पितं स्यादित्यर्थः। किमजोऽयमात्मेति व्यवहारस्य कल्पितत्वं किं वा तदुपलक्षितस्य रूपस्येति विकल्प्याद्यमङ्गीकरोति। सत्यमिति। अजोऽयमित्यभिधानस्य संवृतिप्रयुक्तत्वात्तद्व्यवहारस्य कल्पितत्वमिष्टमित्यर्थः। कैवल्यावस्थायामजोऽयमित्यभिधानाभावमभ्युपेत्य व्यावृत्तिं दर्शयति। परमार्थेनेति। आत्मन्यजत्वव्यवहारस्य कल्पितत्वे द्वितीयार्धव्याख्यानेन हेतुमाह। यस्मादिति। परेषां परिणामवादिनां शास्त्रे या परिणामप्रसिद्धिस्तामपेक्ष्य तन्निषेधेन योऽज इत्युक्तः स संवृत्यैव जातो जायते अतश्च प्रतियोगिनो जन्मनः संवृतिसिद्धत्वात्तन्निषेधरूपमजत्वमपि तादृगेवेत्यर्थः। अजत्वादिव्यवहारोपलक्षितस्य रूपस्याकल्पित-

अभूताभिनिवेशोऽस्ति द्वयं तत्र न विद्यते ।
द्वयाभावं स बुद्ध्वैव निर्निमित्तो न जायते ॥७५॥
यदा न लभते हेतूनुत्तमाधममध्यमान् ।

यस्मादसद्विषयद्वयाद्भूते द्वैतेऽभिनिवेशोऽस्ति केवलमभिनिवेश आग्रहमात्रं द्वयं तत्र न विद्यते । मिथ्याऽभिनिवेशमात्रश्च जन्मन कारणं यस्मात्तस्माद्द्वयाभावं बुद्ध्वा निर्निमित्तो निवृत्तमिथ्याद्वयाभिनिवेशो य स न जायते ॥७५॥

जात्याश्रमविहिता आशीर्वर्जितैरनुष्ठीयमानात् धर्म्मा-द्देवत्वादिप्राप्तिहेतवो उत्तमाः केवलाश्च । धर्म्माधर्म्मव्यामिश्रा मनुष्यत्वादिप्राप्त्यर्था मध्यमाः । तिर्य्यगादिप्राप्तिनिमित्ता अधर्म्मलक्षणाः प्रवृत्तिविशेषाश्चाधमाः । तानुत्तममध्यमाधमानविद्यापरिकल्पितान् यदा एकमेवाद्वितीय-

प्रमितिहेतुत्व प्रति नियामके मिथ्याभिनिविष्टत्वस्य समूलनियमत्वा-दिति द्रष्टव्यम् ॥७४॥

ननु ज्ञानस्य कल्पितसंसाराविजन्यत्वे मिथ्याचाराद्युनराहत्तिफल साधात् तत्राह । अभूतेति ॥ यदि द्वितीय संसार सत्य स्याद् तदा न निवृत्त्यै साधनमपि वस्तुभूतमभिधीयते मिथ्याभिनिवेशमात्रस्य त मिथ्योपायमन्येनापि ज्ञानेन वस्तुनिष्ठेन निवृत्ति सिध्यतीति श्लो कार्थे कथयति । यस्मादित्यादिना ॥७५॥

निर्निमित्तो न जायत इत्युक्तं तदेतत् प्रपञ्चयति । यदेति ॥ उत्तमान् हेतून् विभजते । जातीत ॥ आशीर्वर्जितै फलतृष्णार हितैरधिकारिभिरिति यावत् । देवत्वादित्यादिशब्देनोत्कृष्ट स्थाते । केवलया धर्म्मस्य प्राधान्यम् । मनुष्यत्वादि ॥

तदा न जायते चित्तं हेत्वभावे फलं कुतः ॥७६॥
अनिमित्तस्य चित्तस्य यानुत्पत्तिः समाऽद्वया ।

---

मात्मतत्त्वं सर्वकल्पनावर्जितं जानन्न लभते न पश्यति यथा बालैर्दृश्यमानं गगने मलं विवेकी न पश्यति तद्वत्तदा न जायते नोत्पद्यते चित्तं देवाद्याकारैरुत्तमाधममध्यमफलरूपेण। न ह्यसति हेतौ फलमुत्पद्यते बीजाद्यभाव इव सस्यादि ॥७६॥

हेत्वभावे चित्तं नोत्पद्यत इति ह्युक्तम् । सा पुनरनुत्पत्तिश्चित्तस्य कीदृशीति । उच्यते । परमार्थदर्शनेन निरस्तधर्माधर्माख्योत्पत्तिनिमित्तस्यानिमित्तस्य चित्तस्येति

---

मध्यमयोनयो गृह्यन्ते। तिर्यगादीत्यधमशब्देनाधमजन्म गृह्यते। यथोक्तज्ञानादज्ञाननिवृत्तौ तन्निवृत्त्यर्थं विशिनष्टि । अविवेकीति। अविदुषा प्रतीयमाना हेतवो विदुषो न प्रतिभान्तीत्येतद् दृष्टान्तेन स्फुटयति। यथेति। उक्तेऽर्थे हेतुत्वेन चतुर्थपादं व्याचष्टे। न हीति ॥७६॥

तदा न जायते चित्तमिति कालपरिच्छेदप्रतीतेरागन्तुकत्वमाशङ्क्य परिहरति। अनिमित्तस्येति। चित्तस्य हि निमित्तवर्जितस्य नित्यसिद्धस्य या सर्वदाऽनुत्पत्तिः सा निर्विशेषा द्वितीया चेत्यत्र हेतुमाह। अजातस्येति। सर्वस्य द्वैतस्य चित्तदृश्यत्वेन मिथ्यात्वादित्थमिद्धस्य परिपूर्णस्य चित्ताख्यस्य स्फुरणस्य जन्मायोगात्तदनुत्पत्तिरजननरूपा यतस्तथेति । उक्तमनूद्याकाङ्क्षापूर्वकं श्लोकमवतार्य व्याकरोति। हेत्वभाव इत्यादिना। यथा कृष्णकल्पनाकालेऽपि शुक्लरूपत्वं स्वाभाविकं तथा जन्मकल्पनाकालेऽपि अविदो निर्विशेषाद्वितीयस्याजा स्वाभाविकी। जन्मभ्रमनिवृत्त्यपेक्षया तु तदा

अजातस्यैव सर्व्वस्य चित्तदृश्यं हि तद्यतः ॥७७॥
बुद्ध्वा निमित्ततां सत्यां हेतुं पृथगनाप्नुवन् ।

---

या मोक्षाख्याऽनुत्पत्तिः सा सर्व्वदा सर्व्वावस्थासु समा निर्व्विशेषाऽद्वया च। पूर्व्वमप्यजातस्यैवाऽनुत्पन्नस्य चित्तस्य सर्व्वस्याद्वयस्येत्यर्थः। यस्मात्प्रागपि विज्ञानाच्चित्तदृश्यं तत् द्वयं जन्म च तस्मादजातस्य सर्व्वस्य सर्व्वदा चित्तस्य समाऽद्वयैवाऽनुत्पत्तिर्न पुनः कदाचिद्भवति कदाचिद्वा न भवति सर्व्वदैकरूपैवेत्यर्थः ॥७७॥

यथोक्तेन न्यायेन जन्मनिमित्तस्य द्वयाभावादनिमित्ततां च सत्यां परमार्थरूपां बुद्ध्वा हेतुं धर्म्मादिकारणं

---

न जायत इत्युक्तमित्याह। सर्व्वदेति। न केवलं मोक्षावस्थायामेव चैतन्यस्याजत्वं किन्तु घटाद्युपलक्षितावस्थास्वपीत्यभिप्रेत्याह। सर्व्वावस्थास्विति। सर्व्वस्यैव चित्तप्रतिबिम्बस्य बिम्बरूपत्वमद्वयपदादिति हेतुमभिप्रेत्याह। अद्वया चेति। तृतीयपादार्थं कथयति। पूर्व्वमपीति। तत्र हेतुमाह। यस्मादिति। तस्माद्रज्जुसर्पवत् द्वैतस्य जन्मनश्च कल्पितत्वाद्वस्तुतोऽनुत्पत्तेरिति यावत् ॥७७॥

द्वयाभावं स बुद्ध्वैव निर्निमित्तो न जायत इत्युक्तं तदिदानीं प्रपञ्चयति। बुद्ध्वेति। द्वैताभावोपलक्षितां सत्यामनाद्यनन्तां परमार्थभूतां प्रतिपद्य देहादियोनिप्रापकं धर्म्मादिहेतुमनादृत्यैवात्मनिष्ठः यदा विद्वानवतिष्ठते तदा सर्व्वसंसारकारणरहितं पदमश्नुवानो न पुनः शरीरं स्वीकरोतीत्यर्थः। श्लोकं व्याचष्टे। यथोक्तेति। इत्थंत्वादिना हेतुना द्वैतस्य रज्जुसर्पादिवदेव कल्पितत्वं यथोक्तन्यायेन चैतन्यस्य जन्मनि यत् द्वयं निमित्तं तस्याभूतत्वाभावोपलक्षिता सत्यां निमित्ताभावादेवानाद्यनन्तां तथा देव सत्यां बुद्धेति योजना।

ज्ञानं ज्ञेयञ्च विज्ञेयं सदा बुद्धैः प्रकीर्त्तितम् ॥८८॥
ज्ञाने च त्रिविधे ज्ञेये क्रमेण विदिते स्वयम् ।

लौकिकं लोकोत्तरं क्रमेण येन ज्ञानेन ज्ञायते तज्ज्ञानं ज्ञेयमेतान्येव त्रीणि । एतद्व्यतिरेकेण ज्ञेयानुपपत्तेः । सर्वप्रावादुककल्पितवस्तुनोऽत्रैवान्तर्भावाद्विज्ञेयं परमार्थसत्यं तुर्य्याख्यमद्वयमजमात्मतत्त्वमित्यर्थः । सदा सर्वदैतल्लौकिकादिविज्ञेयान्तं बुद्धैः परमार्थदर्शिभिर्ब्रह्मविद्भिः प्रकीर्त्तितम् ॥८८॥

ज्ञाने च लौकिकादिविषये । ज्ञेये च लौकिकादौ त्रिविधे च पूर्वं लौकिकं स्थूलम् । तदभावेन पश्चाच्छुद्धं

---

ग्राह्यग्रहणविभागवर्जितत्वादेव कुतो लोकातीतत्वमित्याशङ्क्याह । ग्राह्येति । सुषुप्तमिदं लौकिकं कथं तदवगम्यतामित्याशङ्क्याह । सर्वमेतदिति । अवस्थाद्वयबीजं सुषुप्तमिष्यते तदपि च शास्त्रविदामित्याह । एवमिति । अवस्थात्रयमेवमुक्त्वा ज्ञानपदार्थं कथयति । ज्ञेयमिति । ज्ञानेनास्य मनोवृत्तिरूपं विवक्षितमवस्थात्रयातिरिक्तमपि परीक्षकपरिकल्पितं ज्ञेयं सम्भवतीत्याशङ्क्याह । सर्वेति । सर्वैरेव प्रावादुकैः शुष्कतर्कजल्पनशीलैः परिकल्पितस्य कार्यकारणादिरूपवस्तुनोऽवस्थात्रये नियमेनान्तर्भावाज्ज्ञेयान्तरं नास्तीत्यर्थः । ज्ञेयमेव विशेषेण ज्ञेयं विज्ञेयमुच्यते न तदपि नावस्थात्रयातिरिक्तमस्तीत्याशङ्क्याह । विज्ञेयमिति । उपायोपेयभूते यथोक्तेऽर्थे विदुषामभिसम्मतिमादर्शयति । सदेति ॥८८॥

आत्मनि विज्ञाते सर्वमिदं विज्ञातं भवतीति श्रुत्या यत्प्रतिज्ञातं तदुक्तवस्तुज्ञाने फलतीति कथयति । ज्ञाने चेति । आनुपूर्व्येण वेदने विवक्षितं क्रममनुक्रामति । पूर्वमित्यादिना । यत्पुनरवस्थात्रया-

सर्वज्ञता हि सर्वत्र भवतीह महाधियः॥८९॥
हेयज्ञेयाप्यपाक्यानि विज्ञेयान्यग्रयाणतः।

लौकिकम्। तदभावेन लोकोत्तरमित्येवं क्रमेण स्थानत्रयाभावेन परमार्थसत्ये तुर्येऽद्वयेऽजेऽभये विदिते स्वयमेवात्मस्वरूपमेव सर्वज्ञता सर्वश्चासौ ज्ञश्च सर्वज्ञस्तद्भावः सर्वज्ञता इहास्मिंल्लोके भवति महाधियो महाबुद्धेः॥ सर्वलोकातिशयवस्तुविषयबुद्धित्वादेवंविदः सर्वत्र सर्वदा भवति। सकृद्विदिते स्वरूपे व्यभिचाराभावादित्यर्थः। नहि परमार्थविदो ज्ञानोद्भवाभिभवौ स्तो यथाऽन्येषां प्रावादुकानाम्॥८९॥

लौकिकादीनां क्रमेण ज्ञेयत्वेन निर्देशादस्तित्वाशङ्का

---

त्वेन तुरीयतत्त्वपरिज्ञाने विवक्षितं क्रमं दर्शयति। ज्ञानेति। सर्वविदिते भवतीति सम्बन्धः। तस्य ज्ञानत्रयातीताद्वैतात्मत्वोपलक्षितत्वमाह। अद्वय इति। जन्मादिसर्वविक्रियारहितत्वेन कौटस्थ्यं कथयति। अज इति। कार्यसम्बन्धस्य नास्तीति वक्तुं कारणभूताविद्यासम्बन्धाभावमभिदधाति। अभय इति। यथोक्ततत्त्वज्ञानस्य परिपूर्णब्रह्मरूपेणावस्थानं फलमाह। स्वयमेवेति। ज्ञानवतो यथोक्तं फलमर्चिरादिमार्गायत्तमिति शङ्कां वारयति। इहेति। उक्तज्ञानवतो महाबुद्धित्वे हेतुमाह। सर्वलोकेति। ज्ञानवतो यथोक्तं ज्ञानं कदाचिदुद्भवेदपि कालान्तरेऽभिभूतमतः सम्यग्विद्यतीत्याशङ्क्याह। एवंविद इति। स्वानुभवसंवादाद्विदिते स्वरूपे स्वरूपस्फुरणस्य व्यभिचाराभावात्परिपूर्णसर्वज्ञरूपता विदुषो भवतीत्युक्तं स्फुटयति। न हीति॥८९॥

अथ्यास्तावत्सर्वं ज्ञेयत्वनिर्देशात्परमार्थतोऽस्तित्वमाशङ्क्य परि-

तेषामन्यत्र विज्ञेयादुपलम्भस्त्रिषु स्मृतः ॥९०॥
प्रकृत्याकाशवज्ज्ञेयाः सर्वे धर्मा अनादयः ।

परमार्थतो माभूदित्याह । हेयानि च लौकिकादीनि त्रीणि जागरितस्वप्नसुषुप्तान्यात्मन्यसत्त्वेन रज्ज्वां सर्पवद्धातव्यानीत्यर्थः । ज्ञेयमिह चतुष्कोटिवर्जितं परमार्थतत्त्वम् । आप्यान्याप्तव्यानि त्यक्तबाह्यैषणात्रयेण भिक्षुणा पाण्डित्यबाल्यमौनाख्यानि साधनानि । पाक्यानि रागद्वेषमोहादयो दोषाः कषायाख्यानि पक्तव्यानि । सर्वाण्येतानि हेयज्ञेयाप्यपाक्यानि विज्ञेयानि भिक्षुणा उपायत्वेनेत्यर्थः । अग्रयाणत प्रथमतः तेषां हेयादीनामन्यत्र विज्ञेयात्परमार्थसत्त्वं विज्ञेयं ब्रह्मैकं वर्जयित्वा । उपलम्भनमुपलम्भोऽविद्याकल्पनामात्रम् । हेयाप्यपाक्येषु त्रिष्वपि स्मृतो ब्रह्मविद्भिर्न परमार्थसत्यता त्रयाणामित्यर्थः ॥९०॥

परमार्थतस्तु प्रकृत्या स्वभावत आकाशवदाकाश-

हरति । हेयेति ॥ यथोक्तत्वेन श्लोकमवतार्य हेयशब्दार्थं व्याचष्टे । लौकिकादीनामिति ॥ तान्येव त्रीणि विभजते । जागरितेति ॥ पाण्डित्यं वेदान्तवाक्यार्थाभिज्ञत्वमद्वितीयवस्तुविचारचातुर्यपरिनिष्पन्नं श्रवणम् । बाल्यं दम्भदर्पाहङ्कारादिराहित्यम् । युक्तितः श्रुतार्थानुसन्धानकुशलत्वं मौनं मुनेः कर्म ध्यानाभ्यासलक्षणं निदिध्यासनशब्दितम् । तान्येतान्याप्यानि ॥ यद्यपि ज्ञेयस्य विज्ञेयत्वं युक्तं तथापि कथं हेयादीनां विज्ञेयत्वमित्याशङ्क्याह । उपायत्वेनेति ॥ तदेव प्रकटयितुं प्रथमत इत्युक्तम् ॥ उत्तरार्धं व्याचष्टे । तेषामिति ॥ हेयादीनां रज्जुसर्पवदविद्याकल्पितत्वान्नास्ति परमार्थत्वगन्धोऽपीत्यर्थः ॥९०॥

यदुक्तं ज्ञेयं चतुष्कोटिवर्जितं परमार्थतत्त्वमिति तदिदं

यस्यैवम्भवति क्षान्तिः सोऽमृतत्वाय कल्पते॥८२।
आदि शान्ता ह्यनुत्पन्नाः प्रकृत्यैव सुनिर्वृताः।
सर्वे धर्माः समाभिन्ना अजं साम्यं विशारदम्॥८३।

---

यथा सविता नित्यं प्रकाशान्तरनिरपेक्षः स्वार्थं परार्थं चेत्येवम्भवति। क्षान्तिर्बोधकर्त्तव्यतानिरपेक्षता सर्वदा स्वात्मनि सोऽमृतत्वायामृतभावाय कल्पते। मोक्षाय समर्थो भवतीत्यर्थः ॥८२॥

तथा नापि क्षान्तिः कर्त्तव्याऽऽत्मनीत्याह। यस्मादादिशान्ता नित्यमेव शान्ता अनुत्पन्ना अजाश्च प्रकृत्यैव सुनिर्वृताः सुष्ठु परस्वभावा नित्यमुक्तस्वभावा इत्यर्थः। सर्वे धर्माः समाश्चाभिन्नाश्च समाभिन्ना अजं साम्यं विशारदं विशुद्धमात्मतत्त्वं यस्मात्तस्मात्क्षान्तिर्मोक्षो वा नास्ति कर्त्तव्य इत्यर्थः। न हि नित्यैकस्वभावस्य कृतं किञ्चिद्व स्यात् ॥८३॥

---

यस्येत्यादिना। आत्मस्वरूपस्य स्फुरद्रूपत्वं यथोक्तमुपकार। बोधान्तरो निश्चयो बोधनिश्चयस्तस्मिन्निरपेक्षत्वं स्वार्थमन्यार्थं वा यस्य भवति सोऽमृतत्वाय कल्पत इति सम्बन्धः। तदेव दृष्टान्तेन साधयति। यथेत्यादिना। इतिशब्दो यथेत्येतेन सम्बध्यते सोऽमृतत्वायेत्यादिवचनात् ॥८२॥

आगन्तुकममृतत्वं प्रत्युदस्यति। आदि शान्ता इति। श्लोकस्य तात्पर्यमक्षरार्थस्तु निर्दिशति। तथा नापीत्यादिना। उक्तमेवार्थं चतुर्थपादेन सङ्क्षिप्य दर्शयति। अजमिति। श्लोकार्थमुपसंहरति। विशुद्धमिति। उक्तरूपतानङ्गीकारे मोक्षस्यापुरुषार्थता स्यादित्याह।

वैशारद्यं तु वै नास्ति भेदे विचरतां सदा।
भेदनिम्नाः पृथग्वादास्तस्मात्ते कृपणाः स्मृताः॥९४॥
अजे साम्ये तु ये केचिद्भविष्यन्ति सुनिश्चिताः।

ये यथोक्तपरमार्थतत्त्वं प्रतिपन्नास्त एवाकृपणा लोके कृपणास्त्वन्ये इत्याह। यस्माद्भेदनिम्ना भेदानुयायिनः संसारानुगा इत्यर्थः। के। पृथग्वादाः पृथक् नाना वस्त्वित्येवं वदनं येषां ते पृथग्वादा द्वैतिन इत्यर्थः। तस्मात्ते कृपणाः क्षुद्राः स्मृता यस्माद्वैशारद्यं विशुद्धिर्नास्ति तेषां भेदे विचरतां द्वैतमार्गेऽविद्याकल्पिते सर्वदा वर्तमानानामित्यर्थः। अतो युक्तमेव तेषां कार्पण्यमित्यभिप्रायः॥९४॥

असङ्गता सदा नास्ति किमुतावरणच्युतिः ॥९७॥
अलब्धावरणाः सर्वे धर्माः प्रकृतिनिर्मलाः ।

---

बहिरन्तर्वा जायमाने उत्पद्यमानेऽविपश्चितोऽविवेकिनोऽसङ्गताऽसङ्गत्वं सदा नास्ति किमु वक्तव्यमावरणच्युतिर्बन्धनाशो नास्तीति ॥९७॥

तेषामावरणच्युतिर्नास्तीति ब्रुवता स्वसिद्धान्तोऽभ्युपगतस्तर्हि धर्माणामावरणं नेत्युच्यते । अलब्धावरणाः । अलब्धमप्राप्तमावरणमविद्यादिबन्धनं येषां ते धर्मा अलब्धावरणा बन्धनरहिता इत्यर्थः । प्रकृतिनिर्मलाः स्वभावशुद्धा आदौ बुद्धास्तथा मुक्ता यस्मान्नित्यशुद्धबुद्धमुक्तस्वभावाः । यद्येवं कथं तर्हि बुध्यन्त इत्युच्यते । नायकाः स्वामिनः समर्था बोद्धुं बोधशक्तिमत्स्वभावा इत्यर्थः ।

---

न्तरे पुन सविषयत्वाज्ज्ञानस्यासङ्गत्वमसङ्गतं प्रसज्येतेत्याह । अणुमात्रेऽपीति । अविपश्चितः कस्यचिदपि पदार्थस्य जन्माङ्गीकारे ज्ञानस्य तदनुषङ्गित्वेनासङ्गत्वायोगे बन्धध्वंसलक्षणं प्रयोजनं दूरापास्तम्भवतीत्याह । किमुतेति । श्लोकाक्षराणि व्याकरोति । इत इति ॥९७॥

विद्वानद्वैतवादी पञ्चम्या परामृश्यते । न चेदावरणच्युतिरिष्यते तर्हि स्वीकृतमावरणमित्याशङ्क्याह । अलब्धेति । बोद्धृत्वं तर्हि कथं मिथ्याशङ्क्य बोधनशक्तिमत्त्वादित्याह । बुध्यन्त इति । शङ्कोत्तरत्वेन श्लोकमवतारयति । तेषामित्यादिना । अविपश्चितः सदावरणं सिध्यति । न तत्त्वदृष्टेरित्यभिप्रेत्य व्याचष्टे । अलब्धेति । उक्तेऽर्थे हेतुकथनार्थं विशेषणत्रयमित्याह । यस्मादिति । तस्मात् बन्धनरहिता इति पूर्वेण सम्बन्धः । आत्मनो यथोक्तस्वभावस्य बोधने

सर्व्वे धर्म्मास्तथा ज्ञानं नैतद्बुद्धेन भाषितम्॥९९॥
दुर्द्दर्शमतिगम्भीरमजं साम्यं विशारदम्।

धर्म्मा इति आकाशमिवाचलमविक्रियं निरवयवं नित्यमद्वितीयमसङ्गमदृश्यमग्राह्यमशनायाद्यतीतं ब्रह्मात्मतत्त्वम्। न हि द्रष्टुर्द्दृष्टेर्विपरिलोपो विद्यत इति श्रुतेः। ज्ञानज्ञेयज्ञातृभेदरहितं परमार्थतत्त्वमद्वयमेतन्न बुद्धेन भाषितम्। यद्यपि बाह्यार्थनिराकरणं ज्ञानमात्रकल्पना चाद्वयवस्तुसामीप्यमुक्तम्। इदन्तु परमार्थतत्त्वमद्वैतं वेदान्तेष्वेव विज्ञेयमित्यर्थः॥९९॥

शास्त्रसमाप्तौ परमार्थतत्त्वस्तुत्यर्थं नमस्कार उच्यते।

---

बुद्ध्वा पदमनानात्वं नमस्कुर्मो यथा बलम् ॥१००॥
इति गौडपादाचार्य्यकृता माण्डूक्योपनिषत्का-
रिका सम्पूर्णा ॥ ॐ तत् सत् ॐ ॥

---

दुर्दर्शं दुःखेन दर्शनमस्येति दुर्दर्शम् । अस्तिनास्तीति चतु-
ष्कोटिवर्जितत्वात् दुर्विज्ञेयमित्यर्थः । अत एवातिगम्भीरं
दुःप्रवेशं महासमुद्रवदकृतप्रज्ञैः । अजं साम्यं विशारदम् ।
ईदृक् पदमनानात्वं नानात्ववर्जितं बुद्ध्वा अवगम्य तद्भूताः

---

दुर्विज्ञेयत्वे प्रत्यक्षादिप्रमाणानधिगम्यत्वं हेतुं विवक्षित्वा विशिनष्टि । अतिगम्भीरमिति । प्रत्यक्षादिभिरनवगाह्यत्वे कूटस्थस्य निर्विशेषत्वं सर्वसम्बन्धविधुरत्वमपि हेतुत्वयमभिप्रेत्याह । अजमित्यादिना । विशेषणत्रये तर्हि कुतश्चिदनवगतं तदास्त्येवेति निर्येत युक्तम् । प्रमाणाधीनत्वात् प्रमेयसिद्धेरित्याशङ्क्योपनिषद्भिरतद्धर्म्यापाकरण-द्वारेणावगम्यमानत्वान्नैवमित्याह । पदमिति । तत्र तर्हि सकल-विभागविकले कृतो नमस्कारक्रिया लौकिकीत्याशङ्क्याह । अनानात्वमिति । यद्यपि वस्तुतस्तस्मिन्नानात्वं नावकल्पते तथापि यथा शास्त्रं मायाबलमवलम्ब्य काल्पनिकं नानात्वमनुसृत्य नमस्कारक्रिया प्रत्ययादिप्रयोजनवती प्रामाणिकैरभिप्रेतेत्यर्थः । श्लोकस्य तात्पर्यमाह । शास्त्रेति । यदि परमार्थतत्त्वं शास्त्रस्यादावन्तेऽपि नमस्क्रियते तदा तस्याद्यन्तमध्येष्वनुगन्तव्यतया स्तुतिः सिध्यति । तेन तदर्थमादावुपसंहारेऽपि प्रकटीभावस्तद्विषयश्लोकेनोपलक्ष्यते । तथा च प्रतिपाद्यस्य ब्रह्मणो महामहिमत्वं समधिगतमित्यर्थः । दुर्दर्शत्वमुक्तं व्यनक्ति । अस्तीति । सर्वं वाक्यं यथोक्ते परमार्थतत्त्वे प्रवेशानुपपत्तिमाशङ्क्य सम्प्रदायरहितानां तथात्वेऽपि तद्वतां नैवमित्याह । अकृतेति । कौटस्थ्यादिविशेषणं व्याख्यातमेव पदत्रयमनुवदति । अज-

# तलवकारोपनिषत् ।

परमहंसपरिव्राजकाचार्य्यश्रीमच्छङ्करभगवत्कृत

भाष्यसहिता ।

श्रीशुद्धानन्दभगवत्पूज्यपादशिष्यभगवदानन्द-

ज्ञानकृतभाष्यटीका

विभूषिता ।

श्रीयुक्त नयचन्द्रशिरोमणिना परिशोधिता ।

श्रीभुवनचन्द्रवसाकेन प्रकाशिता

( ८ नं० निमतलाघाट ष्ट्रीट् )

—०००—

( द्वितीयसंस्कृता )

—०—

कलिकातानगरे

१६ नं० नूतन पगयापटी

नारायणयन्त्रे

मुद्रिता ।

—•••—

इंराजी १८८० सन १२८६ साल ।

ॐ तत्सत्।

# सामवेदीयतलवकारोपनिषद्भाष्यम्।

ग०। श्रीं परमात्मने नमः। केनेषितमित्याद्योपनिषत् परब्रह्मविषया वक्तव्येति नवमस्याध्यायस्यारम्भः। प्रागेतस्मात् कर्म्माण्यशेषतः परिसमापितानि समस्तकर्म्माश्रयभूतस्य च प्राणस्योपासनान्युक्तानि कर्म्माङ्गसामविषयाणि च। अनन्तरञ्च गायत्रसामविषयदर्शनं वंशान्तमुक्तं कार्य्यं सर्वमेतद्यथोक्तं कर्म्म च ज्ञानञ्च सम्यगनुष्ठितं निष्कामस्य मुमुक्षोः सत्त्वशुद्ध्यर्थं भवति। सकामस्य तु ज्ञानरहितस्य

---

ॐ परमात्मने नमः॥ ॐ॥

यच्छ्रोत्रादेरधिष्ठानचक्षुर्वागाद्यगोचरम्।
सतोऽप्यचं परं ब्रह्म नित्यमुक्तं भयामि तत्॥ १॥

आ०। केनेषितमित्यादिकां तलवकारशाखोपनिषदं व्याचिख्यासुर्भगवान् भाष्यकारोऽहंप्रत्ययगोचरस्यात्मनः संसारित्वादसंसारि-ब्रह्मभावस्योपनिषत्प्रतिपाद्यस्यासम्भवान्निर्विषयत्वादव्याख्येयत्वमित्याशङ्क्याहङ्कारसाक्षिणः संसारित्वग्राहकप्रमाणाविषयत्वाद्ब्रह्मत्वप्रतिपादने विरोधासम्भवात् सविषयत्वाद्व्याख्येयत्वं प्रतिजानीते। केनेषितमित्याद्येति। कस्तर्हि नवमस्याध्यायस्याष्टाध्याय्या सह नियतपूर्वोत्तरभावानुपपत्तिलभ्यः सम्बन्ध इत्याशङ्क्य हेतु हेतुमद्भावलक्षणसम्बन्धं दर्शयितुं वृत्त-

केवलानि श्रौतानि स्मार्त्तानि च कर्म्माणि दक्षिणमार्गप्रतिपत्तये पुनरावृत्तये च भवन्ति। स्वाभाविक्या त्वशास्त्रीयया प्रवृत्त्या पश्वादिस्थावरान्ता अधोगतिः स्यात्। तथैतयोः पथोर्न कतरे च न तानीमानि क्षुद्राण्यसकृदावर्त्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत्तृतीयं स्थानमिति श्रुतिः। प्रजा ह तिस्रोऽत्यायमीयुरिति मन्त्रवर्णाच्चिशुद्धसत्त्वस्य तु निष्कामस्यैव बाह्यादनित्यात् साध्यसाधनसम्बन्धादिह कृतात् पूर्वकृताद्वा संस्कारविशेषोद्भवाद्विरक्तस्य प्रत्यगात्मविषया जिज्ञासा प्रवर्त्तते तदेतद्वस्तु प्रश्नप्रतिवचनलक्षणया श्रुत्या प्रदर्श्यते केनेषितमित्याद्यया काठके चोक्तम्। पराञ्चि खानि व्यतृणत् स्वयम्भूस्तस्मात् पराङ् पश्यति नान्तरात्मन्।

---

मनुवदति। प्रागेतस्मादित्यादिना। कर्म्माङ्गसामपाश्रयभक्तिकं सामभक्तिकञ्च तद्विषयाण्युपासनानि पृथिव्यादिदृष्ट्यात्मकानि। प्राणदृष्ट्या गायत्रसामोपासनञ्च। शिष्याचार्य्यसन्तानाविच्छेदो यंसम्प्रदायलक्षणेन ग्रन्थेन कार्य्यरूपमेव वस्तूक्तञ्चेत्तर्हि प्राणाद्युपासनसहितस्य कर्म्मणः संसारफलत्वात् ब्रह्मज्ञानानुपयोगात् कथं हेतुहेतुमद्भावः सम्बन्धो विधिश्चित्त इत्याशङ्क्य नित्यकर्म्मणो तावज्ज्ञानोपयोगित्वं कथयति। सर्व्वमेतदिति। काम्यानां प्रतिषिद्धानाञ्च फलं तद्दोषदर्शनेन वैराग्यार्थं कथयति। स्वाभाविक्या त्विति। एतयोः पथोर्ज्ञानकर्म्मणोर्मध्ये केनापि मार्गेण येन प्रवृत्तास्ते प्रतिषिद्धानुष्ठायिन इत्यर्थः। जायस्व म्रियस्वेति पुनःपुनर्जायन्ते म्रियन्ते चेत्यर्थः। तिस्रः प्रजाः स्वेदजाण्डजोद्भिज्जलक्षणाः। पितृयान-देवयान-लक्षणमार्गगमनद्वयमतीत्य कष्टामिव गतिमीयुः प्राप्ता इत्यर्थः। एवं कर्म्मफलमुक्त्वा ततो

कश्चिद्धीरः प्रत्यगात्मनि ऐक्षदावृत्तचक्षुरमृतमिच्छन्नित्यादि परीक्ष्य लोकान् कर्म्मचितान् ब्राह्मणो निर्वेदमापन्नान्नास्त्यकृतः कृतेन तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमित्यादि। आथर्वणे च। एवं हि विरक्तस्य प्रत्यगात्मविषयं विज्ञानं श्रोतुं मन्तुं विज्ञातुञ्च सामर्थ्यमुपपद्यते नान्यथा। एतस्माच्च प्रत्यगात्मब्रह्मविज्ञानात् संसारबीजमज्ञानं कामकर्म्मप्रवृत्तिकारणमशेषतो निवर्त्तते। तत्र को मोहः कः शोक एकत्वमनुपश्यत इति मन्त्रवर्णात्। तरति शोकमात्मवित् भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्व-

---

विरक्तस्य विशुद्धसत्त्वस्य ब्रह्मज्ञानेऽधिकार इति दर्शयन् हेतुहेतुमद्भावमाह। विशुद्धसत्त्वस्य त्विति। साध्यसाधनसम्बन्धाद्विरक्तस्येति सम्बन्धः। तत्र निमित्तस्यादृष्टस्यानियतत्वमाह। इह कृतादिति। कर्म्मफलाद्विरक्तस्य ब्रह्मजिज्ञासा भवतीत्यत्र संवादमाह। काठके चेति। आवृत्तचक्षुरिति साध्यसाधनभावादुपरतकरणग्रामश्चक्षुर्ग्रहणस्योपलक्षणार्थत्वात्। अन्वयव्यतिरेकसिद्धत्वञ्चाह। एवं हीति। नान्यथेत्यविरक्तस्य बहिर्विषयाक्षिप्तचेतस आत्मजिज्ञासैवानुपपन्ना कथञ्चिज्जातापि न फलावसाना स्यात् शूद्रयागादिवदित्यर्थः। यद्यप्येवमुपनिषदः कर्म्मकाण्डसम्बन्धोऽस्ति तथाप्युपनिषज्जन्यज्ञानस्य निष्प्रयोजनत्वाद्वोपनिषदो व्याख्यारम्भः सम्भवतीत्याशङ्क्याह। एतस्माच्चेति। समुच्चयवादिनोऽभिप्रायं शङ्कते। कर्म्मसहितादपीति। एकाध्ययनविधिपरिगृहीतत्वात् कर्म्मज्ञानकाण्डयोरेकं फलं वाच्यं ततः कर्म्मसमुच्चिताज्ज्ञानात् सनिदानसंसारनिवृत्तिलक्षणं फलं सिद्ध्यतीति न कर्म्मसु विरक्तस्योपनिषदारम्भ इत्यर्थः। अध्ययन-

संशयाः। क्षीयन्ते चास्य कर्म्माणि तस्मिन् दृष्टे परावरे इत्यादिश्रुतिभ्यश्च। कर्म्मसहितादपि ज्ञानादेतत् सिध्यतीति चेन्न। वाजसनेयके तस्यान्यकारणत्ववचनाज्जाया मे स्यादिति प्रस्तुत्य पुत्रेणायं लोको जय्यो नान्येन कर्म्मणा कर्म्मणा पितृलोको विद्यया देवलोक इत्यात्मनोऽन्यस्य लोकत्रयस्य कारणत्वमुक्तम्। वाजसनेयके तत्रैव च पारिव्राज्यविधाने हेतुरुक्तः। किं प्रजया करिष्यामो येषां नोऽयमात्मा नायं लोक इति तत्रायं हेत्वर्थः। प्रजाकर्म्म तत्संयुक्तविद्याभिर्मनुष्यपितृदेवलोकत्रयसाधनैरनात्मलोकप्रतिपत्तये कारणैः किं करिष्यामो न चास्माकं लोकत्रयमनित्यं साधनसाध्यमिष्टं येषामस्माकं स्वाभाविकोऽजोऽजरोऽमृतोऽभयो न वर्द्धते कर्म्मणा नो कनीयान् नित्यश्च लोक इष्टः। स च

---

विधिपरिग्रहमात्रेण कर्म्मकाण्डस्य न मोक्षफलत्वं शक्यं फलान्तरावगमविरोधादित्याह। वाजसनेयक इति। किञ्च यदि श्रुतेः कर्म्मसमुच्चिताज्ज्ञानं विधित्सितं स्यात्तदा पारिव्राज्यं नोपदिश्येत्। श्रुत्या हेत्वभिधानेन ततो न समुच्चयः श्रुत्यर्थ इत्याह। तत्रैव चेति। प्रजाशब्दस्योपलक्षणार्थत्वमादाय हेत्वर्थमाह। तत्रायमिति। किं करिष्यामो न किमप्यात्मकात्वादेवेति शेषः। तत्फलं भुक्त्वा क्रमेण मोक्षसम्भवात् किमिति प्रजादिष्वनादर इत्याशङ्क्याह। न चेति। दृष्टोऽप्ययमात्मलोकः कर्म्मणा विना न लभ्यते फलत्वान्मोक्षस्यान्यथास्वभावसुक्तत्वे बन्धमोक्षावस्थयोरविशेषापातादित्याशङ्क्याह। स चेति। कर्म्ममोक्षे कार्य्यस्योत्पाद्यादेरसम्भवात् सम्यग्ज्ञानादविद्यानिवृत्त्या

नित्यत्वान्नाविद्यानिवृत्तिव्यतिरेकेणान्यसाधननिष्पाद्यस्तस्मात् प्रत्यगात्मब्रह्मविज्ञानपूर्वकः सर्वैषणासन्न्यास एव कर्त्तव्य इति। कर्म्मसहभावित्वविरोधाच्च प्रत्यगात्मब्रह्मविज्ञानस्य। न ह्युपात्तकारकफलभेदविज्ञानेन कर्म्मणा प्रत्यस्तमितसर्व-भेददर्शनस्य प्रत्यगात्मब्रह्मविषयस्य सहभावित्वमुपपद्यते। वस्तुप्राधान्ये सत्यपुरुषतन्त्रत्वाद्ब्रह्मविज्ञानस्य। तस्माद् दृष्टादृष्टेभ्यो बाह्यसाधनसाध्येभ्यो विरक्तस्य प्रत्यगात्मविषया ब्रह्मजिज्ञासेयं केनेषितमित्यादिश्रुत्या प्रदर्श्यते। शिष्याचार्य्य-प्रश्नप्रतिवचनरूपेण कथनन्तु सूक्ष्मवस्तुविषयत्वात् सुखप्रति-पत्तिकारणं भवति। केवलतर्कागम्यत्वञ्च दर्शितं भवति। नैषा तर्केण मतिरापनीयेति। श्रुतेश्च आचार्य्यवान् पुरुषो वेद आचार्य्याद्धैव विद्या विदिता साधिष्ठं प्रापदिति। तद्विद्धि प्रणिपातेनेत्यादिश्रुतिस्मृतिनियमाच्च। कश्चिद्गुरुं ब्रह्मनिष्ठं विधिवदुपेत्य प्रत्यगात्मविषयादन्यत्र शरणमपश्यन्नभयं नित्यं शिवमचलमिच्छन् पप्रच्छेति कल्पते। केनेषितमित्यादि।

---

फलप्रसिद्ध्युपपत्तेर्न कर्मकार्य्यो मोक्ष इत्यर्थः। ब्रह्मज्ञानस्या-भावावसानासिद्धये परोक्षनिश्चयपूर्वकः सन्न्यासः कर्त्तव्यः। सिद्धे चानुभावावसाने ब्रह्मात्मज्ञाने स्वभावप्राप्तः सन्न्यास इति द्रष्टव्यः। इतश्च न कर्म्म ब्रह्मात्मतानिश्चयसमुच्चयः। शास्त्रार्थ इत्याह। कर्म्म सहभावित्वेति॥ ननु कर्मवद्ब्रह्मज्ञानस्य विधि-तोऽनुष्ठेयत्वाद्विशेष विनियोज्यादिभेदापेक्षितत्वात् कथं सर्व-भेददर्शनं प्रत्यस्तमुच्यते॥ ब्रह्मज्ञाने सतीत्याशङ्क्याह। वस्तु-प्राधान्ये सतीति॥ विधिजन्यं प्रयत्नं भाव्यो हि विधिविषय उच्यते ज्ञानं न तथेति तद्विधेरसिद्धिरित्यर्थः। यस्मात् प्रत्यगा-

विशेषोऽवगन्तुं युक्तः। न प्रश्नसामर्थ्याद्देहादिसङ्घातादनित्यात् कर्म्मकार्य्यादिरतोऽतोऽन्यत् कूटस्थं नित्यं वस्तु बुभुत्समानः पृच्छतीति सामर्थ्यादुपपद्यते। इतरथेच्छावाक्कर्म्मभिर्देहादिसङ्घातस्य प्रेरयितृत्वं प्रसिद्धमिति प्रश्नोऽनर्थकः स्यात्। एवमपि प्रेषितशब्दस्यार्थेन प्रदर्शित एव न संशयवतोऽयं प्रश्न इति प्रेषितशब्दस्यार्थविशेष उपपद्यते। किं यथा प्रसिद्धमेव कार्य्यकारणसङ्घातस्य प्रेषयितृत्वं किं वा सङ्घातव्यतिरिक्तस्य स्वतन्त्रस्येच्छामात्रेणैव मन आदिप्रेषयितृत्वमित्यस्यार्थस्य प्रदर्शनार्थं केनेषितं पतति। प्रेषितं मन इति विशेषणद्वयमुपपद्यते। न तु स्वतन्त्रं मनः स्वविषये स्वयं पततीति प्रसिद्धम्। तत्र कथं प्रश्न उपपद्यत इत्युच्यसे। यदि स्वतन्त्रं मनः प्रवृत्तिनिवृत्तिविषये स्यात्तर्हि सर्वस्यानिष्टचिन्तनं न स्यादनर्थं च जानन् सङ्कल्पयति। अत्युग्रदुःखे च कार्य्ये वार्य्यमाणमपि प्रवर्त्तत एव मनस्तस्मादुक्त एव केनेषितमित्यादिप्रश्नः। केन प्राणो युक्तो नियुक्तः प्रेरितः सन् प्रैति गच्छति स्वव्यापारं प्रति प्रतस्य इति प्राणविशेषणं स्यात्तत् पूर्ववत्वात् सर्वेन्द्रियप्रवृत्तीनाम्।

---

त्विकप्रयोगादर्शनादिति ईषितमितिपदद्वयस्यार्थं वक्तमाह। तत्र प्रेषितमित्यादिना॥ इच्छामात्रेणेति॥ प्रपतनमन्तरेण सन्निधिमात्रेणेति व्याख्यातं नेदं व्याख्यानमपि शोभते। अपर्य्यायशब्दभेदस्यार्थभेदव्यभिचारादित्याह। अपि चेति॥ त्वदुक्तोऽयमर्थविशेषो न घटते सङ्घातस्यैवेच्छादिभिः प्रवर्त्तकसिद्धेः प्रश्नानुपपत्तिप्रसङ्गादित्याह। न प्रश्नेति॥ मनसः स्वातन्त्र्यात्

श्रोत्रस्य श्रोत्रं मनसो यद्वाचो ह वाचं स

केनेपितां वाचमिमां शब्दलक्षणां वदन्ति लौकिकाः। तथा चक्षुः श्रोत्रञ्च स्वे स्वे विषये क उ देवो द्योतनवान् युनक्ति युङ्क्ते प्रेरयति ॥ १ ॥

एवं पृष्टवते योग्यायाह गुरुः शृणु त्वं यत्पृच्छसि। मन आदिकरणजातस्य को देवः स्वविषयं प्रति प्रेरयिता कथं वा प्रेरयतीति। श्रोत्रस्य श्रोत्रं शृणोत्यनेनेति श्रोत्रं शब्दस्य श्रवण प्रतिकरणं शब्दाभिव्यञ्जकं श्रोत्रमिन्द्रियं तस्य श्रोत्रं स यस्त्वया पृष्टश्चक्षुः श्रोत्र क उ देवो युनक्तीति। असावेवं विशिष्टः श्रोत्रादीनि नियुङ्क्त इति वक्तव्ये न त्वेतदनुरूपं प्रतिवचनं श्रोत्रस्य श्रोत्रमिति। नैष दोषः। तस्यान्यथा विशेषानवगमात्। यदि हि श्रोत्रादिव्यापार-व्यतिरिक्तेन स्वव्यापारेण विशिष्टः श्रोत्रादिनियोक्ताऽवगम्येत दात्रादिप्रयोक्तृवत्तदिदमननुरूपं प्रतिवचनं स्यात्। न त्विह

स्वव्यतिरिक्तप्रवर्त्तकसम्भावनाभावात् प्रश्नो न घटत इत्याक्षिप्य समाधत्ते। ननु सतत्त्वमित्यादिना ॥ अन्युपद्रुःखे चेति ॥ १ ॥

अयतनोनदुःखे धूतादिकार्य्ये प्रतिवचनस्य प्रश्नाननुरूपत्वमाशङ्क्य समाधत्ते। असावेवविशिष्ट इत्यादिना ॥ श्रोत्रादयः स्वविलक्षणशेषाः संहतत्वाद्गृहादिवदित्यनुमानेन श्रोत्रादिशेषीतावदवगम्यते ,सोऽपि संहतः स्यात् तर्हि गृहादिवदचेतनः स्यात्। ततस्तस्याप्यन्यः शेषी कल्प्यस्तस्याप्यन्य इत्यनवस्थाप्रसङ्गपरिहारायासंहतश्चेतनो गम्यते। अतः सर्वसाक्षिणं

प्राणस्य प्राणश्चक्षुषश्चक्षुरतिमुच्य धीराः
प्रेत्यास्माल्लोकादमृता भवन्ति ॥ २ ॥

---

श्रोत्रादीनां प्रयोक्ता स्वव्यापारविशिष्टो लवित्रादिवदधिगम्यते। श्रोत्रादीनामेव तु संहतानां व्यापारेणालोचनसङ्कल्पाध्यवसायलक्षणेन फलावसानलिङ्गेनावगम्यते। अस्ति हि श्रोत्रादिभिरसंहतो यत्प्रयोजनप्रयुक्तः श्रोत्रादिकलापो गृहादिवदिति संहतानां परार्थत्वादवगम्यते श्रोत्रादीनां प्रयोक्ता। तस्मादनुरूपमेवेदं प्रतिवचनं श्रोत्रस्य श्रोत्रमित्यादिकम्। पुनरत्र पदार्थः श्रोत्रस्य श्रोत्रमित्यादेः। न ह्यत्र श्रोत्रस्य श्रोत्रान्तरेणार्थः। यथा प्रकाशस्य प्रकाशान्तरेण। नैष दोषोऽयमत्र पदार्थः। श्रोत्रं तावत् स्वविषयव्यञ्जनसमर्थं दृष्टम्। तच्च स्वविषयव्यञ्जनसामर्थ्यं श्रोत्रस्य चैतन्ये ह्यात्मज्योतिषि नित्ये संहते सर्वान्तरे सति भवति नासतीत्यतः श्रोत्रस्य श्रोत्रमित्याद्युपपद्यते। तथा च श्रुत्यन्तराण्यात्मनैवायं ज्योतिषास्ते तस्य भासा सर्वमिदं विभाति। येन सूर्यस्तपति तेजसेद्ध इत्यादीनि। यदादित्यगतं तेजो जगद्भासयतेऽखिलम्। क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारतेत्यादिगीतासु। काठके च। नित्योऽनित्यानां चेतनश्चेतनानामिति। श्रोत्राद्येव सर्वस्यात्मभूतं चेतनमिति प्रसिद्धं तदिह निवर्त्यते। अस्ति किमपि विद्वद्बुद्धिगम्यं सर्वान्तरतमं कूटस्थमजर-

---

लक्षयितुं युक्तमेव प्रतिवचनमित्यर्थः। फलावसानं फलनिष्पत्तिलिङ्गम्। यस्मिन्नवगत्या हि करणस्य व्यापारो लिङ्गत्वे

ममृतमभयमजं श्रोत्रादेरपि श्रोत्रादितसामर्थ्यमिति प्रतिवच-नम् । शब्दार्थश्चोपपद्यते एव । तथा मनसोऽन्तःकरणस्य मनो न ह्यन्तःकरणमन्तरेण चैतन्यज्योतिषा दीपितं स्वविषयसङ्कल्पाध्यवसायादिसमर्थं स्यात् । तस्मान्मनसोऽपि मन इति । इह बुद्धि मनसी एकीकृत्य निर्देशो मनस इति यद्वाचो ह वाचं यच्छब्दो यस्मादर्थे श्रोत्रादिभिः सर्वैः सम्बध्यते । यस्माच्छ्रोत्रस्य श्रोत्रम् । यस्मान्मनसो मन इत्येवं वाचो ह वाचमिति द्वितीया प्रथमात्वेन विपरिणम्यते । प्राणस्य प्राण इति दर्शनाद्वाचो ह वाचमित्येतदनुरोधेन प्राणस्य प्राणमिति । कस्माद्द्वितीयैव न क्रियते । न । बह्वनामनुरोधस्य युक्तत्वाद्वाचमित्यस्य वागित्येतावद्वक्तव्यं स उ प्राणस्य प्राण इति । शब्दद्वयानुरोधेनैवं हि बह्वनामनुरोधो युक्तः कृतः स्यात्पृष्टञ्च वस्तु प्रथमयैव निर्देष्टुं युक्तम् । स यस्त्वया पृष्टः प्राणस्य प्राणाख्यवृत्तिविशेषस्य प्राणस्तत्कृतं हि प्राणस्य प्राणनसामर्थ्यम् । न ह्यात्मनानधिष्ठि-

---

नित्यायगतिव्यञ्जकत्वाद्वा फलावसानलिङ्गव्यापारस्तेन तच्छेयी लभ्यत इत्यर्थः । प्रतिवचनस्य सङ्क्षेपतस्तात्पर्यमाह । श्रोत्राद्येव सर्वस्येति । यस्मादस्ति श्रोत्रस्य श्रोत्रं तस्माच्छ्रोत्रादात्मबुद्धिः सन्त्यक्तव्येति शेषः । प्राणचेष्टा चेतनाधिष्ठानपूर्विका चेतनप्रवृत्तित्वाद्रथादिप्रवृत्तिवदित्यभिप्रेत्याह । न ह्यात्मनाधिष्ठितस्येति । ज्ञात्वेतिपदाध्याहारे कारणमाह । पृष्टः पृष्टस्येति । सामर्थ्यादिति । श्रोत्राद्यात्मभावत्यागमन्तरेणामृतत्वासम्भवाज्ज्ञानबलाच्छ्रोत्राद्यात्मभावं त्यक्त्वाऽमृता भवन्तीति

तस्य प्राणनमुपपद्यते। को ह्येवान्यात्कः प्राण्यात् यदेष आकाश आनन्दो न स्यात्। ऊर्द्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्तीत्यादिश्रुतिभ्यः। इहापि च वक्ष्यते येन प्राणः प्रणीयते तदेवं ब्रह्म त्वं विद्धीति। श्रोत्रादीन्द्रियप्रस्तावे घ्राणप्राणस्य न तु युक्तं ग्रहणम्। सत्यमेवं प्राणग्रहणेनैव तु घ्राणस्य ग्रहणे कृते एव मन्यते श्रुतिः। सर्वस्यैव करणकलापस्य यदर्थप्रयुक्ता प्रवृत्तिस्तद्ब्रह्मेति प्रकरणार्थो विवक्षितः। तथा चक्षुषश्चक्षुरूपप्रकाशकस्य चक्षुषो यद्रूपग्रहणसामर्थ्यं तदात्मचैतन्याधिष्ठितस्यैव अतश्चक्षुषश्चक्षुः प्रष्टुः पृष्टस्यार्थस्य ज्ञातुमिष्टत्वाच्छ्रोत्रादिलक्षणं यथोक्तं ब्रह्म ज्ञात्वे त्यध्याह्रियते। अमृता भवन्तीति फलश्रुतेश्च। ज्ञानाद्ध्यमृतत्वं प्राप्यते। ज्ञात्वाऽतिमुच्यत इति सामर्थ्यात्। श्रोत्रादिकरणकलापमुज्झित्वा श्रोत्रादौ ह्यात्मभावं कृत्वा तदुपाधिः सन्तदात्मना जायते म्रियते संसरति च। अतः श्रोत्रादेः श्रोत्रादिलक्षणं ब्रह्मात्मेति विदित्वाऽतिमुच्य श्रोत्राद्यात्मभावं परित्यज्य ये श्रोत्राद्यात्मभावं परित्यजन्ति ते धीरा धीमन्तः। न हि विशिष्टधीमत्त्वमन्तरेण श्रोत्राद्यात्मभावः शक्यः परित्यक्तुम्। प्रेत्य व्यावृत्यास्माल्लोकात् पुत्रमित्रकलत्रबन्धुषु ममाहं भाव-

---

सम्बन्धः। एतत् स्फुटयति। श्रोत्रादौ हीत्यादिना। मृत्वेति विदेहमुक्तिर्विवक्षिता प्रारब्धभोगक्षये शरीरान्तरोत्पादे कारणाभावादवश्यम्भाविनी विदुषोऽविदुषश्च मुक्तिरित्यर्थः। सर्पाद्यध्यासाधिष्ठानरज्जुवच्छ्रोत्राद्यध्यासाधिष्ठानचैतन्य श्रोत्रस्य श्रोत्रमित्यादिना लक्षितं तर्हि रज्जुवदधिष्ठानत्वाद्विषयत्व-

न तत्र चक्षुर्गच्छति न वाग्गच्छति नो
मनो न विद्मो न विजानीमो यथैतदनुशिष्या-

संव्यवहारलक्षणात् त्यक्तसर्वैषणा भूत्वेत्यर्थः । अमृता अमरणधर्माणो भवन्ति । न कर्मणा न प्रजया न धनेन त्यागेनैकेनामृतत्वमानशुः पराञ्चि खानि व्यतृणत् । आवृत्तचक्षुरमृतत्वमिच्छन् । यदा सर्वे प्रमुच्यन्ते । अत्र ब्रह्म समश्नुते इत्यादिश्रुतिभ्यः । अथवातिमुच्येत्यनेनैषणात्यागस्य सिद्धत्वादस्माल्लोकात् प्रेत्यास्माच्छरीरात् प्रेत्य मृत्वेत्यर्थः ॥ २ ॥

यस्माच्छ्रोत्रादेरपि श्रोत्राद्यात्मभूतं ब्रह्म अतो न तत्र तस्मिन् ब्रह्मणि चक्षुर्गच्छति । स्वात्मनि गमनासम्भवात् । तथा न वाग्गच्छति । वाचा हि शब्द उच्चार्यमाणोऽभिधेयं प्रकाशयति यदा तदाभिधेयं प्रति वाग्गच्छतीत्युच्यते । तस्य च शब्दस्य तन्निवर्त्तकस्य च करणस्यात्मा ब्रह्मातो न वाग्गच्छति । यथाग्निर्दाहकः प्रकाशश्चापि सन् न ह्यात्मानं प्रकाशयति दहति च तद्वत् मनो मनश्चान्यस्य

---

मनश्च इति शब्दो निवर्त्तयति । यस्माच्छ्रोत्रादेरपीत्यादिना । अध्यस्तस्य ह्यधिष्ठानमेव स्वरूपमात्मसामर्थ्येषु तदव्यभिचारात् स्वरूपविषयता च न पदार्थधर्मस्ततोऽप्रयोजकोऽयं हेतुरित्यर्थः ॥ २ ॥

अविषयत्वात्तर्हि शास्त्राचार्योपदेश्यत्वमपि न स्यादित्याशङ्क्य शास्त्रैव शास्त्रमित्याह । इन्द्रियमनोभ्यां हीति ॥ ब्राह्मणोऽयमित्यादि जातितः । कृष्णोऽयमित्यादि गुणतः ।

दन्यदेव तद्विदितादथो अविदितादधि। इति शुश्रुम पूर्वेषां ये नस्तद्व्याचचक्षिरे ॥ ३ ॥

---

सङ्कल्पयितृ अध्यवसायितृ च सन्नात्मानं सङ्कल्पयत्यध्यवस्यति च। तस्यापि ब्रह्मात्मत्वेऽतीन्द्रियमनोभ्यां हि वस्तुनो विज्ञानं तदगोचरत्वान्न विद्मस्तद्ब्रह्मेदृगमित्यतो न विजानीमो यथा येन प्रकारेणैतद्ब्रह्मानुशिष्यादुपदिशेच्छिष्यायेत्यभिप्रायः। यद्धि करणगोचरन्तदन्यस्मै उपदेष्टुं शक्यं जातिगुणक्रियाविशेषणैः। न तज्जात्यादिविशेषणवद्ब्रह्म। तस्माद् विषमं शिष्यानुपदेशेन प्रत्याययितुमिति। उपदेशे तदर्थग्रहणे च यत्नातिशयकर्त्तव्यतां दर्शयति न विद्मेत्यादि। अत्यन्तमेवोपदेशप्रकारप्रत्याख्याने प्राप्ते तदपवादोऽयमुच्यते। सत्यमेवं प्रत्यक्षादिभिः प्रमाणैर्न परः प्रत्याययितुं शक्यः। आगमेन तु शक्यत एव प्रत्याययितुम्। तदुपदेशार्थमागममाह। अन्यदेव तद्विदितादथो अविदितादधीति। अन्यदेव पृथगेव तद्यत् प्रकृतं श्रोत्रादीनां श्रोत्रादीत्युक्तमविषयश्च तेषां तद्विदितादन्यदेव हि विदितं नाम यद् विदि क्रिययाऽतिशये-

---

पाचकोऽयमित्यादि क्रियातः। राजपुरुष इत्यादि सम्बन्धविशेषणत उपदिश्यते। ब्रह्म तु न जात्यादिमत् केवलो निर्गुणश्चेत्यादिश्रुतेः। अन्तेनागमस्य भेदेन प्रतिपन्नत्वात् तद्व्याचार्यस्याप्यविद्यालेशोच्छेदद्दृष्ट्या व्यावहारिक उपदेश उपपद्यते। आगमतस्त्वयैवात्मा ब्रह्मरूपेण लक्षयितुं योग्यतातिशयत्वादित्यभिप्रेत्याह। अत्यन्तमेवेति। वाक्यस्य पदार्थान् व्याख्याय तात्पर्यं दर्शयितुमुपक्रमते। यद्विदितं तदल्पमित्यादिना।

नासौ तद् विदि क्रियाकर्मभूतं क्वचित् किञ्चित् कस्यचिद् विदितं स्यादिति तस्मादिति सर्वमेव व्याकृतं तद्विदितमेव तस्मादन्यदित्यर्थः। अविदितमज्ञातं तर्हीति प्राप्ते आह। अथोऽप्यविदिताद्विदित-विपरीतादव्याकृतादविद्यालक्षणाद्-व्याकृतबीजादधीत्युपर्य्यर्थे लक्षणया अन्यदित्यर्थः। यद्धि यस्मादध्युपरि भवति तत्तस्मादन्यदिति प्रसिद्धं यद्विदितं तदल्पमत्यन्तदुःखात्मकञ्चेति हेयम्। तस्माद्विदितादन्यद्-ब्रह्मेत्युक्ते त्वहेयत्वमुक्तं स्यात्। तथाऽविदितादधीत्युक्ते-ऽनुपादेयत्वमुक्तं स्यात्। कार्य्यार्थं हि कारणमन्य-दन्येनोपादीयतेऽतश्च न वेदितुरन्यस्मै प्रयोजनायान्यदुपा-देयं न भवतीत्येवं विदिताविदिताभ्यामन्यदिति हेयोपादेय-प्रतिषेधेन स्वात्मनोऽन्यत्वाद् ब्रह्मविषया जिज्ञासा शिष्यस्य निर्वर्त्तिता स्यात्। न ह्यन्यस्य स्वात्मनो विदिताविदिता-भ्यामन्यत्वं वस्तुनः सम्भवतीत्यात्मा ब्रह्मेत्येष वाक्यार्थः। अयमात्मा ब्रह्म य आत्माऽपहतपाप्मा। यत् साक्षादपरोक्षाद् ब्रह्म। य आत्मा सर्वान्तर इत्यादिश्रुत्यन्तरेभ्यश्चेत्येवं सर्वा-

---

यद्वेदितुरन्यद् विदितमविदितञ्चेति द्वयोर्गतिः। ततो विदित-त्वाविदितत्वनिषेधेन वेदितुः स्वरूपं ब्रह्मेत्येव तात्पर्य्यमागम-स्येत्याह। न ह्यन्यस्येति। उक्तवाक्यार्थे लौकिकतार्किक-मीमांसकप्रतिपत्तिविरोधमाशङ्क्य परिहरति। विदितादन्यत्व-प्रपञ्चनाय। अन्यदेव तद्विदितादित्यादिना। अष्टसु स्थाने-ष्विति। अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा। जिह्वा-मूलञ्च दन्ताश्च नासिकौष्ठौ च तालु चेति एतेष्वाकाशप्रदेशे-ष्वाश्रितमित्यनेनाकाशोपादानत्वं सूचितम्। आग्नेयमित्यग्नि-

तत: सर्वविशेषरहितस्य चिन्मात्रज्योतिषो ब्रह्मत्वप्रतिपादकस्य वाक्यस्याचार्य्योपदेशपरम्परया प्राप्तत्वमाह। इति शुश्रुमेत्यादि। ब्रह्म चैतन्यमाचार्य्योपदेशपरम्परयैवाधिगम्यार्थ्यं न तर्कत:॥ प्रवचनमेधा बहुश्रुततया यज्ञादिभ्यश्चेत्येवं शुश्रुम: श्रुतवन्तो वयं पूर्व्वेषामाचार्य्याणां वचनम्। ये आचार्य्या नोऽस्मभ्यं तद्ब्रह्म व्याचचक्षिरे व्याख्यातवन्तो विस्पष्टं कथितवन्तस्तेषामित्यर्थ:। अन्यदेव तद्विदितादथो अविदितादधीत्यनेन वाक्येनात्मा ब्रह्मेति प्रतिपादिते श्रोतुराशङ्का जाता सत् कथमात्मा ब्रह्म। आत्मा हि नामाधिकृत: कर्म्मण्युपासने च संसारी कर्म्मोपासनं वा साधनमनुष्ठाय ब्रह्मादिदेवान् स्वर्गं वा प्राप्तुमिच्छति तत्तस्मादन्यत्। उपास्यो विष्णुरीश्वर इन्द्र प्राणो वा ब्रह्म भवितुमर्हति न त्वात्मा। लोकप्रत्ययविरोधात्। यथाऽन्ये तार्किका ईश्वरादन्य आत्मा इत्याचक्षते तथा कर्म्मणोऽसुं यजासुं यजेत्यन्या एव देवता उपासते। तस्माद्युक्तं यद्विदितमुपास्यं तद्ब्रह्म भवेत्। ततोऽन्य उपासक इति तामेतामाशङ्कां

---

देवताकमित्यर्थ:। न केवलं करणं वागुच्यते वर्णायोऽनन्त इत्याह। वर्णाश्चेति। तदुक्तं यावन्तो यादृशा ये च यदर्थप्रतिपादका वर्णा: प्रज्ञातसामर्थ्यास्ते तदर्थावबोधका इति। गौरिति पदे गकारौकारविसर्जनीया एवं क्रमविशेषावच्छिन्ना इति मीमांसकाद्यनुसारिणोक्तं स्फोटवादिनोऽनुसारेणाह। तदभिव्यञ्जं इति। स्फुट्यते व्यज्यते वर्णैरिति स्फोट: पदादिबुद्धिप्रमाणक एकरूपाया बुद्धेरनेकवर्णावलम्बनत्वासम्भवादिति भाव:। उक्ते वाक्यार्थे श्रुतिसम्मतिमाह। अकार इति।

यद्वाचानभ्युदितं येन वागभ्युद्यते।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ४ ॥

शिष्यलिङ्गेनोपलक्षित तद्वाक्यादा मैवं शङ्किठा:। यच्चैतन्यमात्रसत्ताकं वाचा वागिति जिह्वामूलादिष्वष्टसु स्थानेषु विषक्तमग्नेयं वर्णानामभिव्यञ्जकं करणं वर्णांश्चार्थसङ्केतपरिच्छिन्ना एतावन्त एवं क्रमप्रयुक्ता इत्येवं तदभिव्यङ्ग्यः शब्दः पदं वागित्युच्यते। अकारो वै सर्वा वाक् सैषाऽस्य स्पर्शान्तस्थोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवतीति श्रुतेः। मितममितं स्वरः ॥ ३ ॥

सत्यानृते एव विकारो यस्मात्तया वाचा पदत्वेन परिच्छिन्नया करणगुणवत्याऽनभ्युदितमप्रकाशितमनभ्युक्तं येन ब्रह्मणा विवक्षितेऽर्थे सकरणा वागभ्युद्यते चैतन्यज्योतिषा प्रकाश्यते प्रयुज्यत इत्येतत्। यद्वाचो ह वागित्युक्तं वदन्

---

अकारप्रधानोऽकारोपलक्षिता स्फोटाख्या चिच्छक्तिः सर्वा वाक् सैषा स्पर्शोष्मभिर्व्यज्यमाना कादयो मावसानाः स्पर्शा। यरलवा अन्तस्था। शषसहा उष्माणः तैः क्रमविशेषावच्छिन्नव्यज्यमाना नानारूपा विवर्त्तन्ते। मित ऋगादि। पादावसाननियताक्षरत्वात्। अमितं यजुरादि। अनियताक्षरपादावसानत्वात्। स्वरः साम। गीतिप्राधान्यात्। सत्यं यथा दृष्टार्थवचनम्। अनृतं तद्विपरीतम्। करणं वागिन्द्रियम्। गुण उपसर्जन यस्या, सा करणगुणवती पुरुषेषु चेतनेषु या वाक्शक्तिः सा घोषेषु वर्णेषु प्रतिष्ठिता तद्व्यङ्ग्यत्वादित्यर्थः ॥ ३ ॥

तदेवेत्येवकारस्य कृत्यमाह। येनेत्यादु पाधिभिरिति।

यन्मनसा न मनुते येनाहुर्मनो मतम्।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ५ ॥

वाक् यो वाचमन्तरो यमयतीत्यादि च वाजसनेयके। या वाक् पुरुषेषु प्रतिष्ठिता कश्चित् तां वेद ब्राह्मण इति प्रश्नमुत्पाद्य प्रतिवचनमुक्तं सा वाग्यया स्वप्ने भाष्यत इति। सा हि वक्तुर्वक्तिर्नित्या वाक्चैतन्यज्योतिःस्वरूपा। न हि वक्तुर्वक्तेर्विपरिलोपो विद्यत इति श्रुतेः। तदेवात्मस्वरूपं ब्रह्म निरतिशयं भूमाख्यं बृहत्वाद् ब्रह्मेति विद्धि विजानीहि त्वं यैर्वागाद्युपादिभिः। वाचो ह वाक्चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रं मनसो मनः कर्त्ता भोक्ता विज्ञाता नियन्ता प्रशासिता विज्ञानमानन्दं ब्रह्मेत्येवमादयः संव्यवहारा संव्यवहार्य्ये निर्विशेषे परे साम्ये ब्रह्मणि प्रवर्त्तन्ते तान् व्युदस्यात्मानमेव निर्विशेषं ब्रह्म विद्धीत्येवशब्दार्थः। नेदं ब्रह्म यदिदमित्युपाधिभेदविशिष्टमनात्मेश्वराद्युपासते ध्यायन्ति। तदेव ब्रह्म त्वं विद्धीत्युक्तेऽपि नेदं ब्रह्मेत्यनात्मनोऽब्रह्मत्वं पुनरुच्यते। नियमार्थमन्यद् ब्रह्मबुद्धिपरिसङ्ख्यानार्थं वा ॥ ४ ॥

यन्मनसा न मनुते। मन इत्यन्तःकरणं बुद्धिमनसोरेकत्वेन गृह्यते। मनुतेऽनेनेति मनः सर्वकरणसाधारणम्। सर्वविषयव्यापकत्वात्। कामः संकल्पो विचिकित्सा श्रद्धा

नियमार्थमिति पचे अनात्मन्यपि ब्रह्मबुद्धी प्राप्तायामात्मैव ब्रह्मेति बुद्धिं नियन्तुमित्यर्थः। अन्यस्मिन्नुपास्ये या ब्रह्मबुद्धिस्तन्निवृत्त्यर्थं वापुनरब्रह्मत्वमुच्यत इत्यर्थः ॥ ४ ॥

यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यति ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ६ ॥
यच्छ्रोत्रेण न शृणोति येन श्रोत्रमिदं श्रुतम् ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ७ ॥
यत्प्राणेन न प्राणिति येन प्राणः प्रणीयते ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ८ ॥

इति प्रथमः खण्डः ॥ १ ॥

---

धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्वं मन एवेति श्रुतिः । कामादिवृत्तिमन्मनस्तेन मनसा यच्चैतन्यज्योतिर्मनसोऽवभासकं न मनुते न सङ्कल्पयति नातिनिश्चिनोति । मनसोऽवभासकत्वेन नियन्तृत्वात् । सर्वविषयं प्रति प्रत्यगेवेति स्वात्मनि न वर्त्ततेऽन्तःकरणम् । अन्तस्थेन हि चैतन्यज्योतिषाऽवभासितस्य मनसो मननसामर्थ्यं तेन सवृत्तिकं मनो ब्रह्मणा मतं विषयीकृतं व्याप्तमाहुः कथयन्ति ब्रह्मविदः । तस्मात्तदेव मनस आत्मानं प्रत्यक् चेतयितारं ब्रह्म विद्धि । नेदमित्यादि पूर्ववत् ॥ यच्चक्षुषा न पश्यति न विषयीकरोत्यन्तःकरणवृत्तिसंयुक्तेन येन चक्षूंषि अन्तःकरणवृत्तिभेदभिन्नाश्चक्षुर्वृत्तीः पश्यति लोकश्चैतन्यात्मज्योतिषा विषयीकरोति व्याप्नोति । {यच्छ्रोत्रेण न शृणोति दिग्देवताधिष्ठित-

---

सर्वं स्पष्टमिति न व्याख्यातम् ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥

इति प्रथमः खण्डः ।

यदि मन्यसे सुवेदेति दभ्रमेवापि नूनं त्वं

---

नासाग्रकार्य्येण मनोवृत्तिसंयुक्तेन विषयीकरोति लोको येन श्रोत्रमिदं श्रुतं यत्प्रसिद्धं चैतन्यात्मज्योतिषा विषयीकृतं तदेव पूर्ववत्। यत्प्राणेन घ्राणेन पार्थिवेन नासिकापुटान्तराव-स्थितेनान्तःकरणप्राणवृत्तिभ्यां सहितेन यत्र प्राणिति गन्धमेव विषयीकरोति येन चैतन्यात्मज्योतिषावभास्यत्वेन स्वविषय प्रति प्राणः प्रणीयते। तदेवेत्यादि सर्वं समानम्। ५। ६। ७। ८॥ इति प्रथमः खण्डः॥ १॥

एवं हेयोपादेयविपरीतस्त्वमात्मा ब्रह्मेति प्रत्यायितः शिष्योऽहमेव ब्रह्मेति सुष्ठु वेदाहमिति मा ग्रहीयादित्या-शयादाहाचार्य्यः। शिष्यबुद्धिविचालनार्थं यदीत्याह। नन्वि-ष्टैव सुवेदाहमिति निश्चिता प्रतिपत्तिः। सत्यमिष्टा निश्चिता प्रतिपत्तिर्न हि सुवेदाहमिति। यद्धि वेद्यं वस्तु विषयि भवति तत् सुष्ठु वेदितुं शक्यं दाह्यमिव दग्धुमग्नेर्दग्धुर्न त्वग्नेः स्वरूपमेव। सर्वस्य हि वेदितुः स्वात्मा ब्रह्मेति सर्ववेदान्तानां सुनिश्चितोऽर्थः। इह च तदेव प्रतिपादितं प्रश्नप्रतिवचनोक्त्या श्रोत्रस्य श्रोत्रमित्याद्यया। यद्वाचान-भ्युदितमिति विशेषतोऽवधारितम्। ब्रह्मवित् सम्प्रदाय-

---

वदितुः स्वरूपत्वे ब्रह्मणो नाभूद्विषयत्वम्। स्वरूपत्वे मानाभावात्। अतिरिक्तस्य विषयत्वे विनत्नुपपन्नमित्याश-ङ्क्याह। सर्वस्य हीति। यदिशब्दप्रयोगे किं कारणमित्यत आह। कदाचिदिति। अचिरेण शरीरस्य प्रतिच्छाया इवात्र इति शमित्वदुपदेशाच्छरीरमात्मेति प्रतिपन्नः। छायात्वभि

वेत्थ ब्रह्मणो रूपं यदस्य त्वं यदस्य देवेष्वथ नु

---

निश्चयोक्तोऽन्यदेव तद्विदितादथो अविदितादधीत्युपन्यस्योप-
संहरिष्यति चाविज्ञातं विजानतां विज्ञातमविजानतामिति।
तस्माद्युक्तमेव शिष्यस्य सुवेदेति बुद्धिं निराकर्त्तुम्। न हि
वेदिता वेदितुर्वेदितुं शक्योऽग्निरिव दग्धुरिव दग्धुमग्नेः।
न चान्यो वेदिता ब्रह्मणोऽस्ति यस्य वेद्यमन्यत् स्याद्ब्रह्म।
नान्यदतोऽस्ति विज्ञात्रित्यन्यो विज्ञाता प्रतिषिध्यते। तस्मात्
सुष्ठु वेदाहं ब्रह्मेति प्रतिपत्तिर्मिथ्यैव। तस्माद्युक्तमेवाहा-
चार्य्यो यदीत्यादि। यदि कदाचिन्मन्यसे सुवेदेति सुष्ठु
वेदाहं ब्रह्मेति। कदाचिद्यथाश्रुतं दुर्विज्ञेयमपि क्षीणदोषः
सुमेधाः कश्चित् प्रतिपद्यते कश्चिन्नेति साशङ्कमाह यदी-
त्यादि। दृष्टश्च य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति
होवाचैतदमृतमभयमेतद्ब्रह्मेत्युक्ते प्राजापत्यः पण्डितोऽप्य-
सुरराड्विरोचनः स्वभावदोषवशादनुपपद्यमानमपि विप-

---

चारित्वं बुद्धेत्यर्थः। सकृदिति य एषोऽक्षिणि पुरुषो दृश्यत
इत्येकवारमुक्तं य एष स्वप्ने महीयमानश्चरतीति द्वितीयेनोक्तं
तद्यत्रैतत् सुप्तः समस्तः सम्प्रसन्न इति विद्वानप्यात्मानमप्रति-
पद्यमानः। इन्द्रो ब्रह्मचर्य्याधर्मादिदोषक्षयमपेक्ष्य चतुर्थे
पर्य्याये य एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योती-
रूपं सम्पद्येत्यत्र प्रथमपर्य्यायोक्तमेव ब्रह्म प्रतिपन्नवानित्यर्थः।
धर्मकाणि चेति अल्पानि न स्वतो रूपमस्ति ब्रह्मण इत्युक्तं
तदाक्षिपति। ननु येनैवेति।। केन तर्हि विशेषेण ब्रह्मणो
निरूपणमित्याकाङ्क्षायां चैतन्यरूपेणेत्याह। चैतन्यमिति।

मीमांस्यमेव ते मन्ये विदितम् ॥ ८॥ १ ॥ नाहं

रीतमहं शरीरमात्मेति प्रतिपन्नः । तथेन्द्रो देवराट् सकृद्द्वि-स्त्रिरुक्तश्चाप्रतिपद्यमानः स्वभावदोषक्षयमपेक्ष्य चतुर्थे पर्याये प्रथमोक्तमेव ब्रह्म प्रतिपन्नवान् । लोकेऽपि एकस्माद्गुरोः शृण्वतां कश्चिद्यथावत् प्रतिपद्यते कश्चिदयथावत् कश्चिद्विप-रीतं कश्चिन्न प्रतिपद्यते किमु वक्तव्यमतीन्द्रियमात्मतत्त्वम् । अत्र हि विप्रतिपन्नाः सदसद्वादिनस्तार्किकाः सर्वे । तस्माद-विदितं ब्रह्मेति सुनिश्चितोक्तमपि विप्रतिपत्तिस्थानाद्यदि मन्यसे इत्यादि सागङ्क वचनं युक्तमेवाचार्यस्य दहरमल्पमेवापि नूनं त्वं वेत्थ जानीषे ब्रह्मणो रूपं किमनेकानि ब्रह्मणो रूपाणि महान्त्यर्भकाणि च येनाह दहरमेवेत्यादि। बाढ़म् । अनेकानि हि नामरूपोपाधिकृतानि ब्रह्मणो रूपाणि न स्वतः । स्वतस्तु अशब्दमस्पर्शमरूपमव्ययं तथाऽरसंनित्य-मगन्धवच्च यत् । यदि शब्दादिभिः सह रूपाणि प्रति-

---

भूतानां समस्तानां वा देहाकारपरिणतानां चैतन्यं धर्मो न भवतीति वह्निरुपलम्भात् तद्धर्मत्वे रूपादिवत् साधकत्वाभाव-प्रसङ्गाच्च । तथा जीवादीनामपि भौतिकत्वाविशेषाच्चैतन्यधर्मो न भवतीति पारिशेष्यात् स्वतन्त्रचैतन्यं ब्रह्मणो रूपम् । तत्र श्रुतिसम्मतिमाह । तथाचोक्तमिति । सत्यमेव चैतन्यं पार-मार्थिकं ब्रह्मरूपं श्रुतितात्पर्यगम्यं तथापि यदुक्तं ब्रह्मणो रूपं कथं नास्तीति तदुपाधिद्वारेणैव ब्रह्मणः शब्देन निरूपणं निर्देशनं न स्वत इत्यभिप्रेत्याऽन्तःकरणाद्यभिव्यक्तिमुपलभ्य हि यदुपाध्यभिव्यक्तिनिमित्तं चैतन्यं तद् ब्रह्मेति निर्दिश्यत

मन्ये सुवेदेति नो न वेदेति वेद च । यो नस्त-

सिध्यन्ते । ननु येनैव धर्मेण यद्रूप्यते तदेव तस्य स्वरूपमिति ब्रह्मणोऽपि येन विशेषणेन निरूपणं तदेव तस्य रूपं स्यादत उच्यते । चैतन्यं पृथिव्यादीनामन्यतमस्य सर्वेषां विपरिणतानां वा धर्मो न भवति । तथा श्रोत्रादीनामन्तःकरणस्य च धर्मो न भवतीति ब्रह्मणो रूपमिति ब्रह्म रूप्यते चैतन्येन । तथाचोक्तं विज्ञानमानन्दं ब्रह्म । विज्ञानघन एव । सत्यं ज्ञानमनन्तं ब्रह्मेति च ब्रह्मणो रूपं निर्दिष्टं श्रुतिषु सत्यमेव तथापि तदन्तःकरणदेहेन्द्रियोपाधिद्वारेणैव विज्ञानादिशब्दैर्निर्दिश्यते तदनुकारित्वाद्देहादिवृद्धिसङ्कोचच्छेदादिषु नाशेषु च न स्वतः । स्वतस्त्वविज्ञातं जानतां विज्ञातमविजानतामिति स्थितं भविष्यति । यदस्य ब्रह्मणो रूपमिति पूर्वेण सम्बन्धः । न केवलमध्यात्मोपाधिपरिच्छिन्नस्यास्य ब्रह्मणो रूपं त्वमल्पं वेत्थ यदप्यधिदैवतोपाधिपरिच्छिन्नस्यास्य ब्रह्मणो रूपं देवेषु वेत्थ त्वं तदपि नूनं दभ्रमेव वेत्थ इति मन्येऽहम् । यदध्यात्मं तदपि चोपाधिपरिच्छिन्नत्वाद्दभ्रत्वान्न निवर्त्तते ।

इत्यर्थः । ननूपाधिरुपहितसम्बद्धो भवति चैतन्यस्य त्वसङ्गस्य कथं देहादिरुपाधिरित्याशङ्क्याह । तदनुकारित्यादिना । यथा जले कम्पमाने सविता कम्पत इव भिद्यमाने भिद्यत इवेति मिथ्या तद्धर्मभागित्वात् सवितुर्जलमुपाधिरित्युच्यते न तु सम्बन्धाद् दूरस्थयोः संयोगाद्ययोगात् तद्वद्देहादेर्वृद्धिसङ्कोचच्छेदादिषु दाहादिषु नाशेषु चैतन्यस्य मिथ्यादेहधर्मभागित्वाद्देहादे-

वेद तद्वेद नो न वेदेति वेद च ॥ १० ॥ २ ॥

यस्यामतं तस्य मतं मतं यस्य न वेद सः।

---

यत्तु विध्वस्तसर्वोपाधिविशेषं शान्तमनन्तमेकमद्वैतं भूमाख्यं नित्यं ब्रह्म न तत् सुवेद्यमित्यभिप्रायः। यत एवमथ नु तस्मात् मन्येऽद्यापि मीमांस्यं विचार्य्यमेव ते तव ब्रह्म। एवमाचार्य्योक्तः शिष्य एकान्त उपविष्टः सन् यथोक्तमाचार्य्येणागममर्थतो विचार्य्य तर्कतश्च निर्द्धार्य्य स्वानुभवं कृत्वाऽऽचार्य्यसकाशमुपगम्योवाच। मन्येऽहमथेदानीं विदितं ब्रह्मेति। कथमिति। शृणु। नाहं मन्ये सुवेदेति नैवाहं मन्ये सुवेदेति ज्ञानविषयं ब्रह्मेति। नैव तर्हि विदितं त्वया ब्रह्मेत्युक्त आह। नो न वेदेति वेद च। वेद चेति च शब्दात्र वेद त्वम्। ननु विप्रतिषिद्धं नाहं मन्ये सु वेदेति नो न वेदेति वेद चेति। यदि न मन्यसे सु वेदेति कथं मन्यसे वेद चेति। अथ मन्यसे वेदैवेति कथं न मन्यसे सुवेदेति। एकं वस्तु येन ज्ञायते तेनैव तदेव वस्तु न सु विज्ञायत इति विप्रतिषिद्धं संशयविपर्य्ययौ वर्जयित्वा। न च ब्रह्म संशयितत्वेन ज्ञेय विपरीतत्वेन वेति नियन्तुं शक्यम्।

---

रुपाधित्वमभिधीयत इत्यर्थः। ननु न स्वतश्चैतन्यतया निरुप्यते ब्रह्म यार्थं तर्हि तदनुभव इत्याशङ्ख्याह। स्वतस्त्विति। अविषयतयैव विषयानुपरक्त चित्स्फुरणं ब्रह्मानुभव इत्यर्थः। तर्कतश्चेति वेद्यत्वे घटादिवदनात्मत्वादिप्रसङ्गादित्यादितर्कत आत्मनो वेद्यं ब्रह्म न भवत्येवेति निर्द्धार्य्याज्ञानसंशयाद्यभावेन

अभिज्ञातं विजानतां विज्ञातमविजानताम् ॥
११ ॥ ३ ॥

---

संशयविपर्य्ययौ हि सर्वज्ञानर्थकरत्वेनैव प्रसिद्धौ। एवमाचार्य्येण विचाल्यमानोऽपि शिष्यो न विचचाल। अन्यदेव तद्विदिताद्यो अविदितादधीत्याचार्य्योक्तागमसम्प्रदायबलादुपपत्त्यनुभवबलाच्च जगर्ज च ब्रह्मविद्यायां दृढनिश्चयतां दर्शयन्नात्मनः। कथमित्युच्यते। यो यः कश्चिन्नोऽस्माकं स ब्रह्मचारिणां मध्ये तन्मदुक्तं वचन तत्त्वतो वेद स तद्ब्रह्म वेद। किं पुनस्तद्वचनमित्यत आह नो न वेदेति वेद चेति। यदेवान्यदेव तद्विदितादथो अविदितादधीत्युक्तं वस्तु तदेव अनुमानानुभवाभ्यां संयोज्य निश्चितं वाक्यान्तरेण नो न वेदेति वेद चेत्यवोचदाचार्य्यबुद्धिसंवादार्थं मन्दबुद्धिग्रहणव्यपोहार्थंञ्च। तथा च गर्जितमुपपन्नं भवति यो नस्तद्वेदेति ॥ ८ ॥ १ ॥ १० ॥ २ ॥

शिष्याचार्य्यसंवादात् प्रतिनिवर्त्य स्वेन रूपेण श्रुतिः समस्तसंवादनिर्वृत्तमर्थमेव बोधयति यस्यामतमित्यादिना। यस्य ब्रह्मविदोऽमतमविज्ञातं ब्रह्मेति मतमभिप्रायः निश्चयस्तस्य मतं ज्ञातं सम्यग्ब्रह्मेत्यभिप्रायः। यस्य पुनर्मतं ज्ञातं

---

स्वानुभवं कृत्वेत्यर्थः। आचार्य्यवचनादन्यदेव वचनं शिष्य उवाचेति नाशङ्कनीयमित्याह। यदेवान्यदेवेति। तथा चेत्याचार्य्यबुद्धिसंवादे सत्यर्थान्तरानभिधाने सतीत्यर्थः। अथवा हेत्वर्थं इति लोके शुक्त्यादितत्त्वं विजानतां यतोऽध्यस्तरूप्याद्यविज्ञातं भवति। अजानतामेव तु अध्यस्ताविज्ञानं भवतीति

प्रतिबोधविदितं मतममृतत्वं हि विन्दते।
आत्मना विन्दते वीर्य्यं विद्यया विन्दतेऽमृतम्॥
१२॥४॥

---

विदितं मया ब्रह्मेति निश्चयो न वेदैव स न ब्रह्म विजानाति सः। विद्वदविदुषोर्ययोक्तौ पक्षाववधारयत्यविज्ञातममतमविदितमेव ब्रह्म विजानतां सम्यग्विदितवतामित्येतद्विज्ञातं विदितं ब्रह्म विजानतामसम्यग्दर्शिनामिन्द्रियमनोबुद्धिष्वेवात्मदर्शिनामित्यर्थः। न त्वत्यन्तमेवाव्युत्पन्नबुद्धीनाम्। न हि तेषां विज्ञातमस्माभिर्ब्रह्मेति मतिर्भवति। अतीन्द्रियमनोबुद्ध्युपाधिष्वात्मदर्शिनान्तु ब्रह्मोपाधिविवेकानुपलम्भात्। बुद्ध्याद्युपाधेश्च विज्ञातत्वाद्विदितं ब्रह्मेत्युपपद्यते भ्रान्तिरित्यतोऽसम्यग्दर्शनपूर्वपक्षत्वेनोपन्यस्यते विज्ञातमविजानतामिति। अथवा हेत्वर्थ उत्तरार्द्धोऽविज्ञातमित्यादिः॥११॥३॥

अविज्ञातं विजानतामित्यवधृतम्। यदि ब्रह्मात्यन्तमेवाविज्ञातं लौकिकानां ब्रह्मविदाञ्चाविशेषः प्राप्तः। अविज्ञातं विजानतामिति च परस्परविरुद्धम्। कथन्तु तद्ब्रह्म सम्यग्विदितं भवतीत्येवमर्थमाह। प्रतिबोधविदितं बोधं

---

प्रसिद्धम्। तथा ब्रह्मणि ज्ञेयत्वस्याध्यस्तत्वादेव तत्त्वविदो न ज्ञातं ब्रह्म पश्यन्तीत्यर्थः॥९॥१॥१०॥२॥११॥३॥

ज्ञातब्रह्मत्वादर्शने ब्रह्माप्नोति कथं व्यवहरतीति चेत् किमनयेष्टकावाहकानां रत्नपेटकाचर्चितया ज्ञातम्य व्यवहाराङ्गत्वं यदतोऽपि वस्तुप्रकाशस्य व्यवहाराङ्गत्वस्येष्टत्वाद्वास्तव-

बोधं प्रति विदितम्। बोधशब्देन बौद्धाः प्रत्यया उच्यन्ते। सर्वे प्रत्यया विषयी भवन्ति यस्य स आत्मा सर्वबोधान् प्रतिबुध्यते सर्वप्रत्ययदर्शी चिच्छक्तिस्वरूपमात्रः प्रत्ययैरेव प्रत्ययेष्वविशिष्टतया लक्ष्यते नान्यद्द्वारान्तरात्मनो विज्ञानाय। अतः प्रत्ययप्रत्यगात्मतया विदितं ब्रह्म यदा तन्मतं तदा तत् सम्यग्दर्शनमित्यर्थः। सर्वप्रत्ययदर्शित्वे चोपजननापायवर्जितदृक् स्वरूपतानित्यत्वं विशुद्धस्वरूपत्वमात्मत्वं निर्विशेषतैकत्वञ्च सर्वभूतेषु सिद्धं भवेल्लक्षणभेदाभावाद् व्योम्न इव घटगिरिगुहादिषु। विदिताविदिताभ्यामन्यद् ब्रह्मेत्यागमवाक्यार्थः। एवं परिशुद्ध एवोपसंहृतो भवति। दृष्टेर्द्रष्टा श्रुतेः श्रोता मतेर्मन्ता विज्ञातेर्विज्ञातेति हि श्रुत्यन्तरम्। यदा पुनर्बोधक्रियाकर्तेति बोधक्रियालक्षणेन तत्कर्तारं विजानातीति बोधलक्षणेन विदितं प्रतिबोधविदितमिति

---

ज्ञाततानपेक्षत्वादिति व्युत्पादनाय चोद्यमुद्भावयति। अविज्ञातमित्यादिना। नीलपीताद्याकाराणां जडानां यच्चैतन्यव्याप्तत्वेनाजडवदवभासस्तं साक्षिणमुपलक्ष्य सोऽहमात्मा ब्रह्मेति महावाक्यादविषयतयैव यो वेत्ति स ब्रह्मविदुच्यते। तेन नाविशेषप्रसङ्गादि चोद्यावकाश इत्याह। प्रतिबोधविदितमिति। प्रत्येकविशिष्टतयानुगतरूपेणेत्यर्थः। येन चित्स्वरूपेणाहमत्र साक्षी तस्य सर्वत्राविशेषादेकस्मिन्नेव देहेऽहं साक्षी भेदोऽन्यत्रेत्यादीनां साक्ष्यगतत्वेन साक्षिण एकत्वनित्यत्वादिकमपि सिध्यतीत्याह। सर्वप्रत्ययदर्शित्वे चेति। विदितत्वाविदितत्वयोः साक्ष्यगतत्वेन तदन्यत्वमप्यस्मिन् पक्षे सम्भवती-

ध्याध्यायति। यथा यो वृक्षशाखाञ्चालयति स वायुरिति तद्वत्। तदा बोधक्रियागतिमानात्मा द्रव्यं न बोधस्वरूप एव। बोधस्तु जायते विनश्यति च। यदा बोधो जायते तदा बोधक्रियया सह विशेषः। यदा बोधो नश्यति तदा नष्टबोधो द्रव्यमात्रं निर्विशेषः। तत्रैवं सति विक्रियात्मकः सावयवोऽनित्योऽशुद्ध इत्यादयो दोषा न परिहर्त्तुं शक्यन्ते। यदपि काणादानामात्मनः संयोगजो बोधः आत्मनि समवैति। अत आत्मनि बोद्धृत्वं न तु विक्रियात्मक आत्मा। द्रव्यमात्रस्तु भवति घट इव रागसमवायी। अस्मिन् पक्षेऽप्यचेतनं द्रव्यमात्रं ब्रह्मेति प्रज्ञानमानन्दं ब्रह्म प्रज्ञानं ब्रह्मेत्याद्याः श्रुतयो बाधिताः स्युः। आत्मनो निरवयवत्वेन प्रदेशाभावान्नित्यसंयुक्तत्वाच्च मनसः स्मृत्युत्पत्तिनियमानुपपत्तिरपरिहार्या स्यात् संसर्गधर्मित्वञ्चात्मनः श्रुतिस्मृतिन्यायविरुद्ध-

---

त्वाद्र। विदिताविदिताभ्यामन्यदिति। एकदेशिव्याख्यानमुद्भाव्य दूषयति। यदा पुनरित्यादिना। अग्निसंयोगाद्घटलौहित्यवन्मन संयोगादसमवायिकारणादात्मन्यचेतने चैतन्यमुपपद्यत इत्येतत् दोषत्वं श्रुतिविरुद्धमसम्भावितत्वश्चेत्याह। आत्मनो निरवयवत्वेनेति। प्रदेशवता प्रदेशवतो लोके संयोगो दृष्टः। आत्मनो निष्प्रदेशत्वान्मनसा संयोगो न भवतीत्युक्तं तदयुक्तम्। युगपत् सर्वमूर्त्तसंयोगित्वं सर्वगतत्वमात्मनस्ततो मनस. संयोगोऽपीति चेत्तत्राह। नित्येति। ग्रहणकालादन्यत्र एव स्मृतीनां क्रमेणैवोत्पत्तिरिति नियमो वैशेषिकमते नोत्पद्यते ग्रहणकालेऽपि स्मृत्युत्पत्तिप्रसङ्गात् संस्कारयदात्म-

कथितं स्यात्। असङ्गो न हि सज्जते। सतां सर्वभृदिति श्रुतिस्मृती हि। न्यायश्च। गुणवद्गुणवता संसृज्यते नातुल्यजातीयम्। अतो निर्गुणं निर्विशेषं सर्वविलक्षणं केनचिदपि अतुल्यजातीयेन संसृज्यत इत्येतन्न्यायविरुद्धं भवेत्। तस्मान्नित्यालुप्तज्ञानस्वरूपज्योतिरात्मा ब्रह्मेत्ययमर्थः। सर्वबोधबोद्धृत्वे आत्मनः सिध्यति नान्यथा। तस्मात् प्रतिबोधविदितं मतमिति यथा व्याख्यात एवार्थोऽस्माभिः। यत् पुनः स्वसंवेद्यता प्रतिबोधविदितमित्यस्य वाक्यस्यार्थो वर्ण्यते तत्र भवति सोपाधिकत्वमात्मनो बुद्ध्युपाधिस्वरूपत्वेन भेदं परिकल्प्यात्मनात्मानं वेत्तीति संव्यवहारः। आत्मनैवात्मानं पश्यति स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तमेति न तु निरुपाधिकस्यात्मन एकत्वे स्वसंवेद्यता वा सम्भवति। संविदनस्वरूपत्वात्

---

मनःसंयोगस्याविशेषादित्यर्थः। सर्वगतत्वञ्च सर्वाध्यवधानमात्रं न तु संयोगित्वं कल्पनीयमित्याह। संसर्गधर्मित्वञ्चेति। न्यायविरुद्धमित्युक्तं तत् स्फुटयति। न्यायश्चेति। एकदेशिव्याख्यानान्तरमनूद्य दूषयति। यत् पुनरित्यादिना। यद् वेद्यं तद् वेदितुर्वेदनाच्च भिन्नं यथा घटादीति व्याप्तिविरोधात् स्वसंवेद्यत्वं वास्तवं नोपपद्यते ततो बुद्ध्यादावात्मभावमारोप्यात्मना तस्य वेद्यत्वं वाच्यमिति निरुपाधिकस्वरूपस्थितिर्न स्यादित्याह। तत्र भवति सोपाधिकत्वमिति। काणादस्य स्वसंवेद्यत्वानङ्गीकारबलात् परवेद्यत्वं प्रसज्जत इत्यपि न वाच्यमित्याह। संविदनस्वरूपत्वादिति। बौद्धेन स्वसंवेद्यसंविज्ञानमिष्टं तत्र किं स्यादित्यत आह। बौद्धपक्ष इति। प्रत्ययस्य वर्त्तमाना-

संवेदनान्तरापेक्षा च न सम्भवति। यथा प्रकाशप्रकाशान्तरापेक्षाया न सम्भवस्तद्वत्। बौद्धपक्षे स्वसंवेद्यतायान्तु क्षणभङ्गुरत्वं निरात्मकत्वञ्च विज्ञानस्य स्यात्। न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वात्। नित्यं विभुं सर्वगतं स एवं महानज आत्माऽजरोऽमरोऽमृतोऽभय इत्याद्याः श्रुतयो बाध्येरन्। यत् पुनः प्रतिबोधशब्देन निर्निमित्तो बोधः प्रतिबोधो यथा सुप्तस्येत्यर्थं परिकल्पयन्ति सकृद्विज्ञानं प्रतिबोध इत्यपरे। निर्निमित्तः सनिमित्तः सकृद्वाऽसकृद्वा प्रतिबोध एव हि सः। अमृतत्वममरणभावं स्वात्मन्यवस्थानं मोक्षं हि यस्माद्विन्दते लभते यथोक्तात् प्रतिबोधात् प्रतिबोधविदितात्मकात्तस्मात् प्रतिबोधविदितमेव मतमित्यभिप्रायः। बोधस्य हि प्रत्यगात्मा चात्मविषयं मतममृतत्वे

---

भासकत्वात् क्षणान्तरविशिष्टे स्वात्मनि क्षणान्तरविशिष्टं तदेव विज्ञानं ग्राह्याभिव्यञ्जकम्य न सम्भवति. अतः स्वात्मनि स्वयमेव विज्ञाने प्रत्यक्षं चेद्वर्त्तमानक्षणमात्रं सत्त्वं स्यात्। स्वसंवेद्यत्वेन साक्षिणोऽनङ्गीकारान्निरात्मत्वञ्च स्यादेव तच्छ्रुतिविरुद्धोक्तिरित्यर्थः। प्रतिबोधवाक्यस्यार्थान्तरं शङ्कते। यत् पुनरिति। ब्रह्माहमस्मीति चिन्तयतो यावच्चेतो व्यापृतिस्तावत् सम्प्रज्ञातसमाधिर्निवृत्तिचेतो व्यापारे यः परमानन्दसाक्षात्कारः सौषुप्तानन्दसाक्षात्कारवत् सोऽसम्प्रज्ञातसमाधिप्रतिबोध उच्यते। तदुक्तं वार्त्तिककृता। अपरायत्तबोधो हि निदिध्यासनमुच्यत इति। अथवा क्रियाब्रह्मात्मत्वानुभवे सति प्रमादत्वानुपपत्तौ पुनर्ज्ञानाभ्यासात् सद्यो मुक्तिकारणं सकृद्विज्ञानं प्रतिबोध उच्यते

हेतुः। न ह्यात्मनोऽनात्मत्वादात्मनोऽमृतत्वं निर्निमित्तमेव। एवं मर्त्यत्वमात्मनो यदविद्ययाऽनात्मप्रतिपत्तिः कथं पुनर्यथोक्तयाऽऽत्मविद्ययाऽमृतत्वं विन्दत इत्यत आह। आत्मना स्वेन स्वरूपेण विन्दते लभते वीर्यं बलं सामर्थ्यं धनसहायमन्त्रौषधितपोयोगकृतं वीर्यं मृत्युं न शक्नोत्यभिभवितुमनित्यवस्तुकृतत्वात्। आत्मविद्याकृतं तु वीर्यमात्मनैव विन्दते नान्येनेत्यतोऽनन्यसाधनत्वादात्मविद्यावीर्यस्य तदेव वीर्यं मृत्युं शक्नोत्यभिभवितुम्। यत एवमात्मविद्याकृतं वीर्यमात्मनैव विन्दतेऽतो विद्ययाऽऽत्मविषयया विन्दतेऽमृतं नाय-

---

सकृत् प्रवृत्त्या मृदु नातिक्रियाकारकरूपभेदज्ञानमागमज्ञानसाध्यत्वं नास्त्यतोऽनयोरिति पक्षद्वयेऽप्यरुचिमाह। निर्निमित्त इति। अयमाशयस्तावदविद्यानिवर्त्तकस्याद्वन्तकस्य बोधस्य निर्निमित्तत्वं सम्भवति कार्य्यस्य सनिमित्तत्वव्याप्तेः। सौषुप्तस्यापि न निर्निमित्तत्वमविद्यायाः पूर्वपूर्वनिरोधावस्थासंस्कारोद्भूतसाहाय्यस्याभिव्यक्तचैतन्यस्य तत्र सुखसाक्षात्कारोपगमादत एव वृत्तिविशिष्टस्य विनाशे स्मरणमुपपद्यते। अत्रापि सम्यग्वृत्तिसंस्कारप्रचयान्निवृत्तेऽपि चित्ते ब्रह्माभिव्यक्तं स्यादिति चेन्न। तथा सत्यप्रमात्वेन विनष्टपुनापरोक्षादावविद्यानिवृत्तिर्न स्याच्छब्दज्ञानसम्भवात् प्रमात्वे परतन्त्रत्वप्रसङ्गः शब्दमूलत्वात् प्रमात्वेन निर्निमित्ततेति प्रवृत्तकर्मफलप्रतिबन्धाद्वर्त्तमानप्रमात्वाभासानिवृत्तेरसङ्गबोधोऽपि पक्षद्वयेऽपि नादरः सर्वथापि परमात्मा प्रतिबोध एव बोधं प्रति बोधं प्रति साक्षितया भातीति॥ लक्ष्यपदार्थविवेचनपूर्वकं महावाक्योत्थं परमात्मास्मीति ज्ञानमेव सम्यग्ज्ञानं यस्मात्तत एवामृतत्वं लभते

इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीत्

मात्मा बलहीनेन लभ्य इत्याथर्वणे। अतः समर्थो हितुः अमृतत्वं विन्दत इति ॥ १२ ॥ ४ ॥

कष्टा खलु सुरनरतिर्यक्प्रेतादिषु संसारदुःखबहुलेषु प्राणिनिकायेषु जन्मजरामरणरोगादिसम्प्राप्तिरज्ञानादत इहैव चेन्मनुष्योऽधिकृतः समर्थः सन् यद्यवेदीदात्मानं यथोक्तलक्षणं विदितवान् यथोक्तेन प्रकारेणाय तदास्ति सत्यं मनुष्यजन्मन्यस्मिन्नविनाशोऽर्थवत्ता वा सद्भावो वा परमार्थता वा सत्यं विद्यते न चेदवेदीदिति। न चेदिह जीवंश्चेदधिकृतोऽवेदीन्न विदितवान् तदा महती दीर्घाऽनन्ता विनष्टिर्विनाशनं जन्मजरामरणादिप्रबन्धाविच्छेदलक्षणा संसारगति-

इत्याह। अमृतत्वमिति॥ उक्तमर्थं मह्निम्याह। बोधस्य हीति॥ बुद्धिपरिणामस्य सर्वस्य भासकं प्रत्यक्चैतन्यं परमात्मा न भवति किन्तु ब्रह्माण्डाद्बहिःस्थितस्तत्प्राप्तिश्च मोक्ष इत्याशङ्क्याह। न हीति॥ अनात्मप्राप्तिकर्मफलवदनित्यत्वेनामृतत्वप्रसिद्धिर्न स्यादित्यर्थः। यदुक्तं दोषपरिहाराय औपाधिकभेदेन भिन्नत्वं ब्रह्मणः स्वतः स्वात्मत्वमेवेति मन्यसे तत्राह। आत्मत्वादिति॥ ब्रह्मण आत्मत्वादेवात्मनोऽमृतत्वं स्वभावसिद्धं तर्हि विद्याया आनर्थक्यं प्राप्तमित्याशङ्क्याह। एवं मर्त्यत्वमिति। अविद्यया देहाद्यात्मत्वप्रतिपत्तिरिति यत्तदात्मनो मर्त्यत्वं तन्निवृत्तिर्विद्याफलमित्यर्थः॥ १२ ॥ ४ ॥

वीर्यं विद्याकृतममृतम्। मुक्तत्वे दार्ढ्यं तच्च स्वाभाविकमेव मुक्तत्वं वास्तवं सर्वशरीराद्यसंसर्गित्वाद्विभोर्निरवयवत्वादेव। तेनाहं नित्यमुक्त एवाहमित्यवष्टम्भो विद्याकृतं बलमित्यर्थः॥

महती विनष्टिः । भूतेषु भूतेषु विचिन्त्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति ॥ १३ ॥ ५ ॥

द्वितीयः खण्डः ॥ २ ॥

ब्रह्म ह देवेभ्यो विजिग्ये तस्य ह ब्रह्मणो

---

स्तस्मादेव गुणदोषौ विजानन्तो ब्रह्मणो भूतेषु भूतेषु सर्वभूतेषु स्थावरेषु चरेषु चैकमात्मतत्त्वं विचिन्त्य विज्ञाय साक्षात्कृत्य धीरा धीमन्तः प्रेत्य व्यावर्त्य ममाहं भावलक्षणादविद्यारूपादस्माल्लोकादुपरम्य सर्वात्मैकत्वभावमद्वैतमापन्नाः सन्तोऽमृता भवन्तीत्यर्थः । स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवतीति श्रुतेः ॥ १३ ॥ ५ ॥ इति द्वितीयः खण्डः ॥ २ ॥

ब्रह्म ह देवेभ्यो विजिग्येऽविज्ञातं विजानतां विज्ञातमविजानतामित्यादिश्रवणाद्यदस्ति तद्विज्ञातं प्रमाणैर्यन्नास्ति तदविज्ञातं शशविषाणकल्पमत्यन्तमेवासदृष्टम् । तथेदं ब्रह्माविज्ञातत्वादसदेवेति मन्दबुद्धीनां व्यामोहो माभूदिति

---

उत्तरवाक्यस्यापेक्षितमर्थमाह । कष्टा खल्विति ॥ लौकिकमपि सत्यं चिरं जीवनधनवत्त्वं महायः साधुभावः ख्यातिः । एतदपि सर्वं ब्रह्मविदो भवन्तीति स्तुत्यर्थमुच्यते परमार्थतो ब्रह्मरूपस्थितिस्तु फलमवश्यम्भवतीत्यर्थः ॥ १३ ॥ ५ ॥ द्वितीयः खण्ड. समाप्त. ॥ २ ॥

उत्तरग्रन्थस्य प्रतीकमादाय तात्पर्यमाह । ब्रह्मेत्यादिना ॥ अभिमतं तात्पर्यमाह । वक्ष्यमाणेति ॥ उत्तमाधिकारिणो-

विजये देवा अमहीयन्त त ऐक्षन्तास्माकमेवायं विजयोऽस्माकमेवायं महिमेति॥ १४॥ १॥

---

तदर्थेयमाख्यायिकाऽऽरभ्यते। तदेव हि ब्रह्म सर्वप्रकारेण प्रशास्तृ देवानामपि परो देव ईश्वराणामपीश्वरो दुर्विज्ञेयो देवानां जयहेतुरसुराणां पराजयहेतुस्तत्कथनास्तीत्येतस्यार्थस्यानुकूलानि ह्युत्तराणि वचांसि दृश्यन्ते। अथवा ब्रह्मविद्यायाः स्तुतये। कथं ब्रह्मविज्ञानाद्ध्यग्न्यादयो देवानां श्रेष्ठत्वं जग्मुस्ततोऽप्यतितरामिन्द्र इति। अथवा दुर्विज्ञेयं ब्रह्मेत्येतत् प्रदर्श्यते। येनाग्न्यादयोऽतितेजसोऽपि क्लेशेनैव ब्रह्म विदितवन्तस्तथेन्द्रो देवानामीश्वरोऽपि सन्निति वक्ष्यमाणोपनिषद्विधिपरं वा सर्वं ब्रह्मविद्याव्यतिरेकेण प्राणिनां कर्तृत्वाद्यभिमानो मिथ्येतद्दर्शनार्थं वाऽऽख्यायिका। यथा देवानां जयाद्यभिमानस्तद्वदिति। ब्रह्म यथोक्तलक्षणं परं ह किल देवेभ्योऽर्थ विजिग्ये जयं लब्धवद्देवानामसुराणां चेश्वरामेऽसुरान् जित्वा जगदरातीनीश्वरसेतुभेत्तॄन् देवेभ्यो जयं तत् फलञ्च प्रायच्छत् जगतः स्थैर्याय। तस्य ह किल ब्रह्मणो विजये देवा अग्न्यादयो महीयन्तो महिमानं प्राप्नुवन्तस्तदात्मसंस्थस्य प्रत्यगात्मन ईश्वरस्य सर्वज्ञस्य सर्वक्रियाफलसंयोजयितुः प्राणिनां सर्वशक्तेर्जगतः स्थितिं चिकीर्षोरयं जयो महिमा चेत्यजानन्तस्ते देवा

---

परमविषयं ब्रह्मात्मताज्ञानं पूर्वत्रोक्तमुत्तरत्र तु मन्दाधिकारिगोचरं सगुणब्रह्मोपासनं वक्ष्यते तत्परं वक्ष्यमाणं सर्ववाक्यजात-

तद्धैषां विजज्ञौ तेभ्यो ह प्रादुर्बभूव तन्न व्यजानन्त किमिदं यक्षमिति ॥ १५ ॥ २ ॥

ते८ग्निमब्रुवन् जातवेद एतद्विजानीहि

---

ऐक्षन्त ईक्षितवन्तोऽग्न्यादिस्वरूपपरिच्छिन्नात्मकृतोऽस्माकमेवायं विजयोऽस्माकमेवायं महिमाऽग्निवाय्विन्द्रत्वादिलक्षणो जयफलभूतोऽस्माभिरनुभूयते नास्मत्प्रत्यगात्मभूतेश्वरकृत इत्येवं मिथ्याभिमानेक्षणवतां तद्ध किलैषां मिथ्येक्षणं विजज्ञौ विज्ञातवत् ब्रह्म । सर्वेक्षितृ हि तत्सर्वभूतकरणप्रयोक्तृत्वाद् देवानाञ्च मिथ्याज्ञानमुपलभ्यमेवासुरवन्मिथ्याभिमानात् पराभवेयुरिति तदनुकम्पया देवान् मिथ्याभिमानापनोदनेनानुगृह्णीयामिति तेभ्यो देवेभ्यो ह किलार्थाय प्रादुर्बभूव स्वयोगमाहात्म्यनिर्मितेनात्यद्भुतेन विस्मापनीयेन रूपेण देवानामिन्द्रियगोचरे प्रादुर्बभूव । तत् प्रादुर्भूतं ब्रह्म न व्यजानन्त नैव विज्ञातवन्तो देवाः । किमिद पूज्यं महद्भूतमिति ॥ १४ ॥ १५ ॥ २ ।

ते तदजानन्तो देवाः सान्तर्भयास्तद्विजिज्ञासवोऽग्निमग्रगामिनं जातवेदसं सर्वज्ञकल्पमब्रुवन्नुक्तवन्तो हे जातवेद

---

सष्टविधिदर्शनादतोऽत्रैव तात्पर्यमर्थान्तरतात्पर्यप्रदर्शनन्तु सम्भावनामात्रेणेति द्रष्टव्यम् । ईश्वरस्य सेतवो मर्यादा वर्णाश्रमादिधर्मास्तद्भेदकान् जगतः सोमे स्थैर्याय सत्त्वरजस्तमसां त्रयाणां गुणानां योगो युक्तिर्घटनमाया सम्भावामोनित्यर्थः ॥ १४ ॥ १ ॥ १५ ॥ २ ॥

तृतीयखण्डभाष्य सष्टमतो न विवृतमिति ॥

किमेतद्यक्षमिति तथेति ॥ १६ ॥ ३ ॥ तदभ्यद्रवत्तमभ्यवदत् कोऽसीति अग्निर्वा अहमस्मीत्यब्रवीज्जातवेदा वा अहमस्मीति ॥ १७ ॥ ४ ॥ तस्मिंस्त्वयि किं वीर्य्यमित्यपीदं सर्वं दहेयं यदिदं पृथिव्यामिति ॥ १८ ॥ ५ ॥ तस्मै तृणं निदधावेतद्दहेति तदुपप्रेयाय सर्वजवेन तन्न शशाक दग्धुं स तत एव निववृते नैतदशकं विज्ञातुं यदेतद्यक्षमिति ॥ १९ ॥ ६ ॥

---

एतदस्मद्गोचरस्थं यक्षं विजानीहि विशेषतो बुध्यस्व त्वं नस्तेजस्वी किमेतद्यक्षमिति । तथास्त्विति । तद्यक्षमभ्यद्रवत् तत्प्रतिगतवानग्निः । तञ्च गतवन्तं पिपृच्छिषुं तत्समीपेऽप्रगल्भत्वात् तूष्णीम्भूतं तद्यक्षमभ्यद्रवदग्निं प्रत्यभाषत कोऽसीति । एवं ब्रह्मणा पृष्टोऽग्निरब्रवीदग्निर्वै अग्निनामाहं प्रसिद्धो जातवेदा इति च । नामद्वयेन प्रसिद्धतयात्मानं श्लाघयन्निति । एवमुक्तवन्तं ब्रह्मावोचत् तस्मिन्नेवं प्रसिद्धगुणनामवति त्वयि किं वीर्य्यं सामर्थ्यमिति । सोऽब्रवीदिदं जगत् सर्वं दहेयं भस्मीकुर्य्याम् । यदिदं स्थावरादि पृथिव्यामिति । पृथिव्यामित्युपलक्षणार्थं यतोऽन्तरिक्षस्थमपि दह्यत एवाग्निना । तस्मै एवमभिमानवते ब्रह्म तृणं निदधौ पुरोऽग्नेः स्थापितवदित्यर्थः तत् तृणमात्रं ममाग्रतो दह न चेदस्य दग्धुं समर्थो मुञ्च दग्धृत्वाभिमानं सर्वत्रेत्युक्तः तत् तृणमुपप्रेयाय तृणसमीपं गत्वा सर्वजवेन

अथ वायुमब्रुवन् वायवे तद्विजानीहि किमेतद्यक्षमिति तथेति ॥ २० ॥ ७ ॥ तदभ्यद्रवत्तमभ्यवदत् कोऽसीति वायुर्वा अहमस्मीत्यब्रवीन्मातरिश्वा वा अहमस्मीति ॥ २१ ॥ ८ ॥ तस्मिंस्त्वयि किं वीर्य्यमित्यपीदं सर्वमाददीयं यदिदं पृथिव्यामिति ॥ २२ ॥ ९ ॥ तस्मै तृणं निदधावेत-

---

सर्वोत्साहकृतेन गत्वा न शशाक नाशयाद्दग्धुं स जातवेदास्तृणं दग्धुमशक्तो व्रीडितो हतप्रतिज्ञस्तत एव यक्षादेव तूष्णीं देवान् प्रतिनिववृते निवृत्तः प्रतिगतवान् नैतद्यक्षमशकं शक्तवानहं विज्ञातुं विशेषतो यदेतद्यक्षमिति ॥ १६ ॥
॥ ३ ॥ १७ ॥ ४ ॥ १८ ॥ ५ ॥ १९ ॥ ६ ॥

अथ वायुमित्यथानन्तरं वायुमब्रुवन् हे वायो एतद्विजानीहि इत्यादि समानार्थं पूर्वेण। वानाद् गमनाद् गन्धनाद् वायुः। मातर्य्यन्तरिक्षे श्वयतीति मातरिश्वा। इदं सर्वमप्याददीयं गृह्णीयाम्। यदिदं पृथिव्यामित्यादि समानमेव। अथेन्द्रमित्यथेन्द्रमब्रुवन्मघवन्नेतद्विजानीहि इत्यादि पूर्ववदिन्द्रः परमेश्वरो मघवान् बलवत्त्वात्तथेति तदभ्यद्रवत्तस्मादिन्द्रादात्मसमीपगतात्तद्ब्रह्म तिरोदधे तिरोभूतमिन्द्रत्वाभिमानोऽतितरां निराकर्त्तव्य इत्यतः संवादमात्रमपि नाददाद्ब्रह्मेन्द्राय तद्यक्षं यस्मिन्नाकाशे आकाशप्रदेशे आत्मानं दर्शयित्वा तिरोभूतमिन्द्रश्च ब्रह्मणस्तिरोधानकाले यस्मिन्नाकाशे आसीत् स इन्द्रस्तस्मिन्नेवाकाशे तस्थौ। किं

दादत्स्वेति तदुपप्रेयाय सर्वजवेन तन्न शशाकादातुं स तत एव निववृते नैतदशकं विज्ञातुं यदेतद्यक्षमिति ॥ २३ ॥ १० ॥ अथेन्द्रमब्रुवन्मघवन्नेतद्विजानीहि किमेतद्यक्षमिति तथेति तदभ्यद्रवत्तस्मात्तिरोदधे ॥२४॥११॥ स तस्मिन्नेवाकाशे स्त्रियमाजगाम बहुशोभमानामुमां हैमवतीं तां होवाच किमेतद्यक्षमिति ॥२५॥१२॥

तृतीयः खण्डः समाप्तः ॥ ३ ॥

सा ब्रह्मेति होवाच ब्रह्मणो वा एतद्विजये महीय

---

तद्यक्षमिति ध्यायन्न निववृतेऽग्न्यादिवत्तस्येन्द्रस्य यक्षे भक्तिं बुद्धा विद्या उमारूपिणी प्रादुरभूत् स्त्रीरूपा। स इन्द्रस्तामुमां बहुशोभमानां सर्वेषां हि शोभमानानां शोभनतमां विद्यां तदा बहुशोभमानेति विशेषणमुपपन्नं भवति। हैमवतीं हेमकृताभरणवतीमिव बहुशोभमानामित्यर्थः। अथवा उमैव हिमवतो दुहिता हैमवती नित्यमेव सर्वज्ञेन ईश्वरेण सह वर्त्तत इति ज्ञातुं समर्था इति कृत्वा तामुपजगाम इन्द्रस्तां ह उमां किलोवाच पप्रच्छ ब्रूहि किमेतद्दर्शयित्वा तिरोभूतं यक्षमिति ॥ २० ॥ ७ ॥ २१ ॥ ८ ॥२२॥ ९ ॥ २३ ॥ १० ॥ २४ ॥ ११ ॥ २५ ॥ १२ ॥ इति तृतीयखण्डभाष्यम् ॥ ३ ॥

सा ब्रह्मेति होवाच ह किल ब्रह्मण ईश्वरस्यैव विजये

ध्वमिति ततो हैव विदाञ्चकार ब्रह्मेति ॥ २६ ॥ १ ॥ तस्माद्वा एते देवा अतितरामिवान्यान् देवान् यदग्निर्वायुरिन्द्रस्ते ह्येनन्नेदिष्ठं पस्पर्शुस्ते ह्येनत् प्रथमो विदाञ्चकार ब्रह्मेति ॥२७॥ २ ॥ तस्माद्वा इन्द्रोऽतितरामिवान्यान् देवान् स ह्येनन्नेदिष्ठं पस्पर्श स ह्येनत् प्रथमो विदाञ्चकार ब्रह्मेति ॥ २८ ॥ ३ ॥

---

ईश्वरेणैव जिता असुरा यूयं तत्र निमित्तमात्रं तस्यैव विजये यूयं महीयध्वं महिमानं प्राप्नुथ। एतदिति क्रियाविशेषणार्थम्। मिथ्याभिमानस्तु युष्माकमेष महिमेति। ततस्तस्मादुमावाक्याद एव विदाञ्चकार ब्रह्मेतीन्द्रोऽवधारणात्ततो हैवेति न स्वातन्त्र्येण। यस्मादग्निवाय्विन्द्रा एते देवा ब्रह्मणः संवाददर्शनादिना समीपमुपगतास्तस्मादैश्वर्यगुणैरतितरामिव शक्तिगुणादिमहाभाग्यैरन्यान् देवानतितरामतिशयेन शेरते इवैते देवाः। इवशब्दोऽनर्थकोऽवधारणार्थो वा। यदग्निर्वायुरिन्द्रस्ते हि देवा यस्मादेतद्ब्रह्म नेदिष्ठमन्तिकं समीपं प्रियतमं पस्पर्शुः स्पृष्टवन्तो यथोक्तैर्ब्रह्मणः संवादादिप्रकारैस्ते हि यस्माच्च हेतोरेनद्ब्रह्म प्रथमः प्रथमाः प्रधानाः सन्त इत्येतद्विदाञ्चकार विदाञ्चक्रुरित्येतद्ब्रह्मेति। यस्मादग्निवायू अपीन्द्रवाक्यादेव विदाञ्चक्रतुः इन्द्रेण ह्युमावाक्यात् प्रथमं श्रुतं ब्रह्मेत्यतस्तस्माद्वै इन्द्रोऽतितरामतिशयेन

तस्यैष आदेशो यदेतद्विद्युतो व्यद्युतदा इतीति न्यमीमिषदा इत्यधिदैवतम् ॥ २६ ॥ ४ ॥

शैत इतरान्यान् देवान् स ह्येनन्नेदिष्ठं पस्पर्श यस्मात् सं ह्येनत् प्रथमो विदाञ्चकार ब्रह्मेत्युक्तार्थं वाक्यम् ॥२६॥ १ ॥ २७ ॥ २ ॥ २८ ॥ ३ ॥

तस्य प्रकृतस्य ब्रह्मण एष आदेश उपमोपदेशो निरुपमस्य ब्रह्मणो येनोपमानेनोपदेशः सोऽयमादेश इत्युच्यते। किन्तद्यदेतत् प्रसिद्धं लोके विद्युतो व्यद्युतद्विद्योतनं कृतवदित्येतदनुपपन्नमिति। विद्युतो विद्योतनमिति कल्प्यते। आ इत्युपमार्थे। विद्युतो विद्योतनमिवेत्यर्थः। यथा सकृद्विद्युतमिति श्रुत्यन्तरे च दर्शनाद्विद्युदिव हि सकृदात्मानं दर्शयित्वा तिरोभूतं ब्रह्मदेवेभ्योऽथवा विद्युतस्तेज इत्याध्याहार्यं व्यद्युतद्विद्योतितवत् आ इव विद्युतस्तेजः सकृद्विद्योतितवदित्यभिप्रायः। इति शब्द आदेशप्रतिनिर्देशार्थ इत्ययमादेश इति। इतिशब्दः समुच्चयार्थः। अयञ्चापरस्तस्या-

---

विद्युतः सकाशाद्विद्योतनं कृतवदित्यनुपपन्नं ब्रह्मणः सर्वज्योतिष्ट्वात् पराधीनप्रकाशानुपपत्तेर्विद्युत्सम्बन्धि द्योतनं कृतवदित्यनुपपन्नमन्याश्रयस्य विद्योतनस्यान्यकर्तृत्वानुपपत्तेरतो तथा श्रुतासम्भवादन्यत्र तात्पर्यं वक्तव्यमित्यर्थः प्रतिनिर्देशार्थ इति परामर्शार्थः। चक्षुषो निमिषणं द्रुतं भवतीति प्रसिद्धं तद्वद्ब्रह्मणि चिप्रकारित्वं सृष्ट्यादौ प्रतिबन्धाभावेनोपासना-

अथाध्यात्मं यदेतद् गच्छतीव च मनोऽनेन चैत-
दुपस्मरत्यभीक्ष्णं सङ्कल्पः ॥ ३० ॥ ५ ॥ तद्ध तद्-
वनं नाम तद्वनमित्युपासितव्यं स य एतदेवं

---

देशः । कोऽसौ न्यमीमिषत् । यथा चक्षुर्न्यमीमिषदिति स्वार्थे णिच् । उपमार्थे एवकारः । चक्षुषो विषयं प्रति प्रकाशतिरोभाव इव चेत्यर्थः । इत्यधिदैवतं देवताविषयं ब्रह्मण उपमानदर्शनम् ॥ २८ ॥ ४ ॥

अथानन्तरमध्यात्मं प्रत्यगात्मविषयमादेश उच्यते । तदेतद् गच्छतीव च मन एतद्ब्रह्म ढौकत इव विषयीकरोतीव यथाऽनेन मनसा एतद्ब्रह्मोपस्मरति समीपतः स्मरति साधकोऽभीक्ष्णं भृशं सङ्कल्पश्च मनसो ब्रह्मविषयो मन उपाधिकत्वाद्धि मनसः सङ्कल्पस्मृत्यादिप्रत्ययैरभिव्यज्यते ब्रह्म विषयीक्रियमाण इव वातः स एष ब्रह्मणोऽध्यात्ममादेशो विद्युन्निमेषणवदधिदैवतं द्रुतं प्रकाशनधर्म्मि अध्यात्मञ्च मनःप्रत्ययसमकालाभिव्यक्तिधर्म्मीत्येष आदेशः । एवमादि-

---

भावेन च द्रुतकारित्वं धर्म्मः अधिदैवतं यदेवं ब्रह्मरूपं तद्यथा विद्युतः प्रकाशो युगपद्विश्वव्यापकस्तथा निरतिशयज्योतीरूपं द्रुतं सकलसृष्ट्यादिकारि परमैश्वर्य्यसम्पन्नमित्युपमानोपदेशेनोक्तम् ॥ २६ ॥ १ ॥ २७ ॥ २ ॥ २८ ॥ ३ ॥ २८ ॥ ४ ॥

अधुना प्रत्यगात्मतया ब्रह्मणो यथाभिव्यक्तिः स्यात्तथोपदिश्यत इत्याह । अथानन्तरमिति । एतत्प्रकृतज्योतीरूपं ब्रह्म

वेदाऽभि हैमं सर्वाणि भूतानि संवाञ्छन्ति
॥ ३१ ॥ ६ ॥
उपनिषदं भो ब्रूहीत्युक्ता त उपनिषद् ब्राह्मीं

---

श्यमानं हि ब्रह्म मन्दबुद्धिगम्यं भवतीति ब्रह्मण आदेशोपदेशः। न हि निरुपाधिकमेव ब्रह्म मन्दबुद्धिभिराकुलयितुं शक्यम्। किञ्च तद्‌ब्रह्म ह किल तद्वनं नाम तस्य वनं तद्वनं तस्य प्रणिजातस्य प्रत्यगात्मभूतत्वाद्वननीयं सम्भजनीयमतस्तद्वनं नाम प्रख्यातं ब्रह्म तद्वनमिति यतस्तस्मात्तद्वनमित्यनेनैव गुणाभिधानेनोपासितव्यं चिन्तनीयमित्यनेन नाम्नोपासकस्य फलमाह। स यः कश्चिदेतद्यथोक्तं ब्रह्मैवं यथोक्तगुण वेदोपास्ते ह एवमुपासकं सर्वाणि भूतान्यभिसंवाञ्छन्ति ह प्रार्थयतः एव यथा ब्रह्म एवमनुशिष्टः शिष्य आचार्यमुवाच ॥ ३० ॥ ५ ॥ ३१ ॥ ६ ॥

उपनिषदं रहस्यं यच्चिन्त्यं भो भगवन् ब्रूहीत्येवमुक्तवति

---

प्रति मदीय मनो गच्छद्वर्तत इति चिन्तयेदित्युपदेशः। स आध्यात्मिकोऽभीक्ष्णं पौनःपुन्येन मम मनसः सङ्कल्पो ब्रह्मविषय एवेति ध्यायतः प्रत्यग्भूतब्रह्माभिव्यक्तिः स्यादित्याह। मन उपाधिकत्वाद्वेति। उक्तमर्थं सङ्क्षिप्याह। विद्युन्निमिषणवदिति। सगुणब्रह्मोपासनमैश्वर्यफलकमुक्तम्। तत्र विरक्त उत्तमाधिकारी परमरहस्यं पृच्छतीत्याह। एवमनुशिष्ट इति ॥ ३० ॥ ५ ॥ ३१ ॥ ६ ॥

वाव त उपनिषदमब्रूमेति ॥ ३२ ॥ ७ ॥ तस्यै तपो दमः कर्म्मेति प्रतिष्ठा वेदाः सर्वाङ्गानि

---

शिष्ये आह आचार्य्यः । उक्ताभिहिता ते तवोपनिषत् । का पुनः सेत्याह । ब्राह्मीं ब्रह्मणः परमात्मन इयत्तां परमात्मविषयत्वादतीतविज्ञानस्य वाव एव ते उपनिषदमब्रूमेत्युक्तमेव परमात्मविद्यामुपनिषदमब्रूमेत्यव धारयत्युत्तरार्थम् । परमात्मविषयामुपनिषदं श्रुतवत उपनिषदं मे ब्रूहीतीच्छतः शिष्यस्य कोऽभिप्रायः । यदि तावच्छ्रुतस्यार्थस्य प्रश्नः कृतस्ततः पिष्टपेषणवत् पुनरुक्तोऽनर्थकः प्रश्नः स्यादसावशेषोक्तोपनिषत्कात्ततस्तस्याः फलवचनेनोपसंहारो न युक्तः प्रेत्यास्माल्लोकादमृता भवन्तीति । तस्मादुक्तोपनिषच्छेषविषयोऽपि प्रश्नोऽनुपपन्न एवानवशेषितत्वात् । कस्तर्ह्यभिप्राय. प्रष्टुरित्युच्यते । किं पूर्वोक्तोपनिषच्छेषतया तत्सहकारिसाधनान्तरापेक्षा । अथ निरपेक्षैव सापेक्षितविषयामुपनिषदं ब्रूहि । अथ निरपेक्षा चेदवधारय पिप्पलादवन्नातः

---

परमरहस्यं ज्योतिमित्यादिनोक्तमेवोत्तरार्थमित्युत्तरग्रन्थेन विद्या प्राप्त्युपाय विधानार्थमुक्ता विद्यानिरपेक्ष चेत्यवधारयति । अवधारणार्थ प्रतिवचनस्य चोद्यमुखेन स्फु्टयति । परमात्मविषयामित्यादिना । किं पूर्वोक्तोपनिषच्छेषतयान्यदपेक्ष्यते । शेषशब्देन फलोपकार्य्यङ्गं विवक्षितम् । सहकारिशब्देनानुष्ठमशनमपि समुच्चयार्थं विवक्षितम् । एवं वेदवेदाङ्गे. शिष्याभिप्राय-०

सत्यमायतनम् ॥ ३३ ॥ ८ ॥ यो वा एतामेवं

परमस्तीत्येवमभिप्रायः। एतदुपपन्नमाचार्यस्यावधारणवचन-
मुक्ता त उपनिषदिति। ननु नावधारणमिदं यतोऽन्यदु
वक्तव्यमित्याह। तस्यै तपोदम इत्यादि सत्यं वक्तव्यमुच्यते
आचार्येण न तूक्तोपनिषच्छेषतया तत्सहकारिसाधनान्तरा-
भिप्रायेण वा। किन्तु ब्रह्मविद्याप्राप्युपायाभिप्रायेण वेदै-
स्तदङ्गैश्च सह पाठेन समीकरणात् तपःप्रभृतीनाम्। न
हि वेदानां शिक्षाद्यङ्गानाञ्च साक्षाद् ब्रह्मविद्याशेषत्वं तत्-
सहकारिसाधनं वा सहपठितानामपि यथायोग्यं विभज्य
विनियोगः स्यादिति चेद्यथा सूक्तवाकानुमन्त्रणमन्त्राणां
यथा दैवत् विभागस्तथा तपो दमः कर्म सत्यादिनां ब्रह्म-
विद्याशेषत्वं तत्सहकारिसाधनत्वं वेति कल्प्यते। वेदानां
तदङ्गानाञ्चार्थप्रकाशकत्वेन कर्मात्मज्ञानोपायत्वमित्येवं ह्ययं
विभागो युज्यते। अर्थसम्बन्धोपपत्तिसामर्थ्यादिति चेत्।
नायुक्तेः। न ह्ययं विभागो घटनां प्राञ्चति। न हि सर्व-
क्रियाकारकफलभेदबुद्धितिरस्कारिण्या ब्रह्मविद्यया: शेषा-
पेक्षा सहकारिसाधनसम्बन्धो वा युज्यते। सर्वविषयव्या-
वृत्तप्रत्यगात्मविषयनिष्ठत्वाच्च ब्रह्मविद्यायास्तत्फलस्य च

मुपपत्त्या समाधानमाह। एतदुपपन्नमिति। विद्याङ्गत्वहीनैरिति-
पाठात्तप प्रभृतीनां विद्याङ्गत्व नास्तीत्युक्तम्। तत्र योग्यतावशेन
शेषशेषीभावः सहपाठस्त्वकिञ्चित्कर इति शङ्कते। सहपठिता-
नामपीति। अग्निरिदं हविरजुषत अवीवृधत महो ज्यायो-

चतुर्थः खण्डः समाप्तः ॥ ४ ॥ इति सामवेदीय-तलवकारोपनिषत् समाप्ता ॥ ओं तत्सत् ॥

---

चेति श्रुतेः। तस्मात् सत्यमायतनमिति कल्प्यते। तप आदिष्वेव प्रतिष्ठात्वेन प्राप्तस्य सत्यस्य पुनरायतनत्वेन ग्रहणं साधनातिशयत्वज्ञापनार्थम्। अश्वमेधसहस्रञ्च सत्यञ्च तुलया धृतम्। अश्वमेधसहस्राद्धि सत्यमेकं विशिष्यत इति स्मृतेः। यो वै एतां ब्रह्मविद्यां केनेषितमित्यादिना यथोक्तामेवं महाभागां ब्रह्म ह देवेभ्य इत्यादि स्तुतां सर्वविद्याप्रतिष्ठां वेदामृतत्वं हि विन्दत इत्युक्तमपि ब्रह्मविद्याफलमन्ते निगमयति। अपहत्य पाप्मानमविद्याकामकर्मलक्षणं संसारबीजं विधूयानन्तेऽपर्यन्ते स्वर्गे लोके सुखात्मके ब्रह्मणीत्येतदनन्ते इति विशेषणान्न त्रिविष्टपेऽनन्तशब्द औपचारिकोऽपि स्यादित्यत आह। ज्येये इति। ज्येये ज्यायसि सर्वमहत्तरे स्वात्मनि

---

फलस्य च कर्मवैलक्षण्यादित्यर्थः। तच्छब्दापेक्षितं यच्छब्दं पूरयति। यामिमामिति। प्राप्तां सगुणविषयां निर्गुणब्रह्मात्मविषयाञ्चेत्यर्थः। पादरूपकल्पनेति प्रसिद्धपादसामान्यस्य कल्पितत्वादितरैरप्यङ्गैः कल्पनारूपैर्भवितव्यमित्यर्थः। तस्यै तपो दमः कर्मेत्यत्रेतिशब्दस्योपलक्षणार्थत्वात् सत्यमपि संग्रहीतव्यं चार्थं पृथगुच्यत इत्याशङ्क्याह। तप आदिष्वेवेति। सगुणविद्यया क्रममुक्त्यर्थत्वात् क्रमेण प्राप्यं यत् कैवल्यं निर्गुणविद्याफलं तत्पूर्वोक्तासिद्धोपसङ्क्रियते इत्याह। यो वै एतामित्यादिना। योऽसौ सर्वज्ञो विष्णुः सर्वात्मा सर्वदर्शनः।

मुख्य एव प्रतीतः । न पुनः संसारमापद्यत इत्यभिप्रायः ॥
॥२ ॥ ७ ॥ ३३ ॥ ८ ॥ ३४ ॥ ९ ॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यपरमहंसपरिव्राजकाचार्यस्य श्रीशङ्करभगवतः कृतौ तलवकारोपनिषत्पदभाष्यं समाप्तम् ॥

---

बोधाम्बुधिः साक्षात् सोऽहं नित्यात्मकः प्रभुः ॥ ३२ ॥ ७ ॥
॥ ८ ॥ ३४ ॥ ९ ॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यश्रीमदानन्दज्ञानकृतायां श्रीमच्छाङ्करतलवकारोपनिषद्भाष्यटिप्पणं सम्पूर्णम् ॥



---

प्रकाशक—श्रीभुवनचन्द्र बसाक
८ नं० निमतलाघाट ष्ट्रीट् ।
प्रिण्टर—श्रीरामनारायण पाल
१६ नं० नूतन पटीयापटी, नारायणयन्त्र ।